वर्णेष्वपि सत्त्वात् प्रत्येकस्योऽर्थबोधापत्तिः । अनेकव्यक्त्यभिव्यङ्ग्यमात्रेण स्फोटत्वेनाभिधानात्, वर्णस्फोटपक्षे कथितदोषस्तोऽपि पदवाक्ययोर्नाधिम्, तस्या व्यासज्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वादिति निष्कर्षः । ननु का सा जातिरिति चेत्, अत्राहुः—" सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥ सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥ १ ॥ " इति । अत्र ब्रूमः ॥ अस्तु स्फोटेषु शतभिन्नको जातिरूपवाक्यस्फोट एव व्यापकतया वैयाकरणैरिष्यते, स चानेकव्यक्त्यभिव्यङ्ग्या जातिः, तत्त्वं चानेकव्यक्तिज्ञानजन्यज्ञानविषयत्वम्, तथा चानेकव्यक्तिज्ञानैरेवार्थबुद्ध्युपपत्तौ किमन्तर्गडुना जातिस्फोटेन किञ्च यथाकथञ्चिदनुगमार्थं जातिकल्पनेऽलम्बोपाध्यादेकल्पनेत्वापत्तिरिति वर्णानुपूर्व्यैव प्रतीत्यवच्छेदकत्वयोर्निर्वाह उचितः । तथैवान्वयव्यतिरेकदर्शनात् । सा च वर्णानतिरिक्तेति को जातिरिक्तः स्फोटः । न च वर्णात्मनापि नित्यत्वं युक्तम्, उत्पत्त्यादिप्रतीतेः सार्वजनीनत्वात्, वर्णमुच्चारयति न तत्त्वात्प्रतीति च पटं वयति न तत्त्वादयतीत्यनेन तुल्यम्, अभिव्यक्तिविषयत्वमप्युत्पत्तेर्व्याघातभयेन सर्वत्रातिप्रसञ्जकम्, पर्यायार्थिकनये चाभिव्यक्त्यर्थतस्य गौरवेण त्यागाच्छुत्पत्तिप्रत्ययोऽपि सर्वत्र तुल्यः, ज्ञायमानस्य हेतोरुपयेनैकस्य स्फोटस्वे च धूमपरामर्शादिस्थलेऽप्येका स्फोटः स्यादिति न किञ्चिदेतत् । वर्णमालायां पदमिति प्रतीत्या वर्णातिरिक्तस्फोटं साधयन् दीक्षितस्त्वशिक्षितालापकदेव, एव सत्यविज्ञानस्य सत्यतया वर्णमालायाः सत्यत्वस्य तत्राप्यसत्त्वस्य स्फोटस्य पटवदेवासत्त्वस्य चापत्तेः । न च वर्णाभिन्नत्वेऽपि स्फोटस्य गोत्वादिवज्जातिरूपत्वेन नित्यत्वात् सत्यत्वमिति वाच्यम् । अस्मद्दर्शने गोत्वादिजातेरप्यसच्चावनिरस्तम्, आत्मैवेद सर्वमिति श्रुतिवचनादिति कैयटश्च वर्णाभेदनया गोत्वादिजातिरूपस्यापि स्फोटस्याभिन्नत्वेनानित्यत्वादसत्यत्वापत्तेः, तदनुव्यक्तिसिद्धिं प्रत्येव जातिस्फोट

इति स्वीकारे च पदादपपि सत्यभागस्य जातेः स्फोट इति नाम कृतो न स्वीक्रियते, उपाधिरूपविशेषणाभावे सर्वत्र शुद्ध
प्रज्ञपयसमानाविशेषात्, पर्यायार्थनयम्युत्क्रान्तार्थग्राहिणो द्रव्यार्थिकस्यापश्चिमविकल्पनिर्वचनत्वेन तत्र शब्दमसत्यमर्थमसत्यं
वेति पक्षपातस्य निमूलत्वात् सप्तभङ्गीनये कथञ्चिदनिर्वाच्यत्वस्य विचारजन्यनिर्विकल्पकज्ञानमादायैवाविरोधात्, एतेन
"इत्थं निरूप्यमाण एव, सम्पत्तत्त्वं निरञ्जनम्। यदेवैतदक्षरं प्राहु–स्तस्मै पूर्णात्मने नम ॥१॥" इति व्याख्यातम्, अर्थविनिर्मु
क्तस्य ज्ञानस्याक्षरस्याप्यभावात्, अनन्तधर्मकत्वेऽप्यक्षरस्यस्याद्वयत्वस्य चातुर्व्यापुत्त्या नयविक्षेपेणोपपत्तेः। प्रमाणतयाश्रय
णेऽपि मनोमयत्वसच्छन्दमयत्वस्य प्रत्यक्षसिद्धेः, आत्मभावसमवस्थानरूपस्य परमब्रह्मण एवानेकान्तसिद्धान्तनीत्या सकल
कलङ्करहितस्य विषमिताभयणीयत्वादिति शिवम्। "श्रयो व्यक्तिस्फोटा अविचलितपर्यायविषया, अखण्डो
स्फोटो तदनुगतसमुद्रव्यविषयौ॥ न तिर्यक्सामान्यात्मयमिह विभिन्न च तदय, नयानां कल्लोलाः कलयति
चमत्कारभरितः ॥ १ ॥ अमूर्तभङ्गानां निविडतरजालं नयकृतं, प्रयाति च्छित्त्वैव प्रथितभजनास्त्रेण
सुकृती। यतस्तुर्यैर्वैयाकरणहरिणस्तत्र विषयो, न सिद्धिः स्याद्वादादिति च इह सूत्रं विमृशति ॥ २ ॥"
स्फोटवादः सम्पूर्णः ॥ १० ॥ अन्यत्रेति [ इत्यत्रेति ] ( १५१–२–७ ) विवृणोति।

अथेतरेतराभावास्यस्याभावानभ्युपगमवादिनां दूषणमुद्भावयितुः प्राहुरापाद्यो।—

**सर्वात्मकं तदेकं स्यादन्यापोह्व्यतिक्रमे। अन्यत्र समवाये न व्यपदिश्येत सर्वथा ॥ ११ ॥**

तदित्योगेन सर्वमपारिनामिदं तत्त्वं परामृश्यते। तदेकं सर्वात्मकं स्यात्, अनिष्टात्मनापि भावादन्यापोहस्य व्यतिक्रमे। एव

समवायिनः समवायान्तरे समवायोऽन्यत्र समवायः अत्यन्ताभावव्यतिक्रमः । तस्मिन् सर्वस्यैकं तत्त्वं सर्वथा न व्यपदिश्येत, स्वेष्टात्मना व्यपदेशेऽनिष्टात्मनोपि व्यपदेशप्रसङ्गात् तेनाव्यपदेशे स्वेष्टस्याप्यव्यपदेशापत्तेः स्वाभिधानविरोधः कालत्रयेपि वि-शेषानुपगमात् । का पुनरन्यापोहो नाम ? स्वभावान्तरात्स्वभावव्यावृत्तिरन्यापोहः । स्वभावान्तरादिति वचनात् स्वस्वभावा-द्व्यावृत्तिरन्यापोहः तस्याः स्वापोहत्वप्रसङ्गात् । तथापि प्रागभावप्रध्वंसाभावयोरन्यापोहत्वप्रसक्तिरिति चेत् न, कार्यद्रव्यात् पौर्वापरपरिणामयोः स्वभावान्तरत्वेपि तस्य तद्व्यावृत्तेर्विभिन्नत्वात् । यदभावे हि नियमतः कार्यस्योत्पत्तिः स प्रागभावः, यद्भावे च कार्यस्य नियता विपत्तिः स प्रध्वंसः । न चेतरेतराभावस्याभावे भावे च कार्यस्योत्पत्तिर्विपत्तिर्वा जलस्याभावेप्यनलस्योत्पत्तेः क्वचित्तद्भावे च तस्याऽविपत्तेः । कश्चिद्व्यवधानस्याभावे रूपज्ञानोत्पत्तेः स प्रागभावस्तस्य स्यादिति न मन्तव्यम्, नियमाभावात् केषाञ्चि-द्व्यवधानेऽपि रूपज्ञानोत्पत्तेः । तत एव मान्धकारं रूपज्ञानस्य प्रध्वंसः, तद्भावे नियमतस्तद्विपत्त्यप्रतीतेः । ततः सूक्तमन्यापोहलक्षणं स्वभावान्तरात्स्वभावव्यावृत्तिरन्यापोह इति तस्य कालत्रयापेक्षेऽत्यन्ताभावेप्यभावादतिव्याप्त्ययोगात् । न हि घटपटयोरितरेतराभावः कालत्रयापेक्षः कदाचित्तस्यापि पटस्वपरिणामसंभवात्, तथा परिणामकारणसाकल्ये तदविरोधात् पुद्गलपरिणामानियमदर्शनात् । न चैवं चेतनाचेतनयोः कदाचित्तादात्म्यपरिणामः तस्य विरोधात् । नन्वितरेतराभावस्य व्यतिक्रमे चार्वाकस्य पृथिवीतत्त्वं सकलम-वाच्यात्मकमुपगमवतां साङ्ख्यस्य च महदादिपरिणामात्मकमशेषतत्त्वमस्तु । सौगतानां तु विज्ञानमात्रमुपयतां किं विज्ञानात्मकं स्यादिति कश्चित्सोपि न विपश्चित् । सौगतानामपि हि संवित्तो ग्राह्याकारात्कथञ्चिद्व्यावृत्तावनेकान्तसिद्धिरन्यथा संवेद्यासिद्धिः सर्वथा व्यावृत्तौ संविद्ग्राह्याकारयोरुपकार्योपकारकभावानभ्युपगमात्तयोरन्योन्याभावात् । अन्यव्यावृत्तावप्यतरस्वभावहानेनैकत्वं किञ्चित्स्यात् । संविदो ग्राह्या

वा सामग्रीसंबन्धभेदात् । व्यतिरेककार्ये दूरस्थपुरुषस्याग्न्यो हि दूरे देशसामग्रीसंबन्धोऽभ्यासजदेशसामग्रीसंबन्धः । इति दूरसमा
नामेकत्र वस्तुन्युपनिपतनामासन्नानां पुरुषाणां निर्भासभेदात्तद्विषयस्य वस्तुनोऽपि स्वभावभेदोऽस्तु, विशेषाभावात् करणसामग्रीभेदव
दूरादिदेशसामग्रीसंबन्धभेदस्यापि विषयस्वभावभेदमन्तरेणानुपपत्तेः । ततोऽन्वयेऽपि स्वभावभेदैकान्तसिद्धेर्न व्यतिरेकस्वभावस्य ।
अन्यथा निर्भासभेदेऽपि वस्तुनिरेकरूपत्वोपगमे न केवलं रूपादेरभेदः किं तर्हि ? कस्यचित्क्रमशः संबन्धान्तरोपनिपातेऽपि स्वभावं न
भेदयेत् ततः क्रमवन्त्यपि कार्याणि तत्स्वभावभेदं नानुमापयेयुः, क्रमशः सुखादिकार्यभेदस्य साधनधर्मस्य व्यतिरेकत्र समानसंब
न्धोपनीतनिर्भासभेदेन व्यभिचारात् । न चैवं शक्यमभ्युपगन्तुम् । ततो यावन्ति संबन्ध्यन्तराणि तावन्तः प्रत्येकं भावस्वभावभेदाः
परस्परव्यावृत्ताः सह क्रमेण च प्रतिपत्तव्याः । ननु च सर्वथा संबन्धासंभवाद्भावानां पारतन्त्र्यानुपपत्तेः 'पारतन्त्र्ये हि संबन्धः सिद्धे
का परतन्त्रता । तस्मात् सर्वस्य भावस्य संबन्धो नास्ति तत्त्वतः ॥१॥" इत्यादिवचनाच्च कस्यचित्संबन्ध्यन्तराणि स्वभावभेदनिबन्ध
नानि सन्तीति चेत्, न, द्रव्यक्षेत्रकालभावप्रत्यासत्तिलक्षणस्य संबन्धस्य निराकर्तुमशक्तेः । न हि कस्यचित्केनचित्साक्षात्परम्परया वा
संबन्धो नास्तीति निरुपाख्यत्वप्रसङ्गात् । गुणगुणिनोः पर्यायतद्वतोश्च साक्षादविष्वग्भावाख्यसमवायासत्त्वे स्वतन्त्रस्य गुणस्य पर्या-
यस्य वाऽसत्त्वप्रसङ्गात् सकलगुणपर्यायरहितस्य द्रव्यस्याप्यसत्त्वापत्तिरिति तयोर्निरुपाख्यत्वम् । गुणानां पर्यायाणां च परस्परं
साक्षादेकद्रव्यसमवायसंबन्धाभावेऽप्यनेन निरुपाख्यत्वं प्रतिपादितम् । चक्षूरूपयोः परम्परया क्षेत्रप्रत्यासत्तेरसत्त्वे योग्यदेशेऽप्य-
योग्यदेशस्थरूपे चक्षुर्ज्ञानं न जनयेत् । ततस्तद्भावकानुमानाभावप्रसङ्गो रूपस्यापि चेन्द्रियप्रत्यक्षासत्त्वप्रसक्तिः । इत्युभयो-
र्निरुपाख्यत्वम् । तथा मरणारिष्टपरिणामयोः कालप्रत्यासत्तेरसत्त्वेऽनभिमतकार्ययोरिवाभिमतकार्ययोरपि कार्यकारणभावासत्त्वात्तु

त्तिरोधात्। तत्प्रतिबन्धे प्रमाणान्तरसिद्धेः कथं प्रमाणव्यवस्थानियमविघटने न घटेत, यदुक्तम्—यभावे प्रत्यक्षस्यानुमानस्य वानुदयात्, अर्थापत्त्यभावोऽभावात् प्रत्यक्षेऽपि प्रमात्वता। प्रतिबद्धस्वभावस्य तद्धेतुत्वे समं द्वयम् ॥१॥' इति वचनात्। मानमस्य तु नास्तिप्रज्ञानस्य व्यापारसामग्रीसमानुपलब्धभावपरिच्छेदत्वे नैव प्रमाणान्तरं प्रतिबन्धनियमाभावात्। इति ययोरिष्टयोर्न परिजिहीर्षुणा वस्तु धर्मत्वेनाभावस्य प्रतिपत्तिरभ्युपगन्तव्या तस्याः प्रतिबन्धापायात्। ततो न भावैकान्ते समीहितसिद्धिः ॥ ११ ॥

स्वसमवायिन (१६२-१-१४) इति स्वसमवायि यस्येति विग्रहात् स्वसमवायिन आत्मसमवेतज्ञानादे, समवायान्तर (२-१) व्योमादौ, समवायोऽन्यत्र समवाय उच्यते, अत्यन्ताभावव्यतिक्रम स एव, तस्मिन्निति तस्मिन्नभ्युपगम्यमाने, सर्वस्य सर्वदा, इह तस्य सर्वथा तस्यैवेत्याकारेण, न व्यपदिश्येत। तस्य (५) कार्यस्य, तद्रूपावृत्तेः पूर्वोत्तरपरिणामरूपत्वात्, विशिष्टत्वाद्विलक्षणत्वात्, ध्वंसत्वप्रागभावत्वाभ्यामिति शेषः। तथा चोपधेयसांकर्येऽप्युपाधीनामसांकर्यात् दोषस्तद्व्यक्तित्वावच्छिन्नभेदेऽपि तद्व्यक्तित्वावच्छिन्नभेदाभावाभ्युपगमादिति बोध्यम्। उपाध्यसांकर्यमेव प्रदर्शयति—'यदभावे हीत्यादि' (५) ॥ नियमग्रहणादिति (७), न चैव सिद्ध्यभावे नियमतोऽनुमित्युत्पत्तेः सिद्धेरनुमितिप्रागभावत्व प्रसक्त इति वाच्यम्। पूर्वपरिणामान्तर्भावनेष्टत्वात्, अनुमितेरपि सिद्धित्वेन सिद्ध्यभावत्वेनानुमितिनिरूपितस्य कालिकव्याप्तिघटितनियमस्याभावात्। न हि घटपटयो (९) रित्यादि, नन्वेवं जीवेऽजीवभेदे कालत्रयापेक्षेऽत्यन्ताभावत्वप्रसक्तिः, न च सोऽत्यन्ताभाव एव, प्रतीतिवैलक्षण्यात्, नञाऽत्यन्ताभावबोधनेऽनुयोगिवाचकपदे सप्तम्या अन्योन्याभावबोधने च प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वस्य तन्त्रत्वात्यन्ताभावत्वादिना बोधने तयाव्युत्पत्तेराभ

पर्येऽपि तथात्वग्रहणस्याप्यनुपपत्तावेति चेत्, सत्यम्, "त्रैकालिकी तादात्म्यपरिणामनिवृत्तिरत्यन्ताभाव" इत्यत्र परिणा
मपदमहिम्ना मर्त्यत्वनियामकसम्बन्धतायाः पृथ्वीपातदशुत्वाभयमाप संसर्गावच्छिन्नप्रतियोगिताकाभावत्वमत्यन्ताभावत्वमिति
तात्पर्यम्। इत्थं चान्योन्याभावलक्षणस्य तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वस्यैव सामान्य दोषः। तच्च ध्वंसाधिकरणेऽ
तिरिक्तपदार्थे चेति पुनरन्यदेतत्, संयोगितादात्म्यस्यैव संयोगत्वे च "तादात्म्यत्वावच्छिन्नावच्छेदकताकप्रतियोगिताकाभा
वत्वमन्योन्याभावत्वम्," "तद्विपरीतभावत्वं संसर्गाभावत्वम्" इति वदन्ति। तादात्म्यत्वस्यातिरिक्तस्य कल्पनायां गौरवाद्
ध्वंसात्यन्ताभावत्वापसम्प्रोपाधिरिति तु नव्याः। युक्तमेतत्, तपद्स्वरूपे तयक्रोडत्वादेर्यथा प्रतीतिकल्पनात् भावसंकरस्ये
भावासंकरस्याप्यदुष्टत्वात्, अभिलापभेदस्य च विवक्षावैचित्र्याधीनत्वादिति दिग्॥ अन्यापोहव्यतिक्रमे भेदवादिना दोषः
स्याभावभेदवादिनः सौगतस्येत्याशङ्कते नन्वित्यादिना (११२–२–११)॥ उपरमति–सौगतानामपि हीत्यादिना (१२),
धर्मित्वेन व्यक्तिभेदे तेषामविवाद एव, ग्राह्यग्राहकस्याभ्यामाधिकस्वरूपभेदकथनार्थं पुनरपह्नुपक्रमः, ग्राह्यग्राहकाकारविवे
कान्यथानुपपत्त्या ज्ञानमात्रमपि कथञ्चिद्वेद्यतास्ति स्वीकार्यमेवेति निष्कर्षः। ननु मतापरिज्ञानविजृम्भितमेतत् ज्ञानमात्रस्य
माध्यमिकेनाभ्युपगमात्, तन्मते च ग्राह्याकारस्यालीकत्वादलीकमेदस्य च वास्तवान्यापोहव्यतिक्रमाविरोधित्वादित्याशङ्कते
'ननु चेत्यादिना' (१६२–१–२)। एवमपि स्वलक्षणप्रत्यये संवेद्याकारमिथ्यात्वावगाहिज्ञानवैलक्षण्यप्रौप्याभावान्यापोहव्यति-
क्रमः सौगतस्य युक्त इत्याशयेन समाधत्ते नैवमपीत्यादिना (३)। तादृशज्ञानस्यालीकत्वे च इतो माध्यमिकमताय अतः
ज्ञप्तिः। विचारजन्यं शून्यज्ञानमेव प्रमाणं नान्यत् स्वलक्षणप्रत्ययमप्यप्रामाण्यग्रहास्कन्दितत्वादिति चेत्, तर्हि तत्रापि मिथ्या

संस्कारविरोधिताश्चेदर्कं चैत्रस्य वक्तव्यमिति ध्रुवोऽन्यापोह , विचारस्य सत्यत्वे नियमभङ्गोऽसत्यत्वे च सत्यज्ञानजनकशक्ति विरहात् सत्यज्ञानोच्छेद इति पश्चिमिरेतत् । चित्राद्वैतवादेऽपि योगाचारस्य चित्रज्ञाने नीलादिमात्रविषयकज्ञानत्वावच्छिन्न मेदरूपो नीलाद्याकारभेदरूपश्चान्यापोहोऽवश्यमादरणीय इत्याह चित्रैकज्ञानवादिनः पुनरित्यादिना (१६२–१–४)॥ तत्र तत्रापि (९) तत्रतो लोहितादिनिर्भासनवच्चित्रज्ञानस्य, तेभ्यो लोहितादिनिर्भासेभ्यो व्यावृत्तिरस्तीति साध्यम् । एकानेक स्वभावत्वादिति हेतुः, यथा घटस्य रूपरसादिभ्य इति दृष्टान्तः, एकमिदमनुमानम्, द्वितीय च तत्रतो नीलाद्याकारवत्त्व चित्रपटादेस्तेभ्यो नीलाद्याकारेभ्य इत्यभिलापेन द्रष्टव्यम् । 'न पुनरिति' (१०) अनेकस्वभावमिति विपरिणतानुषङ्गेनान्वयः, तत्र लोहितादिनिर्भासचनीलाद्याकारवच । हेतुः (११) एकानेकस्वभावत्वरूपः, यदि च रूपादय एव लोकप्रतीतत्वात् सन्ति न द्रव्यमिति परेणोच्यते तदाह भाष्यकृत्, मम सामान्याभिप्रायेण द्रव्यमेवास्ति न (यस्याभ) रूपादय इति, तुल्यः पथ इत्यर्थः । ज्ञानमधिकृत्याह वृत्तिकृत्, एतेनेति, चित्रज्ञानैकत्वे निर्भासभेदप्रकारमुपदर्शयति शक्य हि वक्तुमित्या दिना (१२), प्रसङ्गापादनमात्रमेतदिति, विपर्ययपर्यवसानमाह तथानभ्युपगम इत्यादि (१४)॥ भाष्ये चाकारो (२–१) व्यवस्थार्थः । निर्भासभेदेऽप्येकत्वोपगमे बाधकमाह भाष्यकृत् अन्यथेति (४), क्रमश (५) इति । एव हि क्रमि कनानाकार्यकरणैकस्वभावोऽनुगृहीतो भवति वस्तुन एवं नानेकस्वभावव्यपलतैव सिध्यति, अन्यथैकस्वभावमपि नानाकार्य करणानुप्रवेशे एककार्यकारणवेलायाङ्क्लेपादिकया नानाकार्यपनयनप्रसङ्गादित्यालोच्याह न चैव शक्यमभ्युपगन्तुमित्या दिना (६) । चोदः शङ्कते–'ननु चेति' (७) भावानां पारतन्त्र्यानुपपत्तेः क्षणिकत्वेन परापेक्षाया अघटनात् सर्वथाऽसम्ब

स्वभावभेदा इति (१०) सन्तानान्तरमात्रस्य घटपटादिरूपस्य स्वभावभेदाः, क्षणिकनित्यापेक्षया नित्यानित्यादिरूपाः, स सुवर्ण एवेति (१५४-१-१३) सुवर्णं कुण्डलीभूतं मृद् घटीभूतेत्यादिप्रत्ययादविच्छिन्नद्रव्यस्यैव कार्यभावसिद्धेः, अन्यथा त्विष्ट पर्यायस्यैवापन्नादिति भावः। ननु कारणस्य प्राक्कालक्षयितयैवापेक्षणात् कथमविच्छिन्नस्य कार्यभाव इत्याशङ्कायां दृष्टान्तमाह–स्वभावान्तरानपेक्षणवदिति (१३), येन नयेन स्वभावान्तरानपेक्षणं तेन नयेनाविच्छिन्नस्य कारणस्य कार्यतां स्वीकुर्वतः परित्यागायोग इत्यर्थः। स को वा नय इति चेत्, इमे ब्रूमहे, नाशस्येवोत्पादस्य निर्हेतुकत्ववादी शुद्धपर्यायार्थिक एव, तदाह–उत्पित्सोरपीति (१३) हेतु विनैव वस्तुनो विनाशशीलत्वे हेतुं विनैवोत्पादशीलत्वं न्याय्यम्, तत्र सौगतानामर्द्धजरतीयाश्रयणस्यायुक्तत्वादिति भावः। स्थितावप्यनं न्यायमतिदिशति–'एतेनेति' (१४) वस्तुन उत्पादविनाशयोः कारणानपेक्षत्वे व्यवस्थिते स्थितेरपि तत्त्वेन स्वाभाविकत्वं युक्तम्, क्वाचित्कत्वस्यैव कादाचित्कत्वस्य स्वभावनियतत्वादिति भाव। नन्वेवमुत्पादत्रियस्य कारणानपेक्षत्वे घटोत्पादार्थं दण्डग्रहणादौ प्रवृत्तिर्न स्यादित्याशङ्कायामाह–'तद्विशेष एवेति' (१६८-२-१) इत्थं चोत्पादस्य प्रायोगिकवैस्रसिकभेदेन द्विविधत्वात् द्वितीये हेत्वनपेक्षायामपि प्रथमे तदपेक्षाध्रौव्याच प्रवृत्त्युच्छेद इति भावः। एतचोत्पादद्वैविध्यं 'उप्पाओ दुविअप्पो पओगजणिओ अ वीससा य' इत्यादिना येन भगवता सम्मतिकारेणापि भणितमिति नास्मत्सम्प्रदायप्रतिकूलेयं कल्पनेति बोध्यम्, एवं सति कालादिहेतुपञ्चकसामग्र्याः कार्योत्पत्तिमात्रनियतत्वभङ्गनापसिद्धान्तभीस्तु गौणमुख्यभावेन यदभङ्गसारणीयोक्तद्वैविध्यस्य प्रयोगविस्रसाप्राधान्येनैव व्यवस्थितेरिति दिग्। तत्र (७) वयोः पयपोमध्ये, नयतः स्थिरमाविभतः सकाशात्, सामर्थ्यात् (८) उत्पद्यमानादिद्रव्यमेवसामर्थ्यात्, त्रैलक्षण्यादिति

(९) स्थित्यादौ त्वभिन्नद्रव्यगतोत्पत्त्यादेरव्यभिचारे दोषाभावादित्यर्थः। एतेनैव (९) स्थित्यादौ द्रव्यार्थतयोत्पत्त्यादिप्युक्ता- दनेनर स्याद्वादपक्षे तु तत्र भेदेऽप्यभेदाविरोधादित्यर्थः, 'येन हीति' (१०) द्रव्यार्थतयाऽभिन्नाः स्थित्यादयस्तैलक्षण्यं स्वीकु- र्वन्त्येव पर्यायार्थतया तु लक्षणमात्रेण भिद्यत एवेति भावः। 'प्रतिक्षणमिति' (११) एकस्मिन्नपि क्षणे एकत्र वस्तुनि रूपभेदेन तथाविरोधाद्भूमिकानां घात्यादादीनां प्रतिक्षणमनुपरमादिति भावः। कालभेदेन तु स्थूलैकपर्यायावच्छेदेनापि तदुपपद्यत इत्याह एतेनेति, 'तस्यान्वितेनेति' (१२) तस्य जीवादेरन्वितेन रूपेण किञ्चित्कालानुगतपर्यायेण, अन्यथा क्षणिकपक्षे, तुल्यपेक्षान्ते (१२) विगच्छत्येकान्ते न कुतश्चिदुपरमतीति (१६५-१-१) न कुतोऽपि भङ्गाभिपर्यय इत्यर्थः। तिष्ठति स्थितमित्यादि (१) स्थित्यादित्रयस्य सहवर्तिनः कालत्रयसार्धिद्रव्यामेवोपचारेण नव भङ्गाः प्रत्येकं स्थूलकालकृतवर्तमानत्वा दिशालिस्थित्यादौ सूक्ष्मकालकृतावस्थाभेदेन नवेत्येकाशीतिर्भङ्गा भावनीयाः, यत्त्वाद्यक्रियाप्रासमार्थं चरमक्रियाध्वंसं चादाय भविष्यत्त्वमतीतत्वं च वाच्यमिति न वर्तमानक्रियाकाले कालत्रयवाचिप्रत्ययप्रयोगसम्भव इति नैयायिकादीनां मतम्, तत्स्थूलव्यवहारैकान्ताभिनिवेशविजृम्भितम्, नयविशेषेणैकदा त्रैकाल्यसत्त्वस्य सर्वसम्मतत्वात्, अन्यथोत्पत्तिकाले उत्पन्नत्व प्रत्ययस्य भ्रान्तत्वापत्तेः, मामुदयिकोत्पादे स्थूलकालभाविनि चैकस्मिकोत्पादानां सूक्ष्मकालस्पर्शिनां त्रैकाल्यस्पर्शे तु न काचिदनुपपत्तिः। न चोत्पत्तिकाले उत्पन्नत्वमस्ति प्राक्काले च पक्वत्वं नास्तीत्यत्र विशेषकारणं पश्यामः। प्रत्युतैवं छिद्यमानं छिन्नमित्यत्र इति निदानानुपपत्तिः, सिद्धासिद्धसाधारणक्रमाभ्युपगमपरित्यागेन क्रियाविवेकस्य क्रियापेक्षा स्पर्शपक्षपातित्वात्, तस्माद्वर्तमानक्रियाकाले कालस्य स्थूलसूक्ष्मसाम्यां त्रैकाल्यं नयविशेषेण यौक्तिकमेवेति

मिश्रा यथोक्तभङ्गाः । सैद्धान्तिकास्तु क्रियाकालनिष्ठाकालयोरभेदात्समागसन्ततिपवित्रतया निष्ठामविष्यतयोः समावेशा पेक्षयेऽपि कालत्रयव्याप्तिप्रत्ययार्थाविरोधमादिशन्ति ॥ जीवादिपदार्थेभूक्तभङ्गान् सत्तायामपि योजयति, तथा सन्मात्र मित्यादिना (१६५-१-६) ॥ मस्येचमि (६), सत्तायाः स्वरूपेण स्याप्तुत्वे द्रव्यत्वादिविशेषितत्वेनोत्पत्त्यादिशालित्वाच राभिताः सर्वेऽपि भङ्गा अविरुद्धा इति भावः । न च विशेषणभेदेन पदार्थभेदे मानाभावादेतदनुपपत्ति, विशिष्टाधार साभेदकल्पनापेक्षया विशिष्टभेदकल्पनस्यैव युक्तत्वात्, भेदाभेदवादे चानन्तपदार्थकल्पनागौरवावनवकाशात् ॥ 'सत्तेति' (११) सत्ता महासामान्यरूपा, सकलपदार्था सकलाः पदार्था विद्यन्ते आश्रयत्वेन यस्याः सा तथा, विश्वरूपेनो नामकारैः महिता, सुविशेषणे, किं विशिनष्टीत्याकाङ्क्षायामाह, अनन्तपर्याया (११) द्रव्यत्वाद्यनन्तविशेषणविशिष्टानन्तम योर्विशेषणभूतैर्विश्वरूपत्वं विशेष्यत इत्यर्थः । अत एव स्थितिभङ्गोत्पादार्था (११) स्थितिभङ्गोत्पादा अर्था लक्षणानि यस्याः सा तथा, स्वरूपेणोक्ता सप्रतिपक्षा (११) च पररूपेण नास्तित्वसमावेशाद्भवतीति संवादकारिकार्थः । केवलाभाव प्रतिपत्तौ बौद्धोक्तामनुपपत्तिमुपन्यस्य जात्यन्तरे वस्तुनि तदेकांशत्वात्मेयमिति तं प्रत्यनुशासितुमाह कथं पुनरित्यादिना (१६५-२-१)॥ तस्य अभावस्य, तत्कारणत्वविरोधात् प्रवृत्तिकारणत्वविरोधात्, तत्कारणत्वे स्वलक्षणतापत्तेरिति अर्थक्रियाकारित्वस्यैव स्वलक्षणलक्षणस्यादिति भावः । प्रमाणान्तरस्यापि (३) कार्यानुमानस्यापि, अस्तु तर्हि स्वभावलिङ्ग कानुमानविषयत्वमनुपलब्धिलिङ्गकानुमानविषयत्वं वाऽभावस्येत्यत्राह-'स्वभावानुमानस्येऽपीत्यादि' (४) स्वभावास म्भवादिति, (५) तथा च स्वभावहेतोरभावप्रतिबन्धासम्भवात्त तस्य तद्विषयत्वमिति भावः । 'पर्युदासरूपेति' (५) अनुप

विभ्रमे किमविभ्रमो विभ्रमो वा ? तत्राविभ्रमे कथं सर्वविभ्रमः ? विभ्रमेपि कुतोसौ ? विभ्रमेपि विभ्रमे सर्वत्राविभ्रमप्रसङ्गात्। विभ्रमविभ्रमेपि विभ्रमोपगमे स एव पर्यनुयोगोनवस्था चेति दुरन्तं तमः। तदुक्तं न्यायविनिश्चये " तत्र शोकोपनेयेन कथं प्रलाप विभ्रमे विभ्रमे तेषां विभ्रमोपि राधिनी। तमूबेति यदि तावत्तु विस्मयमास्महे ॥ १ ॥ तत्रापापि प्रकाशत्वमसो मापरं परम्। न सिध्यति ॥ २ ॥ " इति। ततो मामावैकान्ता भेवाम्, स्वेष्टस्य दृष्टबाधनाद्यपैकान्तवत् ॥ १२ ॥

बोधवाक्यमिति (१७०-१-१) [मूले] समाहाराश्रयणाद्बोधो वाक्यं च न प्रमाणम्, तर्हि केन साधनं दूषणं च स्यादिति, साधनदूषणप्रयोगान्यथानुपपत्त्याऽभावैकान्तो निरसनीय इति कारिकोत्तरार्धार्थः। भावा येनेत्यादि (२) कारिका धर्मकीर्तेः, किं त्रिलक्षणकल्पनयेति (५) एकलक्षणादेवोक्तानुमानादर्थसिद्धेरित्यर्थः। एकलक्षणस्यैव प्रयोगस्य समर्थनत्वं परदृष्ट्या साधयति सपक्षसत्त्वाभावेऽपीत्यादिना (६) ॥ सर्वं क्षणिकं सत्त्वादित्यत्र दृष्टान्ताभावेन सपक्षसत्त्वाभावः, प्रमाणास्तित्वमस्ति, इष्टसाधनादित्यत्र पक्षधर्मत्वाभावः परैरपीष्यत इति विपक्षव्यावृत्तिरेकमेव लक्षणं हेतोरवशिष्टं तत्रैवास्माकमन्यथानुपपत्तिशब्देनाग्रह इति तत्त्वम्। अत्र हेत्वसिद्धमुद्भावने—नैरात्म्यमपि तत्त्वतो माध्यमिकस्य न सिध्येदित्याह—स्याद्वाकूत ते इत्यादिना (८) तत्साधनं विरुद्धतामापद्येतेत्यन्तेन, (१२) ॥ स्वसंवेदनज्ञानमहिम्नैव नैरात्म्यं सेत्स्यति समारोपव्यवच्छेदार्थं पुनः साधनादर इत्यत्राह भाष्यकृत्, तत्र समारोपव्यवच्छेदेऽपि समानमिति (१३) समानं साधनविरोधदूषणं प्रागुक्तमिति बोध्यम्। उक्तमेव विवृणोति वृत्तिकृत् 'कुतश्चिदिति' ( १७०-१-१३ ) समारोपव्यवच्छेदः परमार्थतः कल्पनया वा, आद्ये प्रमाणान्तरेण तत्सिद्धौ काल्पनिकसाधनप्रयोगो धीविडम्बनामात्रम्, अन्त्ये तत्त्वतः समारोपाव्यवच्छेदात्

शून्यतेति भावः । संवृतेः स्वरूपपररूपाभ्यामस्तित्वनास्तित्वपर्यवसानेन स्वसमयार्थसिद्धिमुपपादयति यदीत्यादिना ( १७०-२-२ ) प्रत्येकपक्षपर्यवसितमुभयानुभयपक्षयोरपि पर्यवस्यतीत्याशयवानाह भाष्यकृत् 'तदेतेनेति '(५)॥ न कश्चिद्विनाश इति (६) क्रमार्पितोभयविषयस्य तृतीयभङ्गस्यास्त्यवभिमतत्वादेवेत्यर्थः, 'तथाच इति ' (७) प्रत्येकरूपेभ्यो भयभिन्नभेदस्योभयत्रैव पर्यवसानादिति भावस्यात्रे स्फुटीकरिष्यमाणत्वादित्यर्थः, तथास्तीति (७) तदस्ति नास्ति उभयमनु भयं चेत्यर्थः । उक्तदोषानुषङ्गादिति (८) मृषैकान्तस्याप्यघटमानत्वेनानेकान्तसत्यत्वे पर्यवसानादित्यर्थः । नहि विचा रस्येत्यादि (८)॥ विप्रतिपत्तिनिरासानुकूलो विमर्शो विचारः शून्यवादिनश्च क्वचिदप्यनिर्णयेन विचाराभावे तदनुरूपा संवृति-रित्यादिरिव विशेषणाभावे विशिष्टाभावादिति भावः। किं यत परमन्यश्च मोहनीयप्रकृतेरिति (१४) महामोहदोषाय किञ्चिदधिक विभ्रमकारणं येन वसुधादिसम्मतमपि पदार्थसद्भावं निरस्य नैरात्म्यं शिक्षयति भिक्षून् शौद्धोदनिरित्यर्थः ॥१२॥

परस्परनिरपेक्षभावाभावैकान्तपक्षोऽपि न क्षेमङ्करः, तत यथैतावेदयन्ति स्वामिनः ॥

## विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम् ।

भावाभावयोरेकत्वरमविशेषैकान्तपक्षोपक्षिप्तदोषपरिजिहीर्षया सदसदात्मक सर्वमभ्युपगच्छतोऽपि वाणी विप्रतिपत्त्येव, तयोः परस्परपरिहारस्थितिलक्षणत्वात् । न हि सर्वात्मना कश्चिदर्थं सन्न तथैवासन्नभावलक्षणः स्यात् स्वाभ्युपेतप्रतिपक्षविधानकरणा-प्रत्यापत्तेरेवमत् । यथैव हि सर्वथा शून्यमभ्युपगमात् स्वसंवेदनादन्यतो वा स्वाभ्युपेतं शून्यतैकान्तं निरस्यति, अनभ्युपेतं प्रमाणा दिसद्भावं विधत्ते, यथैव भावाभावयोस्तादात्म्यैकान्तं ब्रुवन् स्वाभ्युपेतं सदसदात्मकं निरस्यति, स्वयमनभ्युपगतं तु भावैकान्तम-

भावैकान्तं वा विघत्ते, अभावस्य भावेऽनुप्रवेशाद्भावस्य वा सर्वथाऽभावे, अन्यथा भावाभावयोर्भेदप्रसङ्गात्। ततो नोभयोरैकात्म्यं यतः स्याद्वादविद्विषां, सदसतोः परस्परपरिहारस्थितिलक्षणविरोधात् जात्यन्तरस्यैव दर्शनेन सर्वथोभयैकात्म्यस्य बाधनात्। तथा सांख्यस्यैवमुभयैकात्म्यं मुक्तश्चैलोक्यं व्यक्तेरपैति, नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधादिति वा तदन्यथा पेतमप्यास्तीति स्याद्वादमन्तरेणान्धसर्पबिलप्रवेशन्यायमनुसरति, त्रैलोक्यस्य व्यक्तात्मनाऽपेतत्वसिद्धेः अव्यक्तात्मनास्तित्वसम्प्रत्ययस्थितेः " हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥१॥ " इति वचनात्। परमार्थतो व्यक्ताव्यक्तयोरेकत्वात् स्याद्वादावलम्बनं कापिलस्येति चेत् न तथा विरोधस्य तदवस्थानात्। प्रधानाद्भेदोपगमे तु नोभयैकात्म्यमभ्यु पगतं स्यात्। तथा स्वयमनभ्युपगच्छतोपि कथञ्चिदुभयात्मकत्वस्याप्रत्यपेक्षे कथमन्धसर्पबिलप्रवेशन्यायानुसरणं न स्यात्? यदृच्छया तदवलम्बनात्। ततो नैवमप्युभयैकात्म्यं सिध्यति, विरोधात् ॥

'जात्यन्तरस्यैवेति' (१७२–१–२) प्रत्येकद्वयरूपोभयाभ्युपगमकृद्दोषस्य जात्यन्तरवादेनैव गुडशुण्ठीन्यायेन निरासस्तु करत्वादिति भावः। तदाहुः श्रीहेमसूरिपादाः॥ "गुडोऽपि कफहेतुः स्यान्नागरं पित्तकारणम्। द्वयात्मनि न दोषोऽस्ति गुडनागरभेषजे ॥१॥ " इति, तत्रं यावच्छेदकभेदेनोभयसत्त्वाऽवच्छेदकभेदगर्भितोभयात्मकैकस्वभावेन वा, आद्येऽवच्छेदकद्वयोरपि प्रतीतिबलेन व्याप्यवृत्तित्वादुभयोर्व्याप्यवृत्तित्वम्, अन्त्ये च स्यात्पदोपसन्धानेन भावाभावपदयोर्विशेषपरतेति निरूपित नयरहस्येऽस्माभिः। तद्वत् (२) शून्यावबोधवत्। यद (२) उपाधिभेदराहित्येन परस्परनिरपेक्षतया, त्रैलोक्य(२) प्रधान, व्यक्तेः (२) महदादेः, नित्यत्वप्रतिषेधादपैति नश्यति। अपेत ध्वस्तम्, अप्यस्ति प्रकृतेर्विनाशप्रतिषेधात् तत् त्रै

लोक्यम्, अन्यथा ( १७२-१-२ ) महत्त्वादिरूपेणापेतम्, अन्यथा ( ४ ) प्रकृतिरूपेणास्तीत्यक्रमेणापि साङ्ख्येन स्याद्वादे प्रवेष्टव्यमित्यर्थः ॥

## अवाच्यतैकान्तेप्युक्तिर्नावाच्यमिति युज्यते ॥ १३ ॥

योपि पक्षत्रयोपक्षिप्तदोषभिया सर्वथाप्यवक्तव्यं तत्त्वमवक्तव्यमेव सोपि कथमवक्तव्यं ब्रूयात् येनावाच्यतैकान्तेप्यवाच्यमित्युक्तिर्युज्यते । तदयुक्तौ कथं परमवबोधयेत् ? स्वसंविदा परावबोधनप्रयोगात्। तदनवबोधने कथं परीक्षितास्य स्यात् ? तस्यापरीक्षकत्वे च कुतोन्यस्मादविशेषः सिध्येत् ? अपरीक्षितस्याभ्युपगमस्य सर्वेषां निरङ्कुशत्वात् । नैष दोषः स्वलक्षणमनिर्देश्यं प्रत्यक्षं कल्पनापोढमित्यादिवत्सर्वमवाच्यं तत्त्वमिति वचनेपि विरोधाभावात् परप्रतिपादनस्यान्यथानुपपत्तेः इति कस्यचिद्वचनं तदप्यसत् पक्षसतः समुदाहृतम् । सिद्धसाध्यव्यवस्था हि कथामार्गः । न च स्वलक्षणस्य सर्वथाप्यनिर्देश्यत्वोपगमे ' स्वलक्षणमनिर्देश्यम् ' इति वचनेन तस्य निर्देश्यत्वमविरुद्धम् । यतः स्वलक्षणं नैतद्वचनेनापि निर्देश्यं स्वलक्षणसामान्यस्यैव तेन निर्देश्यत्वात् स्वलक्षणे निर्देशासंभवात्, न सर्वे शब्दाः सन्ति तदात्मानो वा येन तस्मिन् प्रतिभासमाने तेपि प्रतिभासेरन्निति वचनात् । कल्पनारोपितं तु स्वलक्षणं तद्धर्मो वा निर्देश्यत्वलक्षणेन निर्दिश्यते विरोधाभावादिति मतं, तर्हि स्वलक्षणमज्ञेयमपि स्यात् । यथैवाक्षविषयेऽभिधानं नास्ति तथाक्षज्ञाने विषयोपि नैवास्ति । ततस्तत्र प्रतिभासमानेपि न प्रतिभासेत । शब्दं हि वस्तु यो यत्राधेयतया नास्ति तदात्मा वा न भवति स तस्मिन् प्रतिभासमानेपि न प्रतिभासते यथाक्षविषये स्वलक्षणे शब्दः । नास्ति चाक्षज्ञाने तथाक्षविषयस्तदात्मा वा न भवति इति । यदि पुनर्विषयसामर्थ्योद्भवज्ञानस्योत्पादात्तत्र प्रतिभासमाने च प्रतिभासत एवेति मतं तदप्यसम्यक् करणान्तरस्यापि प्रतिभासप्रसङ्गात् ।

तथा हि । न केवलं विषयवलादुत्पत्तिः, अपि तु चक्षुरादिवलतोऽपि । विषयाकारानुकरणाद्दर्शनस्य तत्र विषयः प्रतिभासते, न पुनः करण, तदाकाराननुकरणादिति चेत् तर्हि तदर्थपत्करणमनुकर्तुमर्हति न चार्थं, विशेषाभावात् । दर्शनस्य कारणान्तरसद्भावेऽपि विषयाकारानुकारित्वमेव सुतस्येव पित्राकारानुकरणमित्यपि वार्तं स्वोपादानमात्रानुकरणप्रसङ्गात् । विषयस्यालम्बनप्रत्ययतया स्वोपादानस्य च समनन्तरप्रत्ययतया प्रत्यासत्तिविशेषाद्दर्शनस्य उभयाकारानुकरणेऽभ्युपगम्यमाने रूपादिवदुपादानस्यापि विषयतापत्तिः, अविशेषाभावात्, वर्णादेर्वा तद्वद्विषयत्वप्रसङ्गात् । दर्शनस्य तज्जन्मरूपाविशेषेऽपि तदध्यवसायनियमाद्रूपादिरेव विषयत्वमित्यसारं, वर्णादाविवोपादानेऽप्यध्यवसायप्रसङ्गात्, अन्यथोभयत्राप्यध्यवसायायोगात् । न हि रूपादावध्यवसायः संभवति, तस्य दर्शनविषयस्योपगमात्, दर्शनस्यानध्यवसायात्मकत्वात्, तस्याध्यवसायात्मकत्वे स्वलक्षणविषयत्वविरोधात् । यदोपोऽस्य, प्रत्यक्षस्याध्यवसायोत्पादित्यनिरूपितामिधान सौगतस्य, तत्राभिलापाभावात् । यथैव हि वर्णादावभिलापाभावस्तथा प्रत्यक्षेऽपि तस्याभिलापकल्पनातोऽपोढत्वादनभिलापात्मकस्यासामर्थ्येनोत्पत्तेः । प्रत्यक्षस्य तदभावेऽप्यध्यवसायकल्पनायां प्रत्यक्ष किं नाध्यवस्येत् ? स्वलक्षणं, स्वयमभिलापशून्यमपि प्रत्यक्षमध्यवसायस्य हेतुर्न पुना रूपादिरिति कथं सुनिरूपिताभिधानम् ? यदि पुनरविकल्पकादपि प्रत्यक्षाद्विकल्पात्मनोऽध्यवसायस्योत्पत्तिः, प्रदीपादेः कज्जलविवर्तादिकार्यादपि कारणात्कार्यस्योत्पत्तिदर्शनादिति मतं, तदा तादृशोऽर्थाद्विकल्पात्मनः प्रत्यक्षस्योत्पत्तिरस्तु, तत एव तद्वत् । जातिद्रव्यगुणक्रियापरिभाषाकल्पनारहिताद्यर्थात्कथं जात्यादिकल्पनात्मकं प्रत्यक्षं स्यादिति चेत्, प्रत्यक्षात्तद्रहिताद्विकल्पः कथं जात्यादिकल्पनात्मकः स्यादिति समानः पर्यनुयोगः । विकल्पस्य जात्यादिविषयत्वाददोष इति चेत्, न, प्रत्यक्षवत्तस्य जात्यादिविषयत्वविरोधात् । यथैव हि प्रत्यक्षस्याभिलापसंसर्गयोग्यता नास्ति तथा तत्समनन्तरभाविनोऽपि विकल्पस्य, तस्याप्यभिलपनेनाभिलप्यमानेन

अतिप्रसङ्गात् । तथा हि । यदि स्पष्टं गृहीतमप्यगृहीतकल्पं क्षणक्षयस्वलक्षणसंवेदनादिवत् । तथा चायातमचेतनत्वं जगतः । ननु च
नामसन्मते कश्चित्किञ्चिन्नीलादिकं सुखादिकं वा संविदन्पूर्वसंविदितं तत्सदृशं तन्नामविशेषं च क्रमशः स्मरति, पूर्वसंविदितसंवेद्यमान-
नामविशेषयोः सदैव स्मरणात्, तत्संस्कारयोर्दृष्टदर्शनादेव सम्प्रबोधात् । ततोऽयं किञ्चित्स्पष्टमेव तत्सदृशं पूर्वदृष्टं स्मर्तुमर्हति, तदैव
तन्नामविशेषस्मरणात्, ततस्तस्यैव नामेत्यभिधानप्रतिपत्तः, ततस्तस्य दृश्यस्याभिधानेन योजनामध्यवसायपतनात् किञ्चिद्रूपमभिलपतः,
तस्यापि दृश्यमाननाम्नः पूर्वदृष्टस्य च तत्सदृशस्य सहस्मृतिरयुक्तैव, समयविरोधात्, सकृत्स्मृतिद्वयानभ्युपगमात् कल्पनयोरप्ययुगपद्भा-
वात् । कथमन्यथाऽस्य विकल्पयतोऽपि गोदर्शने कल्पनाविरहसिद्धिः । नाममात्रेऽपि सहस्मृतिरयुक्तैव, तन्नामाक्षरमात्राणामपि क्रम
शोऽध्यवसानात् अध्यवसानाभावे स्मृतेरयोगात् क्षणक्षयादिवत् । न च युगपदध्यवसायः संभवति, विरोधात् । अन्यथा सकृत्
प्रतिपत्तिः स्यात्, नीलमिति नाम्नि नकारादीनां परस्परविविक्तानामप्रतिपत्तेः । किञ्चाभिलापस्य पदलक्षणस्य तदंशानां च वर्णानां
नामविशेषस्य स्मृतावसत्यां व्यवसायः स्यात् सत्यां वा ? नाम्नो नामान्तरेण विनापि स्मृतौ केवलार्थव्यवसायः किं न स्यात् ?
स्वाभिधानविशेषापेक्षा यतोऽर्थो निश्चयैर्व्यवसीयन्ते इत्येकान्तस्य त्यागात्, नाम्नः स्वलक्षणस्यापि स्वाभिधानविशेषानपेक्षस्यैव व्यव
सायवचनात् । तदवचने वा न कश्चिद्व्यवसायः स्यात्, नामतदंशानामव्यवसाये नामार्थव्यवसायायोगात् । दर्शनेनाध्यवसायात्मना
दृश्यस्याप्यदृष्टकल्पत्वात् सकलप्रमाणाभावः, प्रत्यक्षस्याभावेऽनुमानोत्थानाभावात् । तत एव सकलप्रमेयाभावः, प्रमाणाभावे प्रमेयव्यव
स्थानुपपत्तेः । इत्यप्रमाणप्रमेयत्वमशेषस्यायातमसमञ्जसमेव । तदुक्तं न्यायविनिश्चये " अभिलापतदंशानामभिलापविवेकतः । अप्रमाण

रपेक्षसामान्यविशेषवस्तुन्येवोभयस्य प्रत्यक्षसंविदि प्रतिभासनात्, निरन्वयक्षणक्षयिनिरंशपरमाणुलक्षणस्य सुस्पष्टप्रत्यक्षेणाऽग्रहणात् ।
तत्र च व्यवसायोऽनभिजल्पा स्वाभिधानविशेषनिरपेक्ष किम स्यात् ? यतोयं स्वलक्षणमशक्यं न व्यवस्येत् । ततः सामान्यवस्तुकम्
यमभ्यवस्यमाभिलापेन योजयेत् । ततो न किञ्चिद्स्मेयमनभिलाप्य नाम श्रुतज्ञानपरिच्छेद्यं शब्दयोजितस्य श्रुतविषयत्वोपपत्तेः ।
प्रत्यक्षस्यानभिलाप्यत्वे स्मार्त शब्दानुयोजनं स्वसामान्यव्यवसायो यदपेक्षैव सोर्थो व्यवहितो भवेत् तदिन्द्रियज्ञानात्सामान्यव्यव
सायो न स्यात् । यथैव हि शब्दसंसृष्टार्थग्राहिसविकल्पकप्रत्यक्षवादिनामर्थोपयोगे सत्यपि स्मार्तशब्दानुयोजनापेक्षेऽप्रज्ञाने सत्यर्थो
व्यवहितः स्यात् स्मार्तेन शब्दानुयोजनेन इति तदर्थदशज्ञानं सविकल्पकं न स्यात्, तदभावेपि भावास्तुवेपि चाभावादिति दूषणम् ॥
' अर्थोपयोगेपि पुनः स्मार्त शब्दानुयोजनम् । अक्षधीर्यदपेक्षैव सोर्थो व्यवहितो भवेत् ॥१॥' इति वचनात् समुद्भाव्यते, तथैव शब्दा
नुयोजनासहितार्थग्राहिविकल्पवादिनामपि सौगतानामिन्द्रियज्ञानमुपयोगे सत्यपि विकल्पोत्पत्तौ स्मार्त शब्दानुयोजनं विकल्पो
यदपेक्षेत तदा तदिन्द्रियज्ञानं स्वविषयनामविशेषस्मरणेन तद्योजनेन च व्यवहितं स्यात् । तथा च नेन्द्रियज्ञानाद्व्यवसायः स्यात्
तदभावे भावास्तुवेपि चाभावादिति दूषणमुद्भावनीयं, ' ज्ञानोपयोगेपि पुनः स्मार्त शब्दानुयोजनं । विकल्पो यदपेक्षेताव्यवर्ध्य व्यव
हितं भवेत् ' ॥१॥ इति वक्तुं शक्यत्वात्, अर्थशब्देन प्रत्यक्षस्याभिधानात्, कचिद्विषयेण विषयिणो वचनाद्धर्मकीर्तिकारिकाया एव
तन्मतदूषणपरत्वेन व्याख्यातुं शक्यत्वात् । यथा च प्रागजनको योर्थोभिलापसंसृष्टार्थेन्द्रियबुद्धेः स पश्चादपि स्मार्तशब्दानुयोजनेपि
तस्योपयोगाविशेषादजनक एव तेनार्थापायेपि नेत्रधीः शब्दार्थसवाविन स्यादिति धर्मकीर्तिदूषणम्, ' यः प्रागजनको बुद्धेरुपयोगाविशे
षतः । स पश्चादपि तेन स्यादर्थापायेपि नेत्रधी ॥१॥ ' इति वचनात् । तथा यदिन्द्रियज्ञानं स्मार्तशब्दयोजनात्प्रागजनकं सामान्यव्यवसा

शौचादिज्ञानाधीनकृतिसाध्यताज्ञानात् तत्र प्रवृत्तिसम्भव , यथा नित्ये शौचादिमत्त्वप्रतिसन्धानजन्यमन्यत्रेष्टसाधनताज्ञान जन्यमिष्टसाधनताज्ञानकालीनं वा कार्यताज्ञानं प्रवृत्तिहेतुः, प्रवृत्तिसामान्ये च कार्यताज्ञानमिति न दोषः, न चैवं लाघवाद् बलवदनिष्टाननुबन्धीष्टसाधनताविषयककार्यताज्ञानमेव हेतुरस्त्विति वाच्यम्, नित्ये तदभावात्, साध्यत्वसाधनत्वयोर्विरोधे-नेष्टसाधनत्वकृतिसाध्यत्वयोर्युगपद् ज्ञातुमशक्यत्वाच्च, साध्यत्वं ह्यसिद्धस्य धर्मः साधनत्वं च सिद्धस्येति कालभेदादेवोभयग्रहसम्भवादिति प्राभाकरमतानुसारिणः। जरन्नैयायिकास्तु बलवदनिष्टाननुबन्धीष्टसाधनताविषयककृतिसाध्यताज्ञानमेव लाघवात् प्रवर्तकं नत्विष्टसाधनताज्ञानजन्यकार्यताज्ञानादि, गौरवात् । न च फलाभावान्नित्ये इष्टसाधनताज्ञानासम्भव', नित्येऽपि यद्वा फलश्रुतेर्यत्रापि न फलश्रुतिस्तत्रापि विश्वजिन्न्यायात् स्वर्गस्य प्रत्यवायपरिहारस्य वा फलस्य कल्पनात्, न चैवं कामनाधीनकर्तव्यत्वेन नित्ये नित्यत्वहानिः, यवकरणे प्रत्यवायस्तस्यैव नित्यत्वात्, न चैव कामनाया अधिकारविशेषणत्वात् तदभावेऽशुचेरिधानधिकारिणो नित्येऽप्रवृत्तौ प्रत्यवायानापत्तिः, कामनेतरयावदधिकारघटकस्यैव प्रत्यवायहेतुत्वकल्पनात् , न च साध्यत्वसाधनत्वयोर्विरोधः, एकस्मिन् पाके ओदनसाधनत्वकृतिसाध्यत्वयो' सर्वसिद्धत्वेन तयोरविरोधात्, अन्यथा परस्येष्टसाधनताज्ञानकालीनकार्यताज्ञानस्य प्रवर्तकत्वाभ्युपगमानुपपत्तेः, विध्यर्थोऽपि बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यत्वमेव, कलञ्जभक्षणे इष्टसाधनत्वकृतिसाध्यत्वसत्त्वेऽपि बलवदनिष्टाननुबन्धित्वाभावात् 'न कलञ्जं भक्षयेत्' इति विध्यर्थनिषेधोपपत्तिरित्याहुः। नव्यास्तु विशेषणविशेष्यभावे विनिगमकाभावाद्बलवदनिष्टाननुबन्धित्वादित्रये पृथगेव शक्तिः, कारणतापि प्रत्येकज्ञानत्वेनैव, वस्तुतः कृतिसाध्यताधीत्वेनैव चिकीर्षां प्रति हेतुत्वम्, इष्टसाधन

कस्यापि सुखादौ चिकीर्षोत्पत्तेरिष्टत्वात्, मण्डलीकरणादौ चोपायेच्छासामान्यसामग्र्यभावेनैव तदभावात्, का पुनः सेति चेत्, इष्टसाधनताज्ञानं बलवदनिष्टाननुबन्धित्वज्ञानं चेत्याहुः । केचित्त्विष्टसाधनत्वमेव विध्यर्थः । न तु कृतिसाध्यत्वमपि, यागादौ सर्वत्र लोकत एव तस्यावगम्यमानत्वेनानन्यलभ्यत्वात्, अत एव प्रवृत्तिकारणमिष्टसाधनताज्ञानमेव न तु कृतिसाध्यताज्ञानमपि, बलवदनिष्टाननुबन्धित्वज्ञानं च न हेतुः । प्रवृत्तौ कारणसद्भावेन द्वेषस्य प्रतिबन्धकत्वेन तदभावेनान्यथासिद्धत्वात्, आस्तिकस्य गुरुस्त्र्यागम्यागमनादौ नरकसाधनताज्ञानदशायामप्युत्कटेच्छया द्वेषाभावकालीनप्रवृत्तौ व्यभिचाराच्च, न चोत्कटरागेण नरकसाधनत्वज्ञानमेव कस्यचित् जन्यत इति वक्तुम्, आस्तिकत्वव्याघातात् तस्य समानविषयतया द्वेषप्रतिबन्धकत्वेन एव साधनाच । तदुक्तं मण्डनमिश्रैः—"पुंसां नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः । प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥१॥" इत्याहुः, परे तु ममेदं कृतिसाध्यमिति ज्ञानं न प्रवर्तकम्, अनागतस्य तस्य ज्ञातुमशक्यत्वात्, किन्तु यादृशस्य पुंसः कृतिसाध्यं यद् दृष्टं तादृशत्वं स्वस्य प्रतिसन्धाय तत्र प्रवर्तते प्रेक्षावान्, यथा ओदनकामस्य तत्साधनज्ञानवतस्तदुपकरणवतः पाकः कृतिसाध्यस्तादृशश्चाहमिति प्रतिसन्धाय पाके प्रवर्तत इत्याहुः, तन्न, स्वकल्पितलिप्यादिप्रवृत्तौ यौवने कामोद्रेकादिना सम्भोगादिप्रवृत्तौ च तदभावात्, इदं तु बोध्यम्, इदानीमिष्टसाधनतादिज्ञानं प्रवर्तकम्, तेन भाविपौवराज्ये बालस्य न प्रवृत्तिः, तदानीं कृतिसाध्यत्वाभावात्, तृप्तस्य च भोजने न प्रवृत्तिः, तदानीमिष्टसाधनत्वाभावादिति । उदयनाचार्यास्तु आप्ताभिप्रायो विध्यर्थः, पाकं कुर्यादित्यादावाज्ञादिरूपेच्छावाचित्वात्, लिङस्तत्रेच्छावाचित्वे क्लृप्तत्वात्, एवं स्वर्गकामो यजेतेत्यादौ यागः स्वर्गकामकृतिसाध्यतयाप्तेष्ट इत्यर्थः, तदमाप्तेष्टत्वेन स्वेष्टसा-

धनत्वाद्यनुमाय तत्र प्रवर्तते प्रेक्षावान्, फलत्रयमवधार्य तदभावान्न प्रवर्तते । यस्तु वेदे पौरुषेयत्वं नाभ्युपैति तं प्रति विधिरेव तावद् गर्भ इव कुमार्याः पुंयोगे मानमित्याहुः । वयं तु ब्रूमः—कार्यादिरूपनियोगस्येष्टसाधनत्वादेर्वा लिङर्थस्य-मित्यत्र नास्माकमेकान्तः शब्दशक्तेर्विचित्रत्वात् यथाव्युत्पत्ति जायमानस्य विचित्रबोधस्य च लाघवमात्रेणानपवदनीयत्वात्, प्रवृत्तिहेतुता तदर्थज्ञानानां तद्विषयकवीर्यान्तरायकर्मक्षयोपशमजनकत्वेनैव प्रतिजनकत्वेनेव घटं प्रति दण्डस्यान्यं प्रती त्यायन्यथासिद्धौ फलाननुगुणस्वरूपान्यविशेषणप्रक्षेपगौरवेण प्रकृते तदभावात्, इत्थं चेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखा जनकेष्टसाधनत्वस्यैव प्रवृत्त्युपपत्ति, विष्यर्थज्ञानेऽपि तत्रालस्यबोधप्रतिबन्धेन वीर्यान्तरायकर्मक्षयोपशमानिष्पत्तेः, इत्थमेव चावि-रतसम्यग्दृष्ट्यादेः शक्यविरत्यादौ प्रवृत्त्यभावोपपत्तिः, तत्र तस्य बलवदनिष्टहेतुताज्ञानेबलवत्वे चाऽभ्युपगम्यमाने सम्यक्त्व क्षतिरेव, विपर्ययस्य मिथ्यात्वलक्षणत्वात्, अत एव भद्रालोः शक्यविरत्याद्यभावोपपत्तये चारित्रमोहनीयं कर्म कल्प्यत इत्यन्यत्र विस्तरः । *नन्वेवं नियोगनिराकरणेऽपीत्यादिना नियोगस्य वाक्यार्थत्वं निराकृत्य भावनायास्तत्त्वसाधनायोग्यत्वं भाट्टं प्रति तर्हि विधिरेव वाक्यार्थोऽस्तु न भावनेत्यन्तरा बल्गतो वेदान्तिनो मतं सौगतनयाश्रयणेन दूषयति । †परमब्रह्मणो विधिरेवे त्यादि, अधिकरणस्वरूपस्याभावस्येत्यर्थः, तस्य चेति स्वरूपविधेरित्यर्थः, सामान्यैकप्राप्यत्वादन्यापोहवादे न विरोध इति भावः । ‡विधिवादिनोऽपीति, तत्रापि सद्द्वैतेनातद्व्यावृत्तेरभावात्मिकाया अस्पर्शादित्यर्थः, §प्रतिभाससमानाधिक रणत्वेनेति, भातीतिक्रियासमानाधिकरणत्वेनेत्यर्थ, तथा चाय प्रयोगः, अन्यापोढः प्रतिभासान्तः प्रविष्टः भातीतिक्रियासमा

पत्र १८ पृ १ पं ३ । † पत्र १८ प २ पं १ । ‡ पत्र १८ पृ २ पं ३ । § पत्र १८ पृ २ पं ४ ।

नाधिकरणत्वात् मानस्वरूपवदिति, §परमब्रह्मत्वेनेति तथा चोपनिषद्वाक्यादेर्ब्रह्मत्वेन प्रतिभासाद्भेदो वाक्यत्वादिना च भेद इति रूपभेदाच्च विरोध इत्यर्थः। सम्यक् तत्त्वसंवेद्यतान्यथानुपपत्तेरिति, प्रतिपादकादिभ्यो भिन्नस्य एव ह्युपनिषद्वाक्यस्य मत्स्वेच्छया तथा भोग्यस्य चन तदाकारतया संविषता स्यात्, अन्यथा तु सांविभासत्वेन साधारम्येन प्रतिभासो न स्यादित्यर्थः। †भग्नभासस्यस्यापि सुप्रसिद्धत्वादिति, ननु प्रतिभासस्य सुप्रसिद्धतया न प्रतिभासाद्वैतबाधा प्रतिभासस्य प्रतिभासकमतयैव साक्षिकस्वार्थसन्निध्यात्वेन प्रतिभासमात्रस्यैव सत्यत्वसिद्धेः, नहि मिथ्याहिः सुप्रसिद्धोऽपि सत्यरज्जुरूपाधिष्ठानं बाधत इति, प्रपञ्चप्रतिभासोऽपि च बाधकविषयेण, यदा च विधिवदधीतवेदान्तस्यासम्भावनाविपरीतभावनास्य विधदोषदूषितस्याध्यारोपापवादन्यायेनाचार्योपदेशसमनन्तरमेव तत्त्वमस्यादिवाक्यजन्यात् ब्रह्म ब्रह्माऽस्मीत्यखण्डाकारा माधास्काररूपान्तःकरणवृत्तिरुदेति, शब्दजन्यज्ञानस्यापि विषयापरोक्षत्वेनापरोक्षत्वसम्भवात्, दशमस्त्वमसीत्यादिवाक्यजन्यज्ञानवत्, ज्ञानस्य परोक्षापरोक्षत्वयोः करणभेदस्यानियामकत्वात्, एकस्मादेव मनसः सुखादिविषयापरोक्षज्ञानस्यातीतार्थस्मृतः परोक्षायाश्चोत्पादात् तदा सा वृत्तिः प्रत्यक्चैतन्यस्यासा मूलज्ञानं बाधित्वा दग्धे धनानलवत् स्वयमुपशाम्यति, तदैव तत्प्रतिबिम्बितं चैतन्यमपि, केवलब्रह्ममात्रमवशिष्यते, दर्पणाभाव मुखस्येवोपाधिविलये उपहितस्य स्वरूपमात्रावस्थानस्वभावत्वादिति सिद्धं प्रतिभासाद्वैतेन व्यवहारदशायामनिर्वचनीयप्रतिभासस्य प्रतीतावपि परमार्थदशायां तददृष्टेरिति चेत्, न, बाधार्थस्यापारमार्थिकत्वे तत्त्वमस्यादिवाक्यजन्यज्ञानविषयताया अपि ब्रह्मण्यसत्त्वेन तत्प्रत्यक्षज्ञाननिश्चयस्ययोगात्, ज्ञानाज्ञानयोः समानाश्रय

§ पत्र १८ पृ २ पं ११। पत्र १९ पृ १ पं १। † पत्र १९ पृ १ पं ११।

विषयकत्वेन नाश्यनाशकभावात्, किं चानिर्वचनीयानां घटादिपदार्थानामभ्युपगमापेक्षया सत्यतदभ्युपगम एव श्रेयान्, अन्यथा जाग्रत्स्वप्नयोर्विशेषाभावमनिर्वचनीयविश्वस्यापि कल्पनापत्तेः प्रतिनियतकार्यकारणभावोच्छेदप्रसङ्गात्, किञ्च प्रतिभासाद्वैते यस्य मोक्षव्यवस्थैव दुर्घटा, निर्बीजकल्पनामूलानामज्ञानतत्कार्याणामसत्त्वात्, सत्त्वे वा तन्निवृत्तेः कर्तुमशक्यत्वात्, तन्निवृत्तेरसत्त्वे मुक्तेः सदाविद्यामयत्वापत्तेः, सत्यत्वे द्वितीयसत्त्वेनाद्वैतव्याघातापत्तेः, अनिर्वचनीयत्वे प्रपञ्चानुगमापत्तेः, सत्यासत्यानिर्वचनीयातिरिक्तप्रकाराभावे च तस्य जात्यन्तरत्वे स्याद्वादाभ्युपगमापत्तेः, तेनैव च सर्वनिषेधिऽद्वैतकुसृष्टिकष्टस्यानादरणीयत्वात्, न च यथाविस्मृतस्वरूपस्यावज्ञाननिवृत्तेरदोषः, तस्य शाश्वतत्वेन संसारदशायां मुक्तत्वापत्तेः, न तत्कालोपलक्षितात्मनोऽपि परिणामित्वं विना मुक्तत्वं युक्तम्, उपलक्ष्यताया अपि कूटस्थेऽसम्भवादिति यत्किञ्चिदेतत्, तदिदमभिप्रेत्याहुः—

सर्वत्र प्रसिद्धं मुक्तिस्वरूपमनूद्य श्रीहरिभद्राचार्याः—

" परिणामिन्यात्मनि सति, तत्पूर्वानिवास्यमेतदखिलं स्यात् । अर्थान्तरे च तत्त्वेऽविद्यादौ वस्तु सत्येव ॥ १ ॥
पुरुषाद्वैत तु यदा, भवति विशिष्टश्च बोधमात्रं वा । भवभवविगमविभेद—स्तदा कथं युज्यते मुख्यः ॥ २ ॥
अग्निजलभूमयो यद्, परितापकरा भवेऽनुभवसिद्धाः । रागादयश्च रौद्रा असत्प्रवृत्त्यास्पदं लोके ॥ ३ ॥
परिकल्पिता यदि ततो, न सन्ति तत्त्वेन कथममी स्युरिति । परिकल्पिते च तत्त्वे, भवभवविगमौ कथं युक्तौ ॥ ४ ॥
परिकल्पनापि चैषा, हन्त विकल्पात्मिका न सम्भवति । तन्मात्र एव तत्त्वे यदि वा भावो न जात्वस्याः ॥५॥ " इति

पत्र २२ पृ १ ५ ७ ।

अधिकं भस्तृमानेकान्तव्यवस्थायाम्, ' परव्यापृतिद्वारेण चेत्यादि,' ननु पुरोवर्तिनीष्टतावच्छेदकप्रकारकज्ञान त्वेनैव लाघवात् प्रवर्तकत्वा नत्वनिष्टतावच्छेदकाभावप्रकारकज्ञानत्वेन गौरवादिति विधेः प्रामाण्ये विनिगमकमस्तीति चेत्, न, मतद्व्यावृत्तिप्रकारकज्ञानादपि बहूनां प्रवृत्तेस्तद्व्यावृत्तिविध्यन्यतरनिष्ठप्रकारताविशेषस्यैव प्रवर्तकतावच्छेदकत्वौचित्यात्, अस्तु वा द्व्याधाकारताविलक्षणरजताधाकारताशालिज्ञानत्वेन रजताधाकारप्रवृत्तौ हेतुत्वम्, रजताद्याकारतैव चारव्यत्तमिभाया कारता, तयदाकारतास्वभेदाय व्यवहारभेदः, वस्तुतो विधिज्ञानस्य प्रवर्तकत्वेऽपि निष्कम्पप्रवृत्त्यर्थमतद्व्यावृत्तिविषयत्वध्रौव्यम्, तत्संसर्गतयैव निषपत्वमन्यथेरिति नैकतरपक्षपातो युक्त इति दिक्। *विधात्रेवेति, एतेन "आहुर्विधातृ प्रत्यक्षं, न निषेद्धृ विपश्चितः। नैकत्वे आगमस्तेन, प्रत्यक्षेण प्रबाध्यते ॥१॥" इति मण्डनमिश्रोक्तमपास्तम्, वस्तुनो विधिनिषेधोभयांशसंवलितत्वेन विध्यंश इव निषेधांशेऽपि प्रत्यक्षव्यापारानुपरमात्। अथ निर्विकल्पकरूपमेव प्रत्यक्षप्रमाणं स्वीक्रियते न सविकल्पकम्, तस्य जात्यादियोजनात्मकत्वेन स्मृतिप्रायत्वात्, तच्च भावस्यैव भवति नाभावस्य, तस्य सविकल्पकैकवेद्यत्वस्वीकारादिति विधात्रेव प्रत्यक्षमिति वचनं नाचतुरस्रमिति चेत्, न, अभावः सविकल्पकैकवेद्य इति सिद्धान्तस्य निर्युक्तिकत्वात्, इन्द्रियसन्निकर्षतालाघवस्याभावस्यापि निर्विकल्पकसिद्धेः, इन्द्रियसम्बद्धविशेषणतायाः प्रतियोगिविशेषिताभावप्रत्यक्षत्वमेव कार्यतावच्छेदकमित्यत्र मानाभावात्, अन्यथा सप्रकारकप्रत्यक्षत्वावच्छिन्न एव लौकिकप्रत्यासत्तिसम्बन्धेनेन्द्रियत्वेन हेतुताया युक्तत्वात्-भावानिर्विकल्पकस्याप्युच्छेदापत्तेः, नेत्याप्रकारकप्रत्यक्षमात्राय प्रथमहेतुताया एव युक्तत्वमिति चेत्, न, न नेत्या-

पत्र २२ पृ १ पं ८।

कारकप्रत्यक्षवारणाय द्वितीयहेतुवाचा एव युक्तत्वात्, किञ्चिदस्तीति प्रयोगाच्च नेतीदमेवेति चेत्, घटत्वमिदं दृश्यत इति प्रयोगाभेत्यपि किं नेष्टम्? भावत्वेनाखण्डोपाधिना भावस्येवाभावत्वेनाखण्डोपाधिनाऽभावस्यापि प्रत्यक्षोपगमे बाधकाभावात्, नञुल्लेखस्य तु प्रतियोगिवाचकपदनिपतत्वेनासार्वत्रिकत्वात्, अभावज्ञानस्य प्रतियोगिधीसापेक्षत्वात् घटत्वावच्छिन्नप्रकारतान्यप्रकारतानिरूपिताभावविषयताकप्रत्यक्षे घटादिधियो हेतुत्वाभ्युपगमात् निर्विकल्पकमभाव इत्याकारकप्रत्यक्षं च जायते ईदृशप्रत्यक्षस्य निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तत्वात् तस्य चासम्भवादिति चेत्, न, तथाप्यभावस्य निर्विकल्पकापत्तेः, लाघवाय घटपटोभयाभावप्रत्यक्षनिर्वाहाय च घटादिधियो घटत्वावच्छिन्नप्रकारत्वनिरूपिताभावविषयताकप्रत्यक्ष एव हेतुत्वौचित्येन केवलाभावनिर्विकल्पकस्य वारयितुमशक्यत्वात्, यदि चाभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वनियमात् विशेषसामग्रीं विना सामान्यसामग्रीमात्रात् कार्यानुत्पत्तेर्नाभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं वा विशेषणज्ञानादिरूपविशेषसामग्र्यभावादिति विभाव्यते, तदा द्रव्यलौकिकप्रत्यक्षस्यापि किञ्चिद्धर्मावच्छिन्नपर्यायविशिष्टविषयकत्वनियमाद्वस्तुमात्रस्य सविकल्पकैकवेद्यत्वमस्तु, यदि च शुद्धब्रह्मणि निर्विकल्पकविषयत्वमेव तत्त्वमसीत्यादिवाक्यादपि शुद्धब्रह्ममयाऽखण्डप्रमेयपदशक्तिग्रहेण निर्विकल्पकशाब्दबोधोपपत्तिरिति विभाव्यते तदा द्रव्यार्थादेशात् सर्वत्र विशेषविनिर्मोकेण निर्विकल्पकपदशक्तिग्रहसम्भवात् सर्वस्यैव निर्विकल्पकैकवेद्यमस्त्विति निर्विकल्पसविकल्पकतयाऽपि पदार्थानामनेकान्त एव श्रेयान्। तदुक्तं पुरुषद्रव्यमाश्रित्य सम्मतौ–"सवियप्पणिव्वियप्पं, इय पुरिसं जो भणेज्ज अवियप्पं। सवियप्पमेव वा णिच्छएण ण स णिच्छिओ समए ॥ १ ॥" त्ति तथा च सर्वप्रमाणानां निर्विकल्पकादेशाद्विधायकत्वं सविकल्पकादेशाच्च निषेधकत्वमिति

तुल्यौ विधिनिषेधाविति मन्तव्यम्, अधिकमेतदर्थं नयामृततरङ्गिण्यां प्रतिपादितमस्माभिरिति तत एवावगन्तव्यम्। नियोगस्यैवेत्याद्यारभ्य भावनावाक्यार्थत्वसाधनोपक्रमो माथुरस्य, †शब्दात्मेति, शब्दात्मभावनां शब्दनिष्ठप्रवर्तनालक्षणाम्, †अन्याम् आख्यातसामान्यार्थभिधाम्, †इयं तु पचतीत्यादौ दृश्यमाना भावना तु, †अन्यैव तत, †सर्वार्था आख्यातसामान्यलक्ष्या, अत एव †सर्वाख्यातेषु वर्तते वाचकत्वेन, ‡शब्देन हीति, तथा च फलान्वितधात्वर्थान्वितार्थ-भावनाजनकत्वं शब्दभावनात्वमित्यर्थः, §तन्मात्रमिति, अत्र स्थाने, अन्यत्र "सम्बन्धिभेदात् सत्तैव, भिद्यमाना गवादिषु। जातिरित्युच्यते तस्यां, सर्वे शब्दा व्यवस्थिताः॥१॥" इति कारिकाऽस्ति, तदर्थो गवादिशब्दानां महासत्तावाचित्वम्, गोत्वा-दस्तु प्रयोगोपाधितया लाभ इति। एवं च सर्वशब्दाविशेष इति मञ्जूषाकारिकया कारकासम्पृक्तस्य शुद्धस्य भावस्य धात्वर्थत्वं प्रतिपाद्यते, ॥तामिति, तां सत्ताम्, ¶महानात्मा इदं मम, यां त्वतलादयो भावप्रत्यया आहुरिति, तेषां खलु सत्तासामान्यमर्थः, घटपटादिपुरुषत्वादीनां च प्रकृतिजन्यबोधप्रकारो धर्मो घटत्वादिः, न चैवं घटत्वत्वस्यापि वाच्यत्वापत्तौ गौरवम्, तत्तद्व्यक्तिविशिष्टमहासत्ताया एव घटत्वपटत्वादिरूपत्वेनात्र लघुगुरुविचारानवकाशात्, अत एव वार्तिककारे-णास्य भावस्त्वतलाविति यत्र यस्य गुणस्य भावात् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलावित्युक्तम्, यस्य गुणस्य विशेषणस्य भावात्तमपहाय द्रव्ये विशेषे शब्दनिवेशः शब्दप्रवृत्तिस्तस्मिन् वाच्ये त्वतलाविति तदर्थः, तथा च रूपादिशब्देभ्यो जातौ

---

पत्र २१ पृ १ पं १२। † पत्र २१ पृ २ पं १। ‡ पत्र २१ पृ २ पं २। § पत्र २१ पृ २ पं ४।
॥ पत्र २१ पृ २ पं ५। ¶ पत्र २१ पृ २ पं ६।

वाक्यरेवैव शाब्दबोध इति दिक् । किं मेच्यत इति, ( २२ २ ११ ) आख्यातार्थतयेति शेषः, तथा च लिङादीति, अत्र क्रियामात्रमर्थभावना, लिङादिनिष्ठा प्रवर्तना तु किं कथं केनेत्यंशत्रयवती शब्दभावनेति विशेषः । तदुक्तम्, " लिङो अभिधा सैव तु शब्दभावना, भाव्यं तु तस्याः पुरुषप्रवृत्तिः । सम्बन्धबोधः करणं तदीयं, प्ररोचना चाङ्गतयोपयुज्यते " ॥१॥ इति । ननु चेत्याद्यारभ्य प्रज्ञाकर इत्यन्तो ( २४ १ ७ ) पुरुषाकार एव नियोगो भावना वा लिङाद्यर्थो न तु भाव इति सौगतस्य पूर्वपक्षः, सोऽपि न परीक्षक इत्यादिना प्रत्ययवच्छब्दस्य मुख्यमर्थप्राप्तिर्न प्रवर्तकत्वं च, अन्यथा तस्यापि धर्म स्यादित्यनेनान्यथासिद्धेः, भावीष्टसाधनताया पुरुषस्य बोधमत्र मुख्यत्वादित्यादिग्रन्थेन्या समिरासः । भावना विशेषणत्वेनेति, ( २४ २ ७ ) तथा च भावनान्वययोग्ये कर्मत्वादानपरुद्धप्रधमान्तपदोपस्थाप्ये लिङर्थसंख्यान्वय इति कर्तृमतमसंख्याभिधानानभिधानाभ्यामेवाभिहितानभिहिताधिकारीयव्यवस्थेति नानुपपत्तिरिति भावः । भावनैक्यात्-द्विवचनबहुवचनाप्राप्तेर्नेत्यमावदोपस्याप्येतदेव समाधानं द्रष्टव्यम्, भावनान्वयिनो द्वित्वादिना द्विवचनाद्युपपत्तेः । तस्य कर्तृमदाद् भेद इति, ( २५ २ ७ ) तस्य प्रत्ययार्थस्य स्वान्वययोग्यभेदाद् भिन्नसंख्यान्वितवदन्वयित्वमित्यर्थः । न कारकभेदाद् भेदीति, ( २६ १ १ ) न संख्याभेदाभयकारकान्वयित्वेन भिन्नस्वरूप इत्यर्थः । आख्यातार्थसंख्यान्व विकारकस्याख्यातेनैव सर्व भाव्यत्वादिति भावः । तथा च चैत्रमैत्राभ्यामास्यत इत्यत्राख्यातार्थसंख्यायाः कारकानन्वित स्वान्वयिन्याधेनोत्सर्गिकमवचनम्, धात्वर्थे स्वव्युत्पत्तेरेव न तदन्वयः, आर्थन्यायेन कथंचिच तदन्वयस्वीकारेऽपि सम्प्रदायविरुद्धत्वादेव न द्वित्वादिविषयया द्विवचनादिकमिति मन्तव्यम्, कारकरूपमभ्याद्यादिरूपमेव द्वित्वादिकमाख्यातार्थ

शयनादिना नियोगे प्रतिपादय इत्यत्र प्रत्यवतिष्ठते सौगतः स्याद्वाकूत सम्बन्धात् पदीस्याविना, (२६ १ २) सम्बन्धात् भिन्नकारकसम्बन्धात्, तत्रैव क्रियाभेदः, धात्वर्थस्यापीति, (२६ १ २) चैत्रमैत्राभ्यामास्यत इत्यत्र कर्तृद्वयसम्बन्धेन धात्वर्थेऽपि द्वित्वात् द्विवचनापत्तिरिति भावः, स्वमते उपपत्तिमाह सौगतः, अस्माकं त्विति, (२६ १ २) भेदेन हि विवक्ष्यत इति, (२६ १ २) कर्तृभिन्नत्वेन विवक्षिता सती कर्माभिन्नत्वेन विवक्षाभावीकृते कर्माभिन्नत्वेन विवक्षिता न कर्तृभिन्नत्वेन नियतामिति कर्मकर्त्रभिधानानभिधाननियम इति भावः । पारमार्थिकस्योपपत्तेरिति, (२६ १ २) तथा च भावनान्वयिनि सङ्ख्यान्वयाद्यभिधानानभिधानव्यवस्था पारमार्थिक्येव युक्ता, अन्यथोभयविवक्षानिमित्तस्य युगपदेकत्रासम्भवेनौदनः पच्यते स्वयमेवेत्यादिकर्मकर्तृप्रयोगोच्छेदापत्तेः, अतस्कर्मादिभेदविषया व्यवस्थोपपादने सकर्मकाकर्मकप्रयोगादेरपि यादृच्छिकत्वापत्तेः । पारमार्थिके तु सकलस्वरूपेऽप्यर्थे नेच्छाधीनोऽयः, किन्तर्थप्रयोजनाद्यधीनेच्छेति न व्यवस्थापत्तिरित्यादि द्रष्टव्यम् । स्याद्वाकूत ते (२८ १ २) इत्याद्यारम्य प्रभाकरमतम्, ननु सामान्यप्रत्यक्षादि स्यादि (२८ १ ८) संशयकारणोपपादनं भाट्टस्य तदसहमानस्य, न त्वनुपलम्भात् (२८ १ ०) इत्यादिरुक्तिः प्राभाकरस्य, अभाव एवेति, (२८ १ ९) अभावप्रमाणजन्या प्रमैवेत्यर्थः, सामान्येनेति, (२८ १ ९) योग्या योग्यानुपलम्भविकल्पत्रयौदासीन्येनानुपलम्भमात्रं प्रमाणमिति वादिन इत्यर्थः । तथानुपलब्धेरेव, (२८ १ १०) अनुपलब्धित्वसमानाधानुपलब्धेरेव, पिशाचादीनामिव संशयो भवत्वित्यर्थः, न स्यादिति अभावनिश्चयकारिणीति शेषः, स्यात् संशय इति (२८ १ १०) नियतसामग्र्यभावेन सम्भूतसामग्रीकत्वादित्यर्थः, सामान्यप्रत्यक्षतायामिति

(२८ । १२) तदभिमतया विशेषस्यापि प्रत्यक्षसिद्धत्वादिति भावः । 'युक्तस्तत्र सन्देह इति' (२९ । ८) उक्तरीत्या सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षादनेकविशेषस्मरणाच्च संशय इति प्रागुक्तार्थस्य निर्व्यूढत्वादिति भावः । अत्र सामान्यप्रत्यक्षं धर्मिज्ञानविषया विशेषाप्रत्यक्षं विशेषादर्शनविषयाऽनेकविशेषस्मरणं च कोटिद्वयोपस्थितिविधया संशयकारणमिति मन्तव्यम् । ननु कोट्योर्विरोधज्ञानमपि संशयकारणमस्ति तत्कुतो नोत्कीर्तितमिति चेत्, सत्यम्, संशये तदभिकरणावृत्तित्वरूपो विरोधो न प्रकारस्तथा सति तस्य तदभावव्याप्तिपर्यवसायित्वेन तदभावव्याप्यवत्तानिश्चयरूपसंशयप्रतिबन्धकत्वात्तद्भानस्य च कार्यसहभावेन हेतुत्वात् संशयमात्रस्य दुर्लभत्वापत्तेः, न च तदभावव्याप्यवत्तानिश्चयत्वं तदभावाऽप्रकारकत्वघटितम्, गौरवात्, अन्यथा वह्न्यभावव्याप्यव्याप्यवान् वह्निव्याप्यवान् पर्वत इति परामर्शात् पर्वतो वह्निमान् तदभावव्याप्यवांश्चेति संशयरूपाया अनुमितेर्दुर्वारत्वापत्तेः, किन्तूक्तविरोधः संशये संसर्गतया भासते, तस्य च पूर्वमुपस्थितिनैरपेक्ष्यवेति विरोधज्ञानस्य संशयहेतुत्वोत्कीर्तनायोगात् । किञ्च विरोधाविषयकैकधर्मिकत्वात्तत्तदभावप्रकारकज्ञानेऽपि संशयव्यवहारात् अन्यथा तस्य संशयान्यत्वे ततो निश्चयकार्योपत्तेः, संशये न विरोधविषयकत्वस्यार्थोऽपीत्यलं तत्र तज्ज्ञानहेतुत्वशङ्कया । एतेन तद्वत्ताप्रतिबन्धकतावच्छेदकविषयत्वरूपस्य विरोधस्यापि प्रकारतया संसर्गतया च संशये भानमपास्तम् । अपास्तं च तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वमेकं तदभावव्याप्तिप्रकारतानिरूपिततद्धर्मावच्छिन्नविशेष्यताशालिनिर्णयविशिष्टतद्धर्मावच्छिन्नप्रकारताशालिनिर्णयत्वेन पुरुषत्वव्याप्यं करादि करादिमानयमिति ज्ञानद्वयादपि पुरुषत्वसन्देहनिरासे, अपरं च तदभावव्याप्यतिरिक्तभिन्नप्रकारतानिरूपितप्रकारताशालिनिर्णयत्वेन,

पुरुषत्वव्याप्यवानयमिति ज्ञानादपि पुरुषत्वसन्देहनिवृत्तेः, एवं च संशये कोटचंशे विरुद्धत्वकोटितावच्छेदकयोरेकत्र द्वयमिति रीत्या मानोपगमाच्चोपदर्शितप्रतिबन्धकतावच्छेदककुक्ष्या चतुरानाक्रान्तत्वेनानुपपत्तेरभाव इति रघुदेवोक्तमपि, तदभावव्या रीत्या मानोपगमाच्चोपदर्शितप्रतिबन्धकतावच्छेदककुक्ष्या तदभावव्याप्तिनिष्ठप्रकारतानिरूपितत्वनिवेश एव साधवाय, अन्यथैकत्र द्वयमिति व्यतिरिक्तनिष्ठप्रकारतानिरूपितत्वापत्त्या तदभावव्याप्तिनिष्ठप्रकारतानिरूपितत्वनिवेश एव साधवाय, अन्यथैकत्र द्वयमिति रीत्या तदभावव्याप्तिकरत्वावगाहिनो विशेषदर्शनस्य तद्व्याप्तिज्ञानप्रतिबन्धकत्वानुपपत्तेरिति दिक्। अयं स्थाणुर्वा पुरुषो वा। इत्यत्रापि स्थाणुत्वतदभावपुरुषत्वतदभावरूपकोटिचतुष्टयमादायैव संशयः स्वीक्रियते सामान्यवाक्यादिवपदार्थधर्मिणः स्थाणुपुरुषपदाभ्यां स्थाणुत्वपुरुषत्वयोर्वाकारद्वयेन चाभावद्वयस्योपस्थितेः, केवलं स नव्यमते शाब्दः, जीर्णनैयायिकमते सोपनयसहकारेण मानस इति विशेष इति नानुपपत्तिः, अन्य त्वेकधर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानं संशय इति संशयलक्षणं मुक्त, तन्मते स्थाणुर्वा पुरुषो वेत्येवं द्विकोटिक एव संशयः, विरोधज्ञानं च तन्मते संशयकारणमिति मन्तव्यम्, तल्लक्षणा धर्मिधर्मितावच्छेदकनिष्ठविशेष्यतावच्छेदकत्वेन विरुद्धत्वेन नानाधर्मप्रकारकत्वम्, तेन द्रव्यत्वतो वह्नितदभाववन्तौ चेत्यादेः घटो द्रव्यं पृथिवी चेत्यादेश्च निरासः, एकधर्मिकविरुद्धनानाप्रकारकज्ञान विस्तारः सुगतादिव स्वतन्त्रतद्रूपवत्त्वादेर्घटो द्रव्यं पृथिवी चेत्यादेश्च निरासः, एवं संशयत्वशून्यज्ञानस्वरूप स्वरूपं कोटिद्वयविशेषमानससामग्रीसमाधाधीन संशयत्वं नीलघटत्ववत् कार्यतावच्छेदकम्, एवं संशयत्वशून्यज्ञानस्वरूप निश्चयत्वमपि नीलत्वशून्यघटत्ववदेवेति दीधितिकृतः, न चैवं धर्मिज्ञानमन्तरेण निश्चयवत् संशयोऽपि स्यादिति वाच्यम्, सति धर्मीन्द्रियसन्निकर्षे इष्टत्वात्, क्वचिद्धर्मिज्ञानस्य धर्मीन्द्रियसन्निकर्षविघटैवोपयोगात्, कोटद्युपस्थितेरपि विशेषणज्ञानमुद्रया विशिष्टबुद्धित्वावच्छिन्न एवापेक्षा, विशेषणज्ञानादपि तु तत्कोटीन्द्रियसन्निकर्ष एवापेक्षितो, नतु

यदत्र तज्ज्ञानमपि, संशयोत्तरमिममय निश्चयापत्तिरपि निश्चयत्वस्य कार्यतानवच्छेदकत्वेन तदवच्छिन्नोत्पत्तेरापादयितुमश-
क्यत्वादेव न भवतीति तदाशयः, अस्मत्सिद्धान्ते तु तादृशमपि संशयत्वं निश्चयत्वं च विजातीयविजातीयक्षयोपशमज-
न्यतावच्छेदकमवश्यं स्वीकर्तव्यम्, चक्षुर्विषयादिषु निमित्तानिमित्तयोरपि पाठात् मत्यादिमतीनां च कारणभेदप्रतिनिय-
तानामेव परिगणनात्, अन्यथाऽसंख्यभेदापत्तेः, अर्थसमाजग्रस्तस्य च धर्मस्य कार्यतानवच्छेदकत्वे प्रमाणाभाव एव
बीजं परैरपि स्वीक्रियते, अन्यथा स्वसामानाधिकरण्यघटितकविशेषणतोभयसम्बन्धावच्छिन्नदुरितनिष्ठप्रतियोगितावच्छेद-
कताकभेदवद्दुरितध्वंसत्वमपि तत्त्वज्ञानकार्यतावच्छेदकं न स्यात्, तत्र तत्र तथाविधकार्यकारणभावग्राहकस्य तमवेस्यावि
वेदादेरिवात्र चक्षुरादिग्रहस्य प्रमाणस्य सत्त्वाभावस्येवेति तादृशस्यापि संशयत्वादेः कार्यतावच्छेदकत्वं निराबाधमिति।
यदि च निश्चयसंशययोरवधारणत्वानवधारणत्वे विषयते अनुभवसिद्धे तदा तयोरेव कार्यतावच्छेदकत्वमिति युक्तमुत्पश्यामः।
'समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय' इति गौतमीयं सूत्रम्, समानो
ऽनेकश्च तत्कोटिद्वयमात्रकोटिमतां यो धर्मस्तदुपपत्तेर्धर्मिणि तद्ग्रहणात्, विप्रतिपत्तेर्विरुद्धकोटिद्वयप्रतिपादकवाक्यात् नित्यो
नवेत्यादिवाक्यात्, उपलब्धेरनुपलब्धेश्च व्यवस्था तद्विषयौ भावाभावौ तयोरव्यवस्थाऽनियामकं सपक्षविपक्षव्यावृत्तधर्मवत्ता-
ज्ञानं यतोऽसाधारणधर्मवद्धर्मिज्ञानादिति यावत्, विशिष्यते व्यावर्त्यते विशेषदर्शनविषयो यस्मात् स विशेषो विशेषादर्शनं तद-
पेक्ष इति, एतावता कारणमुक्तं, लक्षणमाह—'विमर्श इति' एकधर्मिकविरुद्धोभयप्रकारकं ज्ञानमिति तदर्थः, भाष्यकारस्तु
समानः कोटिद्वयसहचरितो धर्मः, अनेकधर्मोऽसाधारणधर्मः, उपलब्ध्यनुपलब्ध्यव्यवस्था तत्कोटिकज्ञानस्य तदभावकोटिक-

ज्ञानस्य च मद्विषयकत्वानवधारणे प्रामाण्यसंशय इति यावदित्यादि, तदिह करोत्यर्थभावनारूपधर्मिज्ञानाद्विशेषादर्शनात् यज्यर्थं तदितरकोटिद्वयोपस्थितेश्च विशेषसंशयाद् युक्तो विशेषप्रश्न इति बोध्यम्। तत्र स्वलक्षणेषु, विज्ञानवादिमतमापातमिति, ( २९ २ १ ) तावतापि सौगतपक्षो न क्षीयत इति भावः। परमार्थसदायातमिति, ( २९ २ २ ) अनिच्छतोऽपि योगाचारस्येति शेषः, विकल्पबुद्धौ प्रतिभासमानस्य सामान्याकारस्य मुख्यताया: स्वयमेवाभ्युपगमात्तस्य च ज्ञानसामग्रीमात्रप्रभवस्य निर्विकल्पकेऽपि युक्तत्वाद्विशेषरूपताया अपि च बहिरर्थे गौणत्वे च ज्ञानमात्र एव तत्त्वतो विभान्तत्वादिति हृदयम्। विपर्ययस्यापीति, ( २९ २ ४ ) अनुभूयमानेऽनुगतव्यावृत्ताकारद्वयेऽन्यतरासत्यत्वे विनिगमकाभावादिति निष्कर्षः। विचार्यमाणायोगादिति ( २९ २ ७ ) किं स्यात् सा चित्रैकस्यामित्यादियुक्तेरिति भावः। एतेन प्रायान्तरायातां सर्वेषां सामान्यविशेषात्मकतासाधनेन, भेदाप्रतिसिद्धेः विकल्पागोचरत्वात्। भेदमात्रस्येति, (२९ २ १४) अनुगतरूपावगाहिनि ज्ञानेऽन्ततस्तदाश्रयतयैव भेदावगाहनादिति भाव। सामान्यग्रहण एवानुमानव्यापारो व्यक्तिस्त्वाक्षेपतो लभ्यत इति तु न चक्तु युक्तम्, आक्षेपस्याप्यनुमानत्वात्, अनुमितौ सामान्यविषयताप्रवादस्तु व्यापकतानवच्छेदकतदवृत्त्यकिलरूपम व्यापकालवगाहित्वात् अत्यक्षपृथिव्यादिवास्यविषयिताभावाद्वा समर्थनीयः। ताभ्यामिति, (३० २ ४) ताभ्यां स्थाणुपुरुषाभ्यां विशेषाभ्यां, तस्योर्द्ध्वतासामान्यस्य, व्यतिरेके भेदश्चेत्, किं न दूरे व्यक्तिमात्रप्रतिप चकद्दूरत्वधर्ति देशेऽवभासनं स्यात्, विशेषाद् सामान्यस्य भेदे एकभासकसामग्र्यभावेऽपरतद्भावस्य नियन्तुमशक्यत्वादिति भावः। इदाप चाचाद्-दूरेऽवभासमानस्याऽस्पष्टाकारस्य सामान्यस्य सन्निधानअतिशयेन भासन स्यात्। यद्दूरेऽस्पष्टमनुभूयते तत्समीपेऽत्यस्पष्टं

भावात् अस्पष्ट विशेषस्यास्पष्टताया एव सम्भवादिति भावः। निरवच्छिन्नाप्रत्वादिप्रकारताशास्याप्रामिमस्पक्षे निकटवे यशपितावहेतुत्वं दूरत्वशपितावर्गा प्रतिबन्धकत्वं कल्प्यते, अस्तु वा सामान्यविशेषसाधारण्येनास्पष्टतास्यविषयताविशेषस म्बन्धेन भावात्कारस्यावच्छिन्न दूरत्वस्य स्पष्टाख्यविषयताविशेषसम्बन्धेन तदवच्छिन्ने च सन्निधानस्य हेतुत्वम्, तथैव विस्वविशिष्टविषयस्य तादृप्येणैव वा तथामिति नोक्तदोषसर्ग इत्यभिप्रायवान् समाधत्ते-एतदप्ययुक्त विशेषेऽपि समानस्याविस्यापिना ( २० २ ५ )। कुतश्चिद् दृष्टेस्यादि, ( २० २. १४ ) इदं कारणं दूरत्वादि भवष्टमस्पष्टयो पक्षमः न चैवं व्यभिचारः, दूरत्वादिदोषस्थलेऽप्यस्पष्टयोपक्षमस्यैवाभ्युपगमात्, तत्त्वावच्छिन्ने च तथत्वप्रत्यक्षेत्रकाल भावानामेकत्रवृत्तिकमस्पेन हेतुत्वे दोषाभावादिति दिक्। सवाचकत्वादिति ( २१ १ २ ) संवादकत्वस्य च सविषयकत्वेन व्याप्तत्वादिति भावः। 'तथा च कथमिदमवतिष्ठत इत्यादि ( २२ ७ १२ ) यदि च विधिनिमन्त्रणामन्त्रणाध्येष पाचतुष्टयसाधारणी प्रवर्त्तनैव शब्दभावना, विधिः प्रेरण भृत्यस्य निकृष्टादेः, निमन्त्रणमावश्यकप्रेरणा, आमन्त्रणं कामचा रानुज्ञा, अध्येषणा सत्कारपूर्वो व्यापारः, एतच्चतुष्टयानुगतप्रवर्त्तनात्वस्य शक्यतावच्छेदकत्वे लाघवात्, आह च "अस्ति प्रवर्त्तनारूप-मनुस्यूतं चतुर्ष्वपि। तत्रैव लिङ् विधातव्यः, किं भेदस्य विवक्षया ॥१॥ न्यायव्युत्पादनाय वा, प्रपञ्चार्थमथापि वा ॥ विध्यादीनामुपादानं, चतुर्णामादितः कृतम् ॥ २ ॥" इति, प्रवर्त्तना च प्रवृत्तिजनकज्ञानविषयतावच्छेदको धर्मः, स चेष्टसाधनत्वादिरिति विभाव्यते-तथा नामान्तरेण क्षिप्यप्याप्योत्पादनाकृत न कश्चिदन्यो नैयायिकमताद्विशेष इति मन्तव्यम्। परापेक्षामन्तरेण क्वचित् कथाचिदप्यभावादिति, ( २४ २ १ ) अत्र तस्यति योजनीयम्। तस्य

समानप्रत्ययप्रत्ययस्य । नन्विदमयुक्तम्, घटोऽयमित्यादौ घटत्वादिसमानपरिणामप्रत्यक्षस्य परापेक्षामन्तरेणैव सर्वानुभवसिद्धत्वात्, न च सामान्यप्रकारकप्रत्यक्षे परापेक्षत्वनियमोऽपि वक्तुं युक्तः, घटत्वं सामान्यमिति प्रतीतेरतथात्वादिति चेत्, सत्यम् सामान्यीयविशेषणतासम्बन्धेन सामान्यप्रकारकप्रत्यक्षे तथा नियमे दोषाभावात्, घटत्वं सामान्यमित्यत्र तु सामान्यस्य तादात्म्येनैव प्रकारत्वात्, वैसदृश्येऽपीत्थमेव परापेक्षत्वनियमोपपत्तेः, परापेक्षस्यापि कथञ्चिदनपेक्षत्वं तु न दूषणम्, किन्तु स्याद्वादसाधकत्वाद् भूषणमेव, एतेन सामान्यबोधो न परापेक्षो न वा वैसदृश्यबोधः, किन्तु तद् व्यवहार इत्ययमपि नयोऽनुगृहीतो भवतीत्यादि विभावनीयं सुधीभिः ।

कथं शबल इत्यपि, ( ३४ २ ३ ) शबलेन समानो धवल इति प्रत्यये सामान्यपदार्थस्य तन्निष्ठत्वे सति तद्वृत्तिधर्मस्वरूपत्वेन भेदगर्भत्वात् भेदप्रत्ययस्य चाभेदज्ञानविरोधित्वादिति भावः । एकत्वोपचारादिति, उपचरितमेकत्वं तज्जातीयाभेदरूपमाश्रित्येत्यर्थः । तद्व्यक्तित्वावच्छिन्नभेदवत्ताबुद्धिर्हि तद्व्यक्तित्वावच्छिन्नभेदाभाववत्ताबुद्धिं विरुणद्धि न तु तज्जातित्वावच्छिन्नभेदाभाववत्ताबुद्धिमित्येव न विरोध इत्यर्थः । न चैवं वा काचिज्जातिमादायातिप्रसङ्गो, विशेष्यतावच्छेदकतया व्यक्तावच्छेदकजात्यवच्छिन्नभेदाभावाश्रयणेनानतिप्रसङ्गात्, यद्वैकत्वस्य शबलधवलवृत्तिसमानपरिणामगताभेदस्योपचारे धर्मिण्यध्यारोपमाश्रित्येत्यर्थः । न चैवमत्रापि सादृश्यान्तरमादायातिप्रसङ्गः, 'आरोपे सती'त्यादिन्यायेन सादृश्यान्तरेणाभेदाध्यारोपायोगादिति मन्तव्यम् । मुख्यमात्मादिद्रव्य इति, ( ३४ २ ४ ) मुख्यं स्कन्धपरिणामकृतमेकत्वमात्मादिषु द्रव्येष्वित्यर्थः । सादृश्य तूपचरितमिति ( ३४ २ ४ ) प्रथमपक्षे सादृश्यपदस्य सादृश्यनिमित्तमित्यर्थः । द्वितीयपक्षे

सादृश्यमित्यर्थः । कथमुपपद्येतेति, ( ३४ २ ५ ) मुख्यैकत्वस्य परानपेक्षत्वात् स एवायं गौरित्यत्र तदाश्रयणे शबलेन समानो धवल इति प्रत्ययो नोपपद्येतैवेत्यर्थः । तयोरेकसामान्ययोगादिति, ( ३४ २ ५ ) एतदनन्तरं तेन समानो ऽयमिति प्रत्यय उपपद्येतैवेत्यनुषञ्जनीयम्, तयोः शबलधवलयोर्गोत्वरूपैकसामान्यसम्बन्धे धवले शबलभिन्नत्वशबलवृत्तिगो-त्वसामान्यरूपधर्मग्रहे उक्तविशिष्टबुद्धेर्नानुपपत्तिरित्यर्थः । इत्थं तटस्थेनाक्षेपसमाधाने कृते बाधकप्रसङ्गमाह–इति चेदि त्यादिना, ( ३४ २ ५ ) सामान्यवन्तावितिं ( ३४ २ ५ ) मुख्यैकत्वग्रहे भिन्नत्वेनाभिव्यञ्जकापेक्षाधीसत्त्वे सम् शलम्बनस्यैव सम्भूतसामग्रीकत्वादित्यर्थः । न चैवं घटवद्भूतलमित्यत्रापि सयुक्ते घटभूतले इत्यस्यापत्तिरिति वाच्यम्, तत्रापि घटध्वंसादृश्यकतैकस्यानाश्रयतो तदापत्तेरिष्टत्वात्, तदाश्रयणे तु धर्मिगतसम्बन्ध्यपुरस्कारेणैव तदन्यथविषयाधी नयोधोपपत्तेरिति ध्येयम् । ननूभयत्रैकत्वाश्रयणेऽपि स एवायं गौरिति धीकाले तेन समानोऽयमिति कथं न स्यात्, तत्राह धर्मैक्योपचारे त्विति ( ३४ २ ६ ) सामान्यमिति सम्प्रत्ययः स्यादिति ( ३४ २ ६ ) सामान्यान्तर्निर्गिरयं कृत्वा तदेकत्वप्रत्ययः स्यादित्यर्थः । न तेन समानोऽयमिति ( ३४ २ ६ ) तत्समानत्वबुद्धेस्तदेकत्वबुद्धिजनन एवोपधीयत्वादिति भावः । तस्यगतयेत्यादि, ( ३४ २ ८ ) तथा च मातस्थापनाद्विगोभ्यवहारहेतुसादृश्यरूपाणां गोत्वानां भिन्नत्वाभ्युपगमाच्च दोषः । एकत्वव्यवहारश्च तेषु गोत्वत्वेनानुगमय्यैवोपपादनीयः । अत एव मुख्यस्वर्णत्वादिना सौवर्णत् कुम्भकारस्वर्णकारवस्त्रकर्तृसाविवन्यतावच्छेदकतया घटत्वमपि नानैवैकत्वव्यवहारश्च तत्र कथञ्चित्सौसादृश्यादिनेति परैरपि स्वीक्रियते । तदेकजातित्वनियन्धनमिति ( ३४ २ १० ) तेन मातगमादिनैका मातिर्येस्य स्थापनागमादेस्त

पूर्वकल्पनापेक्षया यागादेः फलकालपर्यन्तं स्थायित्वमेव युक्तं, यागोत्तरकाले इदानीं न यजेयमिति प्रतीतेर्व्यापारकालावच्छिन्न समवेतत्वस्यैव यागादिप्रत्ययहेतुत्वकल्पनेनोपपत्तेरियुक्तिरपि प्रत्युक्ता, यत्नाद्यर्थस्य लिङर्थव्यापारेऽन्वितस्यैवानुभवावाप्त्यां भावनाया अप्रतिक्षेपात् । न च सर्वत्र व्यापाररूपा भावना नाख्यातस्यार्थः, किन्तु धातोरेवेति वैयाकरणमतमेव युक्तं, प्राधान्येन प्रतीयमानव्यापारस्य धात्वर्थतायाः प्रकृतिप्रत्यययोः प्रत्ययार्थप्राधान्यमिति न्यायविरुद्धत्वादिति चेत्, "अत्रा दुरत्यातुवयोच्छलन्तो, नवीनवैयाकरणाः समुक्तीः । धम्यार्थमुक्तौ वयमेव दक्षा इत्यान्तरं दर्पमितोऽगिरन्तः ॥ १ ॥" यदप्युक्तं 'प्रकृतिप्रत्ययौ' इत्यादिन्यायात् व्यापारो न धात्वर्थ इति तदयुक्तं, तस्य न्यायस्य प्रकृत्यर्थप्रकारकबोधे तदुत्तरप्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभावमूलत्वात्, स एव च न सम्भवति, पक्वानित्यत्र पाकं कृतवानिति विवरणात्, पाकस्य कर्मकारकस्य क्तवतुप्रत्ययार्थे कर्तृकारकेऽन्वयात् । न च "सम्बन्धमात्रमुक्तं च श्रुत्या धात्वर्थभावयोः । तदेकांशनिविष्टे तु व्यापारेऽस्या न विघात ॥१॥" इति भट्टपादोक्तरीत्या सम्बन्धसामान्येन कारकाणामन्वयो वक्तुं शक्यः, क्रियात्वस्यैव कारकान्वयितावच्छेदकत्वेनान्वयप्रयोजकरूपवत्त्वलक्षणयोग्यताविरहात्, तस्मात् क्रियारूपा भावना धात्वर्थ एव, 'भूवादयो धातवः' इति सूत्रे प्रभृतिप्रकारवाचकादिशब्दप्रयोगेन द्वन्द्वगर्भबहुव्रीहिणा भूवाप्रभृतयो वा सदृशा धातव इत्यर्थलाभात्, क्रियावाचकत्वे सति भ्वादिगणपठितत्वस्यैव धातुलक्षणत्वपर्यवसानात्, अत्र क्रियावाचके हिरुक्पृथगनानेत्यादावतिव्याप्ति-वारणाय विशेष्यं, वा इत्यस्य तादृश्यस्येऽतिव्याप्तिवारणाय विशेषणं, वा इत्यस्य धातुस्याव्ययमध्ये पाठस्तादृशस्यैव भ्वादिगणेऽपि पाठात्, न "च यतिगन्धनार्थनिर्देशो नियामकस्तस्यार्थानादेशनादिति" भाष्यपर्यालोचनया धातूनामनेकार्थत्वेन नियमस्या

पुनरुक्तत्वलाभात्, क्रियात्वं च व्यापारत्वं, न तु भावत्वम्, अन्योन्याश्रयात्, न चान्यतमत्वं धातुत्वं, भूवादय इति सूत्रवै
यर्थ्यापत्तेः, न च सनादीन् फलांशानन्यतमत्वेनादाय तद्वाचकत्वे सति गणपठितत्वमेव लक्षणमुच्यतामिति वाच्यम्,
तदन्यतममध्ये विकल्पस्यापि विकल्पयतीति प्रयोगानुसारेण प्रवेशप्रसङ्गात् तदर्थकचकारेऽतिव्याप्तेरिति वाच्यम्, क्रियावाच
कत्व एव हि धातोः स्वर्गमग्निष्टोमयाजीत्यादौ कर्मणि करणोपपदे कर्तरि च ण्यत् णिनिप्रत्ययोपपत्तिः, विना क्रियां कारकस्या
सम्भवेन तद्वाचकप्रत्ययस्याप्यसम्भवात्। न च गम्यमानक्रियामादाय कारकयोग इति मञ्जरीविदुक्ता, आख्यातस्थलेऽपि
तदापत्तौ भावनायास्तदर्थत्वप्रवादस्य तपस्वलाञ्छितत्वप्रसङ्गात्, एतेन प्रकृते लिङ्गसङ्ख्यान्वयानुरोधात् कर्तुर्वाच्यत्वप्रसङ्गात्
तेनाक्षेपाद्भावनाप्रत्ययः सुघट इत्यपास्तम्। एवं सत्याख्यातेऽपि संख्यान्वयानुरोधेन कर्तुर्वाच्यत्वप्रसङ्गात्, किञ्चैवं नत्वेमिमो
नत्वमिमो हरिणा त्रातो हरित्रात इत्यादौ "कर्तृकरणे कृता बहुलमिति" समासो न स्यात्, पुरुषो राज्ञो, भार्या देवदत्तस्येत्या
दाविवासामर्थ्यात्, न च दध्योदनो गुडधाना इत्यादाविवात्राप्याक्षिप्तक्रियाद्वारा सामर्थ्यं वाच्यम्, तत्र विध्यानर्थक्यादगत्या
तथा स्वीकारेऽपि नत्वमित्यादौ साक्षात्तदर्थान्वये बाधकाभावात्। किञ्च भावनायास्तिङर्थत्वे भावयति घटमिति वद्भवति
घटमित्यपि स्यात् धात्वर्थफलाश्रयत्वरूपकर्मत्वसत्त्वात्, न चाख्यातार्थव्यापाराश्रयत्वेन कर्तृत्वात्तत्संज्ञया कर्मसंज्ञाया बाधान्न
द्वितीयेति वाच्यम्, आख्यातार्थव्यापाराश्रयत्वस्य कर्तृत्वरूपत्वे पाचयति देवदत्तो विष्णुमित्रेणेत्यत्र विष्णुमित्रस्याकर्तृतापत्तौ
तृतीयानापत्तेर्ग्रामं गमयति देवदत्तो विष्णुमित्रमित्यत्र विष्णुमित्रस्याकर्तृतापत्तौ ग्रामस्य गमिकर्मत्वानापत्तेः। तथा च ग्रामाय
गमयति देवदत्तो विष्णुमित्रमित्यपि न स्यात्, "गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति," गत्यर्थकर्मण्येव चतुर्थीवि

धानात्, अपि च फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रतीत्यापत्तिः संयोगाश्रयत्वात्, फलानुत्पाददशायां व्यापार सत्त्वे पाके पचतीत्यनापत्तिर्व्यापारविरमे पाके पचति इत्यापत्तिश्च, न च भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वाभा नुपपत्तिः कर्तरि कृदित्यत एव तल्लाभे विशेषानुशासनवैयर्थ्यापत्तेः । अथ कथं फलव्यापारयोर्द्वयोरपि धातुतो लाभ इति चेद्, फले व्यापारे च सम्बन्धः शक्तिद्वयकल्पनात्, पचतीत्यादौ फले विक्लित्त्यादि, व्यापारो भावनाभिधासाध्यत्वेनाभिधी-यमाना क्रिया, यदाह वाक्यपदीये "यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते" ॥१॥ इति । न च साध्यत्वेनाभिधाने मानाभावः, पचति पाकः करोति कृतिरित्यादौ क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपस्य साध्यत्वस्यासत्त्वरूपस्य धातुप्रतिपाद्यत्वकल्पनात्, तदिदमभिप्रेत्योक्तं वाक्यप दीये "असत्त्वभूतो भावश्च तिङ्पदैरभिधीयते" इति, न चैवं घञन्तेऽपि धातुना तल्लाभापत्तिः, इष्टत्वात्, तत्र प्रकृतिप्रत्यय भ्याम्यां यस्य मृगो धावतीत्यादौ तिङन्ताभ्यामिव साध्यसाधनावस्थयोरभिधानात्, तत्र साध्यत्वं क्रियान्तराकाङ्क्षानुत्थाप कतावच्छेदकरूपवत्त्वं, साधनत्वं च कारकत्वेनान्वयित्वमिति, न च घञन्ते धातुना साध्यत्वेनाभिधाने मानाभावः । ओदनस्य पाक इति कर्मषष्ठ्या मानत्वात् । न च पचतीत्यप्यावृतक्रियान्वयात् षष्ठी, कर्तृकर्मणोः कृतीति कृदन्तेन योग एव तद्विधानात्, नलोकाव्ययेत्यादिना तदेवयोगे निषेधाच्च । अथ कारकाणां भावनायामेवान्वय इति नियमे ओदनस्य पाक इत्यत्र कर्मषष्ठी भावनाया धातुवाच्यत्वं साधयतु तत्रैव तु किं मानमिति चेत्, विशेष्यतया कारकादिप्रकारकबोधं प्रति धातुजन्यभावनोपस्थिति र्हेतुरिति कार्यकारणभाव एवेत्यवेहि, तदुक्तं "सम्बोधनान्तं कृत्वोर्थः, कारकं प्रथमो मतिः । धातुसम्बन्धाधिकार-निष्पन्नम

साधुत्वमष्टकस्यास्य, क्रियपैवावधार्यताम् ॥२॥ " इति, एव समस्तनञ् ॥ १ ॥ तथा यस्य च भावेन, षष्ठी चेत्युदितं द्वयम् । स्कारिकाद्यर्थो यथा सम्बोधनान्तस्य क्रियायामन्वयः, त्वं भूरि देवदत्तेत्यादौ निपातानुरोधात्, " समानवाक्ये निघातयु- ष्मदस्मदादेशा " इत्यनेन समानवाक्य एव नियमात्, पचति भवतीत्यादौ धातुमात्राद्विरीत्यैकवाक्यतासत्त्वादेव निघातस्वीकारात् ॥ १ ॥ कृत्तोऽर्थे , क्रियाभ्यावृत्तिगणने कृत्वसुजिति विहितः, क्रियायामन्वेति, क्रियाया अभ्यावृत्तिः पुनर्- पुनर्जन्म यस्मिन् योऽस्य इति तदर्थात् क्रियायोगे तत्साधुतोक्तेः ॥ २ ॥ तथा कारकं करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः कारकशब्दस्य क्रियापरत्वात्, ॥ ३ ॥ प्रथमो वतिः तेन तुल्यं क्रिया चेद्वतिरिति विहितः, तत्र यत्तुल्यं सा क्रिया यदि स्युक्तत्वात् ॥ ४ ॥ धातुसम्बन्धाधिकारनिष्पन्नं " धातुसम्बन्धे प्रत्ययाः " इत्यधिकृत्य तेषां विधानात् ॥ ५ ॥ असमस्तः समासायोग्यो नञ् प्रसज्यप्रतिषेधीय इत्यर्थः । न च तस्य क्रियान्वये मानाभावः न त्वं पचसि न युवां पचथ इ- त्यादौ क्रियाया एव निषेधप्रतीतेः, घटो नास्तीत्यत्राप्यस्तित्वाभावस्यैव बोधात्, भूतले न घट इत्यत्राप्यस्तीत्यध्याहारेणैव तथा बोधकल्पनात्, प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे धात्वन्यभावनोपस्थितेर्हेतुताया एव युक्तत्वात्, ॥ ६ ॥ 'यस्य च भावेन भावलक्षणं' 'षष्ठी चानादरे' इति सूत्रद्वयेन विहितमपि क्रियायामेवान्वेति, पूर्वत्र भावशब्देन तद्योगे साधुत्वाख्यानादुत्तरत्र च प्रकरणत्वस्यार्थतो लाभादिति ॥ ७-८ ॥ स च भावनाख्यो व्यापारः पचतीत्यादौ फूत्कारत्वाधःसन्तापनत्वयत्नत्वादितत्प्रभेदरूपेण भाव्यः, तत्तद्रूपसमकारकबोधस्यानुभवसिद्धत्वात्, न च नानार्थतापत्तिः, तदादिन्यायेन बुद्धिविशेषादेः शक्यतावच्छेदकानुगमकस्य सत्त्वात्, आख्याते क्रियैकत्वस्यापि तेनैव व्यवस्थितेः, पञ्चाक्षय

पचीय "गुणीभूतैरवयवैः, समूहः क्रमजन्मनाम्। बुद्ध्या प्रकल्पिताभेदः क्रियेति व्यपदिश्यते"॥१॥ इति, आख्यातस्य च फलाश्रये व्यापाराश्रये च शक्तिः, तत्र फलाश्रयः कर्म, व्यापाराश्रयः कर्ता, शक्यतावच्छेदकं चाश्रयत्वं, शक्तिविशेषरूपं, न तु फलादिगर्भं, फलादेर्धातुलभ्यत्वात्। मानञ्च तत्र 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रमेव, अत्र हि चकारात् कर्तरि कृदिति सूत्रोक्तं कर्तरीत्यनुकृष्य बोधकतारूपां तिबादिशक्तिं तत्स्थानिभूते लकारे प्रकल्प्य तस्य कर्मकर्तृविषयविधानात्, न च दर्शनान्तरीयपरीक्षा व्यापारस्य धात्वर्थत्वाभावात् लकारविधिः स्यादिति शङ्कनीयम्। तद्वदेव कृतामपि कर्तृकर्मवाचकत्वापत्तेः कर्तरि कृदित्यस्य लः कर्मणीत्यनेन तुल्ययोगक्षेमत्वात्, अपि च मीमांसकानां कृतामिवाख्यातानामपि कर्तृवाचकत्वमस्तु भावनायामावेदने एव लाभः, घटमानयेत्यादावाक्षेपितव्यक्तेरपि तस्याः प्राधान्योपपत्तेः। पचतीत्यादौ भावनाया विवरणदर्शनात् वाच्यत्वमिति चेत्, न, पाकानुकूलव्यापारवतः कर्तुरपि विवरणविषयत्वाविशेषात्, न च कर्तुर्विवरणं तात्पर्यविषयं पाकं करोतीत्यत्राख्यातार्थकर्मत्वविवरणवदितरेतरान्वये समानवाच्यविवरणमपेक्षेति न तदर्थनिर्णायकमिति वाच्यम्। भावनायां तुल्यत्वात्, किं च पचति देवदत्त इत्यत्राभेदान्वयदर्शनात् कर्तुर्वाच्यत्वमावश्यकं पक्ता देवदत्त इत्यत्रेव, नामार्थयोर्हि समानविभक्तिकत्वं नियामकं तच्चमाथाभात्र स इति वाच्यम्। सोमेन यजेत स्तोकं पचति राजपुरुष इत्यादावप्यभेदबोधानापत्तेः। न च कर्तरि लक्षणया सामानाधिकरण्यं, पिनाकपाण्यादिमौमिकानामपि शून्यवादिलक्षणा-नापत्तेरभ्यासाधिकरणोपेक्षापत्तेरिति दिक्। अत्र फले व्यापारः प्रधानं, तिङर्थाः कर्तृकर्मसंख्याकाला विशेषणानि, तत्रापि कर्तृकर्मणी व्यापारफलयोर्विशेषणे, संख्या कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि, समानप्रत्ययोपात्तत्वात्। तथा

चाख्यातार्थसंख्याप्रकारकबोधे प्रत्यासत्त्याऽन्यकर्तृकर्मोपस्थितिर्हेतुरिति फलितं, नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तपदजन्योपस्थितेर्हेतुहेतुमद्भावो वाच्यः, सोऽपि चन्द्र इव प्रथमाय चान्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेर्हेतुहेतुमद्भावो वाच्य प्रथमाय यथान्वयादाख्यातार्थानन्वयादिवरविशेषणस्वतत्पर्यायविषयत्वघटितो वाच्य मुखं दृश्यते देवदत्तो भुक्त्वा व्रजतीत्यादौ चन्द्रेमार्थयोराख्यातार्थानन्वयः स्पष्टः, अतीतमा इत्यपि गौरवमिति मन्तव्यम् । कालस्तु व्यापारे विशेषणं, न तु संख्यावत् कर्तृकर्मणोस्तदन्वयः स्पष्टः, अतीतमा पनाके कर्तरि पचतीत्यापत्तेः अपाक्षीदित्यनापत्तेश्च, नापि फले तदन्वयः, फलानुत्पाददशायां व्यापारसत्त्वे पचतीत्यनापत्तेः पस्यतीत्यापत्तेश्च, न चामयावजीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वादुत्तिष्ठतीति प्रयोगापत्तिः, यत्नस्याज्ञानादप्रयो गात्, किञ्चिच्चेष्टादिनाऽवगतौ चायमुत्तिष्ठति नतु शक्नोत्युत्थातुमिति लोकप्रतीतेरिष्टत्वात्, इत्थं च तिङर्थो विशेषणमेव प्रधानं तु भावनैवति स्थितम् । यदि चाख्यातार्थप्राधान्यं स्यात् तदा देवदत्तादिभिः समभेदान्वयात् प्रथमान्तार्थस्य प्राधान्यापत्तिस्तथा च पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्, प्रथमान्तार्थमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्मत्वापत्तौ द्वितीयापत्तेः, न चैवमप्रथमासामानाधिकरण्याच्छत्रुप्रसङ्गः, तथापि द्वितीयाया दुर्वार स्वेनाकाङ्क्षस्यैवासम्भवापत्तेः, न च पश्येत्यत्र तमिति कर्माध्याहार्यम्, वाक्यभेदप्रसङ्गात् । एवं च भावनाप्रका रकबोधे प्रथमान्तपदजन्यपदार्थोपस्थितिः कारणमिति नैयायिकोक्तमयुक्तम् । किं त्वाख्यातार्थकर्तृप्रकारकबोधे धातुजन्यो पस्थितिर्भावनात्वावच्छिन्नविषयतया हेतुः, भावनाप्रकारकबोधं प्रति तु धात्वर्थभावनोपस्थितिरेव हेतुः, पश्य मृगो धावति पचति भवतीत्यादावुत्पादिति कल्पनीयम् । इत्थं च पचतीत्यत्रैकाश्रयिका पाकानुकूला भावना, पच्यत इत्यत्रैकाश्रयिका या

तिर्यग् विलोकयति सद्यः । अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥१॥" इत्यादावेककर्तृकानेक-
क्रियाणां प्रत्येकं प्राधान्ये बहुवाक्यभेदापत्तावपि निष्कासयतः क्रमेलकागमन्यायपातात् । न चात्र नवपरिणयनव्यभिचरितं
कर्तृत्वेनावच्छिन्न एको व्यापारोऽस्त्यनुभूयते वा, एकस्यानेकक्रियासम्बन्धघटितदीपकोदाहरणतयैवास्याभिहितत्वात्, न
चात्रोदाहरणाकाङ्क्षया तत एककर्तृकत्वसम्बन्धेन क्रियाणां परस्परमन्वयः, स्वाभाविकक्रियान्तराकाङ्क्षाविषयतावच्छेदकरूप-
वत्त्वाच्च न क्रियासमभिव्याहारेऽपि वाक्यभेददोष उद्धर्तुं शक्यः, विनिगमनाविरहेण प्रत्येकं क्रियाप्राधान्यापत्तेस्तद-
वस्थत्वात् सर्वक्रियाणामाख्यातार्थकारैकरूपमिति न्यायेनैकस्मिन् कर्तर्यन्वयवाद एव हि तस्योद्धर्तुं शक्यत्वात् । यत्र-
त्रापि निपातानुरोधादेकक्रियाया एव प्राधान्यम्, अन्यासां साधनत्वापेक्षमाणत्वं "तिङतिङः" इति सूत्रयता तिङन्तानाम-
प्येकवाक्यत्वस्वीकारात्, "एकतिङ् वाक्यम्" इत्यस्य वार्तिकस्य चैकतिङ्विशेष्यकं वाक्यमित्यभिप्रायादिति, तन्न, निपातकृतं
प्राधान्यमपि कुत्रचित् विनिगन्तुमशक्यत्वात्, चरमपठितत्वस्यापि पश्य मृगो धावतीत्यत्रैव व्यभिचारादस्यार्थस्य स्वगृह-
परिभाषामात्रत्वाच्च, अन्यथा निपाते क्रियाप्राधान्यं तत्सत्त्वे च स इत्यन्योन्याश्रयस्य दुर्वारत्वात्, किञ्च साध्यसाधनवर्तितया
क्रिययोः परस्परमन्वयस्वीकारे पाकेन भुङ्क्ते इत्यर्थे पचति भुङ्क्ते इत्यादेरपि प्रसङ्गः, पठन् गच्छतीत्यर्थे पठति गच्छतीत्यादे-
रपि च, मम त्वाख्यातस्य सार्वविधेयकशाब्दबोध एव हेतुत्वाभावं प्रसङ्गः । किञ्च धात्वर्थप्राधान्याभ्युपगमे धात्वर्थस्य
विशेष्यकशाब्दबोधजनकसामग्र्या धात्वर्थ एव संख्याबोधकस्य सामान्यस्य भावमात्रे तत्त्वात् कर्तृकर्मणोर्नामार्थे संख्यान-
न्वयप्रसङ्ग इति न किञ्चिदेतत्–" शब्दसाधननिकषैस्य परगतां, प्राग् जयो भवतु सम्बरवेदिनाम् । अर्थमाधिगमयन्मे पुन–र्योग

एव निपुणं प्रगल्भते ॥ १ ॥ सर्वथोपशमनेकान्तवादमवलम्बमानैः पुनरस्माभिः सर्वमेवोपपादयितुं शक्यम्, व्यवहारनयानु सारिणां नैयायिकानां नामार्थविशेष्यकस्यैव शब्दनयानुसारिणां शाब्दिकानां भावप्रधानमाख्यातमिति वदतां भावर्थविशेष्य कस्यापि बोधस्य जायमानस्य शब्दमात्रेण निराकर्तुमशक्यत्वात्, नयव्युत्पत्तिवैचित्र्याधीनस्य फलीभूतशाब्दबोधवैचित्र्यस्य दृष्टेष्टाविरुद्धत्वात्, अत एवानुलोमप्रतिलोमक्रमेण तत्प्रकारचैत्रिव्यमानमपि व्याख्यातम्। इत्थं तण्डुलं पचति चैत्र इत्यत्रैव कर्मकक्रियाफलाश्रयत्वेन तण्डुलमुख्यविशेष्यकोऽपि बोधः स्यादिति चेत्, तथा व्युत्पत्तस्य स्यादेव अत्र शाब्दानुशासनमूलव्युत्पन्नयव्युत्पत्त्यधीनो बोध उदेश्य इति नायं प्रसङ्गः। पचतीत्यत्र विक्लित्त्यनुकूलव्यापारस्याधःसन्तापनादेः प्रातिस्विकरूपतासम्बन्धेन च भावनात्वेन नयव्युत्पत्तिवैचित्र्यात् क्रिया मानम्, साध्यत्वस्य च व्यापारे फलस्यानुकूलता रूपसंसर्गावच्छेदकतयैव मानं, साध्यत्वावच्छिन्नानुकूलताया एव संसर्गत्वोपगमात्, तस्य च साध्यत्वस्य क्रियमाणं कृतमिति नये सिद्धत्वरूपसाध्यत्वेनान्यनये च शुद्धसाध्यत्वेन मानमित्यन्यदेतत्। घटो नश्यतीत्यत्रापि प्रत्यार्थत्वनियामक सम्बन्धेन घटाभिमानकस्य सहकृतमेदादिरूपनाशानुकूलव्यापारस्य मानं, घटं आनातीत्यत्राप्यनेनैव सम्बन्धेन घटप्रत्यु स्वविषयाकाररूपव्यापारमानम्, यद्, भूपणसारकृतोक्त जानातीत्यत्रावरणभङ्गावच्छिन्नबोधव्यापार एवार्थोऽतीतानागत सत्यपि ज्ञानजन्यस्यावरणभङ्गस्यासम्भवात्वादतीतो घटो ज्ञायत इत्याद्यनतीतघटादेस्तदाश्रयता च विषयताया इव नैया यिकानां सत्कार्यसिद्धान्ताश्रयेति, तदापातरमणीयं, नैयायिकसाङ्ख्ययोः परस्परपरामर्शोपहतत्वात्, भेदाभेदसदसत्कार्या भ्युपगन्तृस्याद्वादवादिमार्गाश्रयणं विना च अयोधमग्नः, अत एव शब्दानां निष्पत्तिं प्रति यावत्कृत्य 'सिद्धिः स्याद्वादात्' इति

एव निपुणं प्रगल्भते ॥ १ ॥ मधशोपशमनेऽनन्तधावमपलम्भमानैः पुनरस्माभिः सर्वमेवोपपादयितुं शक्यम्, व्यवहारनयानु-
सारिणा नैयायिकानां नामाख्यविशेष्यकस्यैव शब्दनयानुसारिणां शाब्दिकानां भावप्रधानमाख्यातमिति वदतां भावमर्थविशेष्य-
कस्यापि बोधस्य जायमानस्य वाक्यमात्रेण निराकर्तुमशक्यत्वात्, नयव्युत्पत्तिवैचित्र्याधीनस्य फलीभूतशाब्दबोधवैचित्र्यस्य
प्रमाणसमर्थितत्वात्, अत एवानुलोमप्रतिलोमक्रमेण सप्तप्रकारवैचित्र्यमानमपि व्याख्यातम्। इत्थं तण्डुलं पचति चैत्र
इत्यत्र चैत्रकर्तृकक्रियाफलाश्रयत्वेन तण्डुलमुख्यविशेष्यकोऽपि बोधः स्यादिति चेत्, तथा व्युत्पन्नस्य स्यादेव, अत्र
पानुभामनपूनशब्दनयव्युत्पत्त्यधीनो बोध उदेश्य इति नायं प्रसङ्गः। पचतीत्यत्र विक्लित्त्यनुकूलव्यापारस्याधःसन्तापनादेः
प्रातिस्विकरूपमासण्डेन च भावनात्वेन नयव्युत्पत्तिवैचित्र्यात् द्विधा मानम्, साध्यत्वस्य च व्यापारे फलस्यानुकूलता-
रूपसंसर्गावच्छेदकतयैव मानं, साध्यतावच्छिन्नानुकूलताया एव संसर्गत्वोपगमात्, तस्य च साध्यत्वस्य क्रियमाणं कृतमिति
नय मिश्रत्वापन्नसाध्यतत्त्वेनान्यनये च शुद्धसाध्यत्वत्वेन मानमित्यन्यदेतत्। घटो नश्यतीत्यत्रापि प्रत्यार्थत्वनियामक
सम्बन्धेन घटाभिधायकस्य महातभेदादिरूपनाशानुकूलव्यापारस्य मानं, घटं जानातीत्यत्राप्यनेनैव सम्बन्धेन घटवृत्त्यु-
त्पत्तिक्षेपाकाररूपव्यापारमानम्, परं, भूषणसारकृतोक्तं जानातीत्यत्रावरणभङ्गावच्छिन्नबोधव्यापार एवार्थोऽतीतानागत
स्थलेऽपि ज्ञानजन्यत्वस्यावरणभङ्गस्याव्यक्तत्वादतीतो घटो ज्ञायत इत्यादावतीतघटादेस्तदाश्रयता च विषयताया इव नैया-
यिकानां तत्कार्यमिथ्यावादेति, तदापाततरमणीयं, नैयायिकशाब्दिकयोः परस्परपरामर्शोपहतत्वात्, भेदाभेदसदसत्कार्या-
भ्युपगन्तृस्याद्वादमार्गाश्रयणं विना च अबोधप्रवृत्तेः, अत एव शब्दानां निष्पत्तिं ज्ञप्तिं चाधिकृत्य 'सिद्धिः स्याद्वादादि'ति

मेतन्मयास्यार्थं स्याद्भावेनाविरोधमाह ।।१।। क्वेऽ बलत्तरङ्गमनु निमज्जनोन्मज्जने, सृजन्ति निजपर्ययाः प्रतिकलं पदार्थे पृथक् ।
विमृश्य भवनावधिं क इव तद्विवेके प्रभुः, स एव हि विमृश्यते विशदकेवलज्ञानवत् ।।२।।" सधनं इन्त्यादिस्याद्वेरिवेति
(२५ १ ६) तृष्णामूलकहिंसाविषयकत्वेनोभयोरविशेषादित्यर्थः, धर्मे इति धर्मे वाच्ये बलवदनिष्टाननुबन्धित्वांशे
वैयर्थ्यं, प्रमाणस्यानुपपत्तेरिति ( २५ १ ६ ) "न हिंस्यात् सर्वभूतानीति" सामान्यवचनविरोधादित्यर्थः । न च
सामान्यशास्त्रतो विशेषशास्त्रस्य बलवत्त्वात् हिंसात्वेऽप्यतः पूर्वं हिंसात्वसामानाधिकरण्येन पापजनकत्वप्रहेऽनन्तरं विशेषशास्त्र-
पर्यालोचनायां तदतिरिक्तहिंसात्वेन तत्कल्पनत इति न विरोध इति वाच्यम् । सर्वपदसमभिव्याहारेण हिंसात्वावच्छेदेनैव
सामान्यवचनतः पापजनकत्वलाभात्, अर्थान्तरार्थमाश्रितेऽपि विशेषविधावुत्सर्गनिषेधोक्तदोषपरिहारार्थैकोक्त इव
शास्त्रविधौ, तस्मात् तृष्णामूलकहिंसात्वावच्छेदेनैव सामान्यनिषेधपर्यवसानान्मूलत्वाग्रहेऽन यागादिविषयस्तद्विरोधित्वादप्रमाणमेव,
तदेकवाक्यतया निषिद्धोऽपि वेद इति मन्तव्यम् । यत्तु प्रतिपदोक्तफलत्यागेन विविदिषार्थतया कर्मकाण्डस्यापि
प्रामाण्यमिति वेदान्तिपक्षमिश्रमुच्यते, तदज्ञानविलसितं, भिन्नाधिकारविहिते कर्मणि तत्त्याज्यापरप्रवेशाभ्यां विविदिषार्थतया
समिद्धः, अन्यथाऽभिचारोद्देशेन वेदविहितं श्येनयागमपि विविदिषार्थतया किमिति नाद्रियेरन् । तदवदाम " वेदोक्तत्वान्म
न तुल्या, कर्मपक्षोऽपि दोषिनः । मतपक्ष इतीच्छन्तः, श्येनमार्गं त्यजन्ति किम् ।। १ ।। भिन्नोद्देशेन विहितं, कर्म
कर्मसपापकम् ।। स्वाश्रमिणामधिकारे च, पुत्रेष्ट्यादिवदिष्यताम् ।।२।।" इति, मत्स्यपिकमेतदर्थं लताप्रां स्फुटीकृतमस्माभिरिति
विशदार्थिना तत एवावधार्यम् । अपूर्वार्थत्वं पुनरिति ( २५, १ ७ ) लोकप्रमाणविषयार्थत्वं पुनरित्यर्थः तेनार्थमति

पादकत्वेन मीमांसैव प्रमाणं नोपनिषदिति स्थितं यथा, उपनिषदोऽप्यपूर्वपरमब्रह्मप्रतिपादकत्वेनाविशेषात्, येऽपि कविशेष प्रस्य च पदपाठमात्रत्वादित्युक्तं भवति, स एवार्थः स्यादिति (३५. १ १४) लोके वेदे च व्युत्पत्तेस्तुल्यत्वा दिति भावः। ये तु प्राभाकरा वेदस्यापौरुषेयतया वक्तृज्ञानानुमानानवकाशात् संसर्गे शब्दस्यैव साक्षात्त्वेन प्रामाण्यमा सिषत, लोके त्वनुमानत एव वक्तृज्ञानोपसर्जनतया संसर्गस्य सिद्धेरनुवादकतामात्रं वाक्यस्येति निर्णीतवन्तः, तेषां लोक वेदसाधारणव्युत्पत्तिबलेनान्वितामिधानं प्रसाधयतां तत्प्रत्यायतप्रतिपादकत्वस्य लोकेऽप्यविशेषादर्धजरतीयन्यायापातः, तदुक्त "निर्णीतवक्तृकेषांस्यादि, प्रागेवार्थस्य निर्णये। व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता ॥१॥" इति, यावती हि वेदे सामग्री तावत्येव लोके भवन्ती कथमिव नार्थमवगमयेत्, लिङ्गं तु परिपूर्णमप्यवगतमपेक्षणीयव्याप्तिस्मृतिविलम्बात् किं निर्णेतुं प्रगल्भताम्, अन्वयस्य प्रागेव प्रतीतेरनुवादकपक्षप्रक्षेपात्। न च लोके वक्तुराप्तत्वनिश्चयोऽपेक्षणीय इति वाच्यं, तस्यार्थप्रत्ययविलम्बः, लोकेऽप्याप्तोक्तत्वानिश्चयेऽप्यर्थप्रतीतेस्तस्य तदहेतुत्वात्, कथमन्यथा पदानुकारेण पठ्यमानेषु मन्वादिवाक्येष्वपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थप्रत्ययः, न चासौ भ्रमः, पौरुषेयत्वनिश्चयेऽपि तदबाधात्। न चानाप्तोक्तत्वशङ्कानिरासद्वारेव तदुपयोगः स च क्वचिदपौरुषेयत्वनिश्चयात् क्वचिदाप्तोक्तत्वावधारणादिति न दोष इति वाच्यम्, एवं ह्यपौरुषेयत्वस्याप्रतीतौ संदेहे वा वेदो न किञ्चिदभिदध्यात् इत्याप्तोक्तत्वनिश्चयोत्तरकालं लोक इव वेदेऽप्यपौरुषेय त्वनिश्चयोत्तरकालमनुमानप्रवृत्तावनुवादकत्वाविशेषापत्तेर्दुरुद्धरत्वात्। तदुक्तमुदयनाचार्यैः कुसुमाञ्जलौ "व्यस्तपु एवाद्यैः, स्मारितत्वात्पदैरमी। अन्विता इति निर्णीते, वेदस्यापि न तत् कुतः॥१॥" इति, अमी पदार्था, तदनुवादकत्वम्,

तस्मादियं प्राभाकरस्य कल्पनाऽज्ञानमूलैवेति मन्तव्यम् । ततः सुगतादिष्वपीति (२५–२–२) यथा सुगतादयः परस्परवि रुद्धभाषित्वेन न प्रमाणं तथा श्रुतयोऽपि नानावादिविप्रतिपत्तिकवलितार्थाभिधायित्वान्न प्रमाणमित्यर्थः । प्रामाण्यं चात्र प्रमाऽयोगव्यवच्छेदरूपं ग्राह्यम्, अन्यथा प्रमात्वाभिमते सुगतादौ तदभिधेयेऽप्रसक्तप्रतिषेधापत्तेरिति स्मर्तव्यम् । चार्वाक-मतमुत्थापयितुमाह भाष्यकृत् तथेत्यस्यादित्यादि (२५–२–३) तद् व्याचष्टे इयत्कं नापि समय (२५–२–३) इत्यादि, अवेक्षतारूप इति (२५–२–५) चार्वाकमतप्रवर्तकमनुष्यरूप इत्यर्थः । प्रत्यक्षमेकमिच्छन्ति च इति (२५–२–६) तथा च भाष्ये एकेषामित्यत्र एकं प्रमाणमिच्छन्तीत्येकेषां चार्वाकाणामिति व्याख्येयमित्यर्थः । दृष्टिः प्रतिज्ञा, अभावसिद्धेरिति (२५–२–१०) अभावप्रसङ्गादित्यर्थः । प्रमाणान्तरस्येति (२५–२–१२) प्रत्यक्षातिरिक्तप्रमाणस्येत्यर्थः । तद्दूषणस्य (२५ २ १२) सर्वज्ञवचनस्य, हेतुवादरूपस्य (२५-२ १२) हेतुमात्रार्थविषयस्य, अहेतुवादरूपस्य (२५ २ १२) आज्ञामात्रार्थ विषयस्य, स एव सर्वज्ञ एव, अतिप्रसङ्गस्य दुष्परिहरत्वादिति, (२६–१–१) यथा च प्रतियोगितद्व्याप्येतरयावत्-प्रतियोग्युपलम्भकसमवधानरूपायास्तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकस्वरूपाया वा योग्यताया अभावात् योग्यानुप लम्भप्रमाणस्य न प्रसरः तदभावग्राहकं, तत्सहकृतस्यैव तस्य तदभावग्राहकत्वनियमादिति फलितम्, न चासत एव सर्वज्ञादेः प्रमाणान्तरस्य चाऽभासासिद्धस्याभावः शशशृङ्गस्येव प्रत्यक्षतः सुज्ञान इति वक्तुं शक्यम्, अनुपलम्भकाले आभासोपलम्भ कसामग्र्या अभावात्, तत्काले चानुपलम्भाभावात् तस्याशक्यनिषेधत्वात् । तदुक्तं " दृष्टोपलम्भसामग्री, शशशृङ्गादियोग्यता । न तस्यां नोपलम्भोऽस्ति, नास्ति सानुपलम्भने ॥१॥" इति, शशशृङ्गं नास्तीत्यस्य च शशे शृङ्गाभावोऽस्तीत्येवार्थ इति बोध्यम्,

भाष्ये-असिद्धेरिति प्रमाणत्वेन बाधसिद्धेरित्यर्थः। तामेव प्रदर्शयन् वादिनो विरुद्धमापित्सयभ्युपगमयति प्रत्यक्षमित्या विना ( ३६-१-२ ) गौणत्वात् प्रमाणस्येति ( ३६-१-२ ) प्रमाणस्य अनुमानप्रमाणस्य, गौणत्वाल्लौकिकप्रामाण्यव्य हारविषयत्वेनोपचरितत्वादित्यर्थः। दुर्लभ इति ( ३६-१-२ ) उपचरितस्य मुख्यकार्याकारित्वादित्यर्थ, नहि गंगात्वेनो पचरितं तीरं स्नानावगाहनादिकार्यं साधयति, सामान्य इत्यादि ( ३६-१-३ ) धूमेन वह्निसामान्ये साध्ये सिद्धसाधन वह्निमात्रस्य सिद्धत्वात्, पर्वतीयवह्नेरन्यस्यासिद्धेः विशेष्ये पर्वतीयवह्नौ साध्येऽनुगमाभावो व्याप्त्यभावो, यत्र धूमस्तत्र पर्वती-यवह्निरित्येवमनुगमस्य दुर्ग्रहत्वात्, सर्वत्र सामान्ये विशेषे वा साध्ये विरुद्धव्यभिचारित्वम्, पक्षे साध्याभावव्याप्तिस्वसंशयेन तत्संशयापादकस्य चाप्रतिष्ठत्वात्तस्मात् व्याप्तेरगमकत्वान्नानुमानं प्रमाणमित्याशयः। न च व्याप्त्या सामान्यसिद्धिः पक्षधर्म तया च विशेषसिद्धिरिति न दोष इत्यपि वक्तु शक्यम्, पित्रोर्ब्राह्मणत्वेन पुत्रब्राह्मण्यतानुमानात् पक्षधर्मतया अनवस्थितादिति भावः। सवादकत्वापीति (३६-२-३) यद्यपि देशकालनरान्तरप्रत्यक्षाणि प्रमाणानि संवादकत्वात् मत्प्रत्यक्षवदित्यनु मानं कर्तुमशक्यम्, सार्वत्र्यापत्त्या पक्षप्रसिद्धेरसम्भवात्, तथापि स्वप्रत्यक्षदृष्टान्तेन संवादकत्वलिङ्गेन प्रत्यक्षत्वावच्छेदेन प्रामाण्यसाधने तात्पर्यं द्रष्टव्यम्, ननु संवादकत्वादिलिङ्गेन प्रामाण्यानुमितावपि नानुमानप्रामाण्यसिद्धिस्तस्याः पक्षागृहीतासंसर्गकार्थस्मृतिरूपाया उत्कटकोटिकसंशयरूपाया वा सम्भावनाया अनतिरिक्तत्वात्, क्वचिन्निर्विकल्पकप्र ष्टमाविसविकल्पकस्य व्यवहारहेतुत्वेऽप्यन्यत्र बहुधः सम्भावनाया एव तथात्वात्, तयैव सर्वोपपत्तेः, अनुमानेऽपि च संवादाभिमानात् प्रामाण्यसम्भावनायां न दोषः, अनादिवासनामूलकभ्रमविपर्ययादिविकल्पव्युदासायाप्यधमूलकत्वं

विकल्पविशेषत्वम्, विकल्पापरस्थित एव वा संवादो ग्राह्यः, अभ्यासमूलकस्याप्यन्यान्तरस्य सविकल्पकस्य च सम्भवात्, तथा च परमत्यक्षादेः संवादकत्वेन प्रामाण्यसम्भावना युक्तैव, स्वाप्यक्षस्यापि निर्विकल्पकस्य सन्मात्रावगाहित्वस्वविषयस्वप्रामाण्यावगाहित्वानां स्वरूपतः स्वभावत्वेन, तद्रूपेण तु सम्भावनाविषयत्वेन, असद्विषयस्याभावव्याप्त्येन सद्विषयत्वेन सन्मात्रावलम्बनत्वस्य स्वप्रकाशत्वव्याप्त्येन प्रकाशत्वेन स्वाविषयत्वस्यानवस्थापादकपरग्राह्यत्वशून्यत्वे सति ग्राह्यत्वेन प्रामाण्यस्यापि स्वग्राह्यत्वस्य तथा तथा सम्भावनाविषयत्वात्, न चैवं तेषां रूपाभासत्वापत्तिः, स्वरूपातिरिक्तत्वे इष्टत्वात्, नहि निर्विकल्पक सन्मात्रावलम्बनमित्याविद्युवेस्तन्मते प्रमात्वम्, अयं घट इत्यादिधियामपि प्रमात्वापत्तेः, इत्येवं वस्तुतः प्रत्यक्षमेव प्रमाणं, सम्भावनारूपव्यवहारात्त्वनुमानादिकमपीति चार्वाकमतमुपपद्यत इति चेत्, न स्वरूपतो निर्विकल्पकग्राह्यत्वस्य तद्रूपेण सम्भावनाभावत्वस्य च भेदाभेदात्मकत्वस्यानभ्युपगमं विनानुपपत्तेः, व्यक्तेरिव जात्यादेरपि परमार्थसत्त्वेन सविकल्पकस्यापि सन्मात्रावलम्बनत्वात् अनुमिनोमीति विलक्षणप्रतीतिसिद्धप्रमान्तरजनकत्वेनानुमानस्यापि प्रमाणान्तरतायामान्यत्र व्यवस्थापितत्वादिति दिक् । शून्यवादिमतमुत्थाप्य दूषयति भाष्यकृत्–तथेष्टत्वादित्यादिना (२१–२–६) तथेष्टत्वात् प्रत्यक्षादिप्रमाणं प्रमेयं च सर्वमुपप्लुतमेवेतीष्टत्वान्न दोषः, इति, इयम्, एकेषां प्रत्यक्षापुच्छेद इत्येवं शून्यमिच्छन्ति ये तेषाम्, अप्रमाणिकैषाप्रमाणसिद्धैव, दृष्टिः प्रतिज्ञा, सर्वमुपप्लुतमिति वचनमात्रात् स्वोपप्लवसिद्धौ सर्वमनुपप्लुतमिति वचनात् तदनुपप्लवस्यापि सिद्ध्यापत्तेरिति तदर्थः, इष्टौ न विशिष्यत (१६–२–७) इत्यनन्तरं वाक्यमात्रेणेति शेषः, स्वपक्षसिद्धमिति (२१–२–१) शून्यवादस्य निरस्तत्वादिति भावः । तथासतीति (१९–२–१०) परच्छेन्द्रियप्रत्यक्षादेः प्रमाणान्तराभाव

प्रारम्भे मतीत्यत्र, स्वेष्टतस्यचिपर्यं भवेदिति (२६ २ ११) अन्याभिमतवस्त्वाभावे स्वप्रत्यक्षानुमानयोरिव प्रवृत्तेरित्यर्थः, माध्यमिक एव शङ्कते ननु चेत्यादि (२७-१-२) ज्ञानप्रामाण्यस्य दुर्ग्रहत्वादगृहीतप्रामाण्यकं ज्ञानं नानुपप्लुततत्त्वं साधयेदिति प्रश्नकार्थः, स्वतः प्रमाणस्येति (२७-१-५) स्वप्रकाशमहिम्ना स्वेन स्वात्मेव प्रामाण्यमपि गृह्यत इति गुरुमतमाभिप्रायं पूर्वपक्षः। सर्वप्रवादिनामिति (२७-१-५) स्वस्वज्ञानस्य स्वतः प्रामाण्यग्रहे सर्वे प्रवादाः सत्याः स्युरिति भावः। अपि च ज्ञानेन स्वतः स्वप्रामाण्यग्रहे ज्ञानप्रामाण्यसंशय एवोच्छिद्येत, ज्ञानग्रहे प्रामाण्यनिश्चयाभिधिवे च संशयायोगात्तद्ग्रहे धर्मिज्ञानाभावाद्, समानधर्मवत्तया धर्मिज्ञानस्य चान्वयव्यतिरेकाभ्यां संशयहेतुत्वावधारणादित्यपि द्रष्टव्यम्। ननु प्रवृत्तिमात्रे न ज्ञानप्रामाण्यनिश्चयो हेतुः, अनभ्यासदशायां प्रामाण्यसन्देहादपि प्रवृत्तिदर्शनात्, प्रामाण्यज्ञानत्वेनैव प्रवृत्तिहेतुत्वात्, प्रवर्तकज्ञानऽगृहीताप्रामाण्यकत्वनिवेशश्चौन्ये तदहेतुत्वाच्च, प्रामाण्यनिश्चयस्याभ्यासहेतुसंशयापगमार्थमेवोपयोगात्। न च संशयात् प्रवृत्तौ प्रेक्षावत्त्वहानिः, इष्टत्वात्, प्रेक्षावरणक्षयोपशमस्य सर्वदा सर्वेषामभावेन विना सर्वज्ञं क्वचित्क्वाचित्कस्यचिदेव प्रेक्षावत्त्वव्यवहारात्। तदुक्तं–"प्रेक्षावत्ता पुनर्ज्ञेया, क्वापि कस्यचित् क्वचित्। अप्रेक्षाकारिताऽप्येवमन्यथाक्षेपवेदिनः ॥ १ ॥" इति, यत्तु सकम्पत्वनिष्कम्पत्वे प्रवृत्तिगतजाती प्रामाण्यसंशयनिश्चयजन्यतावच्छेदिके इति, तत् न, अंशे प्रामाण्यसंशयनिश्चयात्मकज्ञानजन्यप्रवृत्तौ तयोरांशिकत्वेन जातित्वासिद्धेः, अभ्यथाहिशोत्तरत्वसम्बन्धेन संशयनिश्चयविशिष्टत्वयोरेव सकम्पनिष्कम्पपदार्थत्वात्, यदिह प्रामाण्यसंशयादेव विचारे प्रवृत्तिर्भवतु तदुत्तरं परीक्षया प्रामाण्यनिश्चयादनुपप्लुततत्त्वसिद्धिः स्यादित्याशयवान् शङ्कते स्यान्मत विचारोत्तरकालमित्यादि (२७-१-८) एवं

संशयादिविपरीतोर्वं साधकाप्रामाण्यसम्भावनया तत्त्वोपप्लवोऽपि शब्दसाधन इत्यादयमस्तत्त्वोपप्लववादी स्वमत समाधत्ते एव तर्हीत्यादि ( २७-१-१० ) विचार्यत ( २७-१-११ ) इति, तदधीनप्रमेयतत्त्वसम्भवनाय विचारासहत्वेनोभीयत इत्यर्थः। नयनकुशलादेरिति, ( २७-१-१३ ) इन्द्रियावरणक्षयोपशमादेरित्यर्थः। तदविनाभाविलिङ्गाभावात्, ( २७-१-१४ ) तस्यादुष्टस्याविनाभाविलिङ्गाभावात्, तत्कार्यं (२७-१-१५) नयनकुशलतादिकार्यम्, लिङ्गमित्यत्रादुष्टताया इत्यनुषञ्जनीयम्, उपघातकत्वासम्बन्धो व्याप्यतावच्छेदको विशेषणताविशेषण व्यापकतावच्छेदक इति बोध्यम्। तदव्यभिचारित्वाभावादिति ( २७-२-१ ) ज्ञानमात्रस्योपघातकत्वासम्बन्धेन दुष्कारणत्वकेऽपि सत्त्वात् व्यभिचारा दित्यर्थः, प्रमात्वतच्छेदेनादुष्कारणारब्धत्वव्याप्तिस्वीकारे गुणवत्कारणारब्धत्वव्याप्तिरपि स्यात्, तथा च वेदे गुणवत्पुरुष प्रणीतत्वस्य बलादापत्तेः, तत्रापौरुषेयत्वमनोरथोऽपि तव न पूर्येतेति मीमांसकं प्रत्याह तत्त्वोपप्लववादी किञ्चेत्यादिना ( २७-२-३ ) नापि बाधानुत्पत्त्येति ( २७-२-११ ) प्रामाण्य गृह्यत इत्यनेन योगः, नापि प्रवृत्तिसामर्थ्येनेति (२८-२-३) अत्रापि प्रामाण्यं गृह्यत इति योजनीयम्। फलेन जलप्राप्त्यादिलक्षणेन, अभिसम्बन्ध उपधेयोपधायकभावः, तस्याः संविदः, तस्मिंश्च संविदः प्रमाणत्वनिश्चये च सति, तदवगमात् फलाभिसम्बन्धावगमात्, पुनरावर्तत इति चक्रकमिति ( २८-२-९ ) अन्यतः प्रमाणात् फलाभिसम्बन्धावगमे तत्प्रामाण्यस्य पूर्वज्ञानेन सिद्धावन्योन्याश्रयः फलाभिसम्बन्धान्तरोपजीविप्रमाणान्तराश्रयणे च पुनः पुनर्दोषापत्तिरित्येवात्र चक्रकं बोध्यम्, ननु तृतीयापेक्षामात्रम्, यथा प्रवर्तकज्ञानप्रामाण्यनिश्चयात् प्रवृत्तिः प्रवृत्तेरर्थक्रियानिश्चयस्ततश्च प्रवर्तकज्ञानप्रामाण्यनिश्चय इत्येवं चक्रकं योजनीयम्। पुनरावृत्त्य

मिधानं चैतदार्थाय। अद्योष इति ( ३९-१-२ ) अनवस्थादोषो नेत्यर्थः। किमर्थमिति ( ३९-१-३ ) प्रामाण्यपरीक्षणं विनाऽपि प्रवृत्तेर्भावित्वादित्यर्थः। लोकवृत्तानुवादार्थमिति ( ३९-१-३ ) प्रेक्षावल्लोकाचारानुरोधार्थमित्यर्थः, तथा च प्रेक्षावत्प्रवृत्तौ प्रामाण्यनिश्चयस्य हेतुत्वात् तदावश्यकत्वमिति लभ्यते, तर्हि लोकवृत्तमित्यादि ( ३९-१-३ ) तथा च प्रामाण्यपरीक्षणं मदिष्टसाधन प्रेक्षावदाचारविषयत्वादित्यादौ प्रेक्षावत्पदार्थाभ्रान्तत्वघटकप्रामाण्यज्ञापकान्वेषणे प्रागुक्तदोषजालोपनिपातो दुर्निवार इति प्रघट्टकार्थः। नाप्यविसंवादित्वेनेति ( ३९-१-११ ) एतेनान्यथा वेति पक्षो व्याख्यातः, एतच सौगताभिमतं प्रामाण्यं तत्त्वोपप्लववादिना दूष्यत इति बोध्यम्। तदव्यवस्थितौ ( ३९-२-८ ) प्रमाणतत्त्वाव्यवस्थितौ, कुत इति ( ३९-२-८ ) प्रमाणतत्त्वव्यवस्थाधीनत्वात् प्रमेयतत्त्वव्यवस्थितेरिति भावः। विचारादित्यतः ( ३९-२-९ ) पूर्वं तस्मादित्यध्याहार्यम्। तस्मात्प्रमाणतत्त्वप्रमेयतत्त्वाव्यवस्थानाद्विचारोत्तरं तत्त्वोपप्लवः सिद्ध्यतीत्यर्थः, एवं निर्गठिते तत्त्वोपप्लववादिपूर्वपक्षे सिद्धान्तमाह स्याद्वादी इत्येतदपि सर्वमसारमित्यादि ( ३९-२-९ ) किं तर्हि सुनिश्चितासम्भवद्बाधकत्वेनेति (३९-२-१५) ननु किमिदं प्रामाण्यज्ञापकाभिधानम् उत स्वरूपाभिधानं, नाद्यो ज्ञापकत्वस्येवादुष्टकारकसन्दोहोत्पाद्यत्वादेरपि त्यागायोगात्, ज्ञानधर्मत्वेनाव्याप्तज्ञानव्यासकाले ज्ञाप्यज्ञापकभावस्य व्यवहारान्वयव्यतिरेकाभ्यां तद्व्यवसायाच सर्वत्र वक्तुं शक्यत्वात्, स्वाश्रितपाऽप्यस्त्वज्ञानगृहीतेन तेन तज्जातीयत्वलिङ्गाच तद्द्वारा पूर्वज्ञानप्रामाण्यग्रहसाम्ये एकतरपक्षपातायोगाच, अत एव न द्वितीयोऽपि, स्वप्रकाशमहिम्ना स्वस्येवोक्तस्य सर्वस्य प्रामाण्यस्यापि स्वधर्मत्वेन ग्रहाविशेषात्, स्वधर्मोऽपि योग्य एव ग्राह्यो नायोग्यः, अन्यथा स्वर्गप्रापणशक्तेरपि ग्रहप्रस

ज्ञादिस्पर्शीन्द्रियादुष्टत्वादिघटितादुष्टकारकसन्दोहोत्पाद्यत्वादेस्त्याग इति चेत्, सर्वस्मिन्नपि संविदिव्यक्तमर्मसम्मतप्रामाण्यकत्वमपि प्रामाण्यं स्वन्यताम् तस्य स्वप्रकाशमहिमा स्वाश्रयग्राह्यत्वादिति चेत्, अत्रायमस्माकमाकूतमन्यः, "ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम्, तदितरत्त्वप्रामाण्यमिति" प्रमाजनकत्वं प्रामाण्यं भ्रमजनकत्वमप्रामाण्यमित्येतदर्थः। अर्थाव्यभिचारित्वोक्तावनुमानादिवाग्निज्ञाने धूमपरामर्शेऽव्याप्तेरर्थाव्यभिचारित्वपदस्थाने प्रमेयपदमभिपिप्रायाचार्याणामत्रैव स्वारस्यात्, धूमस्याग्न्यव्यभिचारित्वेऽपि प्रमेयाग्न्यव्यभिचारित्वस्याग्निप्रमाव्यभिचारेणैवोक्तिसम्भवात्, अव्यभिचारित्वपदेन नियतत्वस्य साधारणकारणत्वव्यपाय सिद्धत्वपूर्ववर्तित्वयोराक्षेपतो लाभात्, जनकत्वं च योग्यव्यक्तान्वयव्यतिरेकसहचारज्ञानादिसध्रीचीनप्रत्यक्षगम्यं परैरप्युपगम्यत एवेति, प्रमाजनकत्वरूपप्रामाण्यस्याप्रमाजनकत्वरूपाप्रामाण्यस्य चाभ्यासे स्वाश्रयग्राह्यत्वम्, अनभ्यासे च परतो ग्राह्यत्वमपि सर्वम्, प्रामाण्यग्राहकं च परं स्वाश्रयातिरिक्तं संवादकज्ञानमेव, कारणगुणबाधकाभावज्ञानयोरप्यपेक्षितत्वात्। न चात्र समानजातीयभिन्नजातीयैकसन्तानभिन्नसन्तानविकल्पकृतदोषोपनिपातः, उभयस्वीकारात्, देवदत्तघटज्ञाने समानजातीयस्य यज्ञदत्तघटज्ञानस्य, प्रथममरुजलज्ञाने भिन्नजातीयस्योत्तरकालभाविस्नानपानावगाहनाद्यर्थक्रियाज्ञानस्यैकसन्तानत्वेऽप्यन्धकारकृतापिहितालोकप्रथमकुम्भज्ञाने निरस्ततिमिरालोकप्रभवकुम्भज्ञानस्य भिन्नसन्ताने च समानजातीयकुम्भज्ञानस्योक्तस्य संवादकत्वस्वीकारात्, एकसन्तानेऽभिन्नविषये संवादसंवादकभावाविरोधस्य च मन्दप्रबलसामग्रीसमुत्पाद्यत्वेन निरासात्, यथा च संवादत्वनियामकस्य वैशिष्ट्येन संवादकज्ञानं यत्र वर्तते तत्र प्रामाण्यनिश्चयोत्पत्तिरित्येवं नियमाच्च तज्जातीयत्वपरामर्शोऽविकल्पनापेक्षः, संवादकत्वव्याप्तिज्ञानाद्यपेक्षानपेक्षाविचारस्यापि तत्र क्षयोपशमाद्यपेक्षितत्वात्,

एवं च प्रकृतग्रन्थेऽपि सुनिश्चितासम्भवद्बाधकत्वं सुनिश्चितो बाधकाभावस्तेन संवादकज्ञानवदुपलक्ष्यत इति तेनैव यथोक्तमा माण्यग्रह इत्यत्र तात्पर्यम् । क्वचिदभ्यासानभ्यासौ स्वितित (४०—१—६) यथा चाभ्यासानभ्यासावदृष्टविशेषप्रयोज्यौ जातिविशेषावेव ज्ञानगतौ, विषयगतत्वं तु तयोरुपचारादिति मन्तव्यम्, तदिदमाह—"तदादृष्टनिमित्तानां, वैचित्र्यादिह देहि नाम् । जायते क्वचिदभ्यासोऽनभ्यासो वा कथंचन ॥ १ ॥" इति, ननु कूटस्थनित्यस्यात्मनोऽभ्यासानभ्यासस्वभावत्वं कथं घटतेति साशङ्कायामाह पूर्वापरेत्यादि (४०—१—८) परिणामित्वादात्मन उभयस्वभावत्वं न दुर्घटम्, कूट स्थनित्यभुवेर्नयविशेषविषयत्वादात्मन्यद्रव्यत्वस्य परिणामित्वव्याप्यत्वकल्पनापेक्षया द्रव्यत्वस्यैव तत्कल्पने लाघवात्, अहं बालो भूत्वा युवा जात इत्याद्यनुभवस्य सार्वजनीनस्य तत्साधकस्य जागरूकत्वाच्चेति भावः । सर्वस्य संवेदनस्य स्यात् स्वतः स्यात्परत (४०—२—६) इति, अत्र पद्ये "कतिपयकमानुस्मा नीरावसिक्तमुदि भ्रमात्, धुरि सुमहतो बीजाबीजे विदन्ति कृषीवलाः । तदनु कलिताद् साधर्म्याधद्धिषामनुमिन्वते, तदुपरि परिस्पष्टाभ्यासाद् विनाप्यनुमाश्रयम् ॥१॥ तथाभ्यासे स्वतो ध्येयं, प्रामाण्यमितरत्तथा । अनभ्यासे तु परतो, ह्यसौ पन्थो यथोचितः" इति ॥ २ ॥ ये तु नैयायिकमीमांसका विशेष्यावृत्त्यप्र कारकत्वादिकं नानाविधं प्रकृत्यनौपाधिकं प्रामाण्यमवगमय्य व्यवहारोपयोगिनस्तद्वति तत्प्रकारकत्वस्यैव ज्ञानगतप्रामाण्यस्य स्वतस्त्वपरतस्त्वयोर्विविधं विप्रतिपद्यन्ते, तेषामियं विप्रतिपत्तिः, ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यं नवेति, अत्र सकलानुगतस्यैकस्य प्रामाण्यस्याभावाद् घटज्ञानप्रामाण्यस्य घटज्ञानग्राहकेणाग्रहात् घटत्ववति घटत्वप्रकार कत्वादिकं तदप्रामाण्याग्राहकत्वाभयग्रहत्वव्यापकविषयताकं नवेति तदर्थः । प्रमेयत्वादिना व्यापकतया अतिप्रसञ्जकत्वात्

ज्ञप्तिस्वतीन्द्रियायुक्त्वादिघटितायुष्कारकसन्देहोत्पादकत्वादेस्त्याग इति चेत्, तर्हि सन्निकृष्टसर्वेन्द्रियकत्वगर्भमशक्यग्रहत्वमपि प्रामाण्यं त्यज्यताम्, तस्य स्वग्रहकसामग्र्या स्वाश्रयग्राह्यत्वादिति चेत्, अत्रायमस्माकमाकूतम्, "ज्ञानस्य प्रमेयाव्यभिचारित्वं प्रामाण्यम्, तदितरत्वमप्रामाण्यमिति" प्रमाजनकत्वं प्रामाण्यं भ्रमजनकत्वमप्रामाण्यमित्येतदर्थः। अव्यभिचारित्वोक्तावद्भुतत्वादिताग्निज्ञाने धूमपरामर्शेऽव्याप्तेर्वारणायार्थकत्वाने प्रमेयपदमभिधित्सतामाचार्याणामत्रैव स्वारस्यात्, धूमस्याग्न्यव्यभिचारित्वेऽपि प्रमेयाग्न्यव्यभिचारित्वस्याग्निप्रमाव्यभिचारपैतोक्तिसम्भवात्, अव्यभिचारित्वपदेन नियतत्वस्य साधारणकारणान्यथासिद्धत्वपूर्ववर्तित्वयोराक्षेपतो लाभात्, जनकत्वं च योग्यव्यक्त्यन्वयव्यतिरेकसहचाराद्यनादिसध्रीचीन प्रत्यक्षमर्थं परैरभ्युपगम्यत एवेति, प्रमाजनकत्वरूपप्रामाण्यस्याप्रमाजनकत्वरूपाप्रामाण्यस्य चाभ्यासे स्वाश्रयग्राह्यत्वम्, अनभ्यासे च परतो ग्राह्यत्वमविरुद्धं, प्रामाण्यग्राहकं च परं स्वाश्रयातिरिक्तं संवादकज्ञानमेव, कारणगुणबाधकाभावज्ञानयोरन्यथासिद्धत्वात्। न चात्र समानजातीयभिन्नजातीयैकसन्तानभिन्नसन्तानविकल्पकृतदोषोपनिपातः, उभयस्वीकारात्, देव दत्तघटज्ञाने समानजातीयस्य यज्ञदत्तघटज्ञानस्य, प्रथममयूरवचनज्ञाने भिन्नजातीयस्योत्तरकालकमाधिज्ञानपानापगाहनार्थ क्रियाज्ञानस्यैकसन्तानगतेऽन्यकर्तृकपिपासाऽलोकप्रमयज्ञन्यमज्ञाने निखिलमिरालोकप्रमयज्ञन्यज्ञानस्य भिन्नसन्ताने च समान जातीयज्ञन्यज्ञानस्योक्तस्य संवादकत्वस्वीकारात्, एकसन्तानेऽपि भिन्नविषये संवादसंवादकभावाविक्षेपस्य च मन्त्रप्रबलसामग्री समुत्पादकत्वेन निरासात्, तथा च संवादत्वनियामकस्य परिशेषेण संवादकज्ञान यत्र वर्तते तत्र प्रामाण्यनिश्चयोत्पत्तिरित्येवं नियमात् तज्जातीयत्वपरामर्शाविकल्पनाक्षेपः, संवादकत्वव्याप्तिज्ञानापेक्षानपेक्षाविचारस्यापि तत्र क्षयोपशमसमुत्प्रेक्षितत्वात्,

पूर्वाभ्यासप्रसङ्गः, सिद्धिप्रतिबन्धकस्याबनन्तरं सर्वत्रानुभूयमानानुमितेरुच्छेदप्रसङ्गश्च । न च द्वितीयानुव्यवसायादिना ज्ञानावच्छेदकत्वेनोक्तप्रामाण्यग्रहेऽपि स्वातन्त्र्येण तदग्रहात् स्वातन्त्र्येण तद्ग्रहायानुमानाभ्युपगमावश्यकमिति वाच्यम्, अनुव्यवसाये स्वातन्त्र्येण प्रामाण्याप्रकारकतायाः स्वातन्त्र्येण प्रामाण्यग्रहेऽनुव्यवसायसामग्र्याः प्रतिबन्धकत्वकल्पनयैवोपपत्तेः तत्प्रकारकाऽन्यस्तज्ञानप्रामाण्यग्रहे तथोपस्थितिविशेषहेतुत्वे लाघवमित्यपसिद्धान्ततमेव युक्तम् । किञ्च तद्विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्वमात्रमपि न प्रामाण्यं, संशयस्यापि तथात्वे तदभावाप्रकारकत्वस्याप्यधिकस्य देयत्वात्, अन्यथैतद्दोषे प्रमात्वेन भ्रमस्याप्यभ्यासवर्णनीयत्वप्रसङ्गात् तद्घटितस्य च प्रामाण्यस्य ग्रहे स्वतस्त्वपरतस्त्वयोरप्रामाण्यतुल्यकक्षत्वं युक्तिमत्, अपि च प्रामाण्यज्ञाने निश्चितास्यो मतिज्ञानविशेषः, स च प्रामाण्यघटकयावत्पदार्थोपयोगादभ्यासास्पदाभासाच्चेति ज्ञाने स्वत एव, अन्यत्र तु परतोऽनुमानादिनेत्यनुद्भवद्भूतसन्देहोत्पादसामग्र्यापि प्रामाण्यस्य ज्ञप्तिस्त्वदीयाशालिनो नानुपपन्ना, अस्तु वा सर्वत्र सदा बाधकाभावपर्यालोचनया प्रामाण्यादि उभयात्मकमेव ज्ञानम्, एकत्रापि ज्ञाने तद्विषयत्वावच्छेदेन ज्ञानजन्यत्वज्ञाना जन्यत्वयोरस्यां परोक्षत्वप्रत्यक्षत्वयोरविरोधात्, यावद्विषयापेक्षयैव प्रमितिभेदस्य तत्र तत्रोपपादितत्वादीदृशविज्ञानजन्येऽपाये च यावद्विषये एकोपयोगत्वपर्याप्तिमज्ज्ञानजन्यत्वेनैव प्रत्यक्षत्वव्यवस्थितेरित्यधिकं मत्कृत-न्यायबिन्द्वादेरवसेयम् । कुतस्तत्त्वोपप्लवसिद्धिरिति ( ४०-२-१० ) यत्र प्रमितस्यैवान्यत्रारोपसम्भवादिति भावः । पराभ्युपगममात्रा दिति (४०-२-१०) परोपगतप्रमाणाजन्तिविकल्पादिरूपः, सर्वमवगतमिच्छतामिति (४१-२-५) वैनयिकानामि त्यर्थः, सर्वमिच्छन्तीति सर्वेपरस्तेषामिति व्युत्पत्तिसारस्यादेरुदर्कलाभः, नैकप्रमाणवादिन इत्यादि ( ४१-१-१० )

नैकमपि प्रमाणं वदन्तीत्येवंशीला अनेकप्रमाणवादिन इत्यर्थः पथ्या इति पदसमर्थसमासोऽयं, तेनास्मात्तत्त्वोपप्लववादिलाभः सत्त्व इति द्रष्टव्यम् । तथाद्वैतमसिद्धेरिति ( ४१–१–१२ ) स्वपक्षसाधने परपक्षदूषणे सति द्वैतप्रसिद्धेर्वस्तुतापातादि स्यथः । संवृत्स्येति (४१–१–१४) संवृतिरविद्या तयेत्यर्थः । न परमार्थेन इति (४१ १ १४) आविद्यकप्रमाणस्य पारमार्थि अद्वैतसाधनाक्षमत्वादित्यर्थः । परमप्यापीति, आदिना (४१–१–१४) सम्भवपरिग्रहः, प्रमाणेतरेत्यादिना (४१–२–१) समाधलिङ्गकार्यलिङ्गानुपलब्धिलिङ्गकानुमानत्रयविषयस्य चार्वाकाभिमतस्य प्रत्यक्षैकप्रमाणाभ्युपगमविरुद्धस्योत्कीर्ण नम्, यथोक्तवदभ्युपगमे प्रमाणान्तरस्यानुमानरूपस्य सिद्धेः प्रसङ्गात्, स्वयमिति ( ४१–२–४ ) परोपगमस्य स्वं प्रत्य प्रमाणत्वादिति भावः । अतिप्रसङ्गादिति (४१–२–५) अनुमानत्रयाभ्युपगन्तुरपि चार्वाकस्यैकप्रमाणवादित्वोक्तौ वैशेषि कादीनामपि तथात्वप्रसङ्गादित्यर्थः । यावान् कश्चिदिति ( ४१–२–७ ) अग्निजन्मेत्यनन्तरं भवतीत्युत्तरत्र केवलमनुपल अनीयम्, अनग्निजन्मेत्यनन्तरं न भवतीति योजनीयम्, चाकारो भिन्नक्रमस्तदुत्तरं योजनीयस्तेनान्वयव्यतिरेकव्याप्तिप्रतिप द्रष्टव्यम्। स्वाकारद्वयप्रदर्शितं भवति, यथा श्रुते त्वग्निजन्मानग्निजन्मान्यतरतादात्म्याभयत्वनिषेधप्रतीतिरनुपपत्त्या प्रसज्येतेति द्रष्टव्यम्। नन्वत्र व्याप्तिप्रतिपत्तेरेव प्रत्यक्षाकरणकप्रमितित्वेन वैलक्षण्यं साधनीयं तत्करणत्वेनोहस्य प्रमाणान्तरत्वसिद्धेः, तत्प्रदर्शनं च यावान् कश्चिद्धूमः स सर्वो वह्नौ सत्येव भवति तस्मिन्नसति न भवतीत्येतावन्मात्रेणैव भवतीति व्यर्थं जन्मपदमिति चेत्, न, धूमोऽस्तु वह्निर्माऽस्त्वित्यप्रयोजकत्वशङ्कानिरासद्वारा धूमो यदि वह्निव्याप्यो न स्यात् वह्निजन्यो न स्यादिति विचारपरिकरस्यैवो- हस्य व्याप्तिप्रमापकत्वसम्भवात् तादृशविचारोपनयनार्थं जन्मपदोपादानात्, एतेन प्रथमं धूमस्यानुपलम्भ एकस्तदनन्तरमपेक्ष

पत्राभ्यासप्रसङ्गः, सिद्धिप्रतिबन्धकस्याबनन्तरं सर्वानुव्यवसायानुमितेरुच्छेदप्रसङ्गश्च । न च द्वितीयानुव्यवसायादिना ज्ञानावच्छेदकत्वपोक्षप्रामाण्यग्रहेऽपि स्वातन्त्र्येण तद्ग्रहात् स्वातन्त्र्येण तद्ग्रहायानुमानाभयनमावश्यकमिति वाच्यम्, अनुव्यवसाये स्वातन्त्र्येण प्रामाण्याप्रकारकतायाः स्वातन्त्र्येण प्रामाण्यग्रहेऽनुव्यवसायसामग्र्याः प्रतिबन्धकत्वकल्पनयैवोपपत्तेः तस्यैवाऽभ्यस्तज्ञानप्रामाण्यग्रहे क्षयोपशमविशेषहेतुत्वे लाघवमित्यस्मन्मतमेव युक्तम् । किञ्च तद्विशेष्यकत्वावच्छिन्न तत्प्रकारकत्वमात्रमपि न प्रामाण्यं, संशयस्यापूर्वं तत्माधाप्रकारकत्वस्याप्यधिकस्य देयत्वात्, अन्यथेदंतांशे प्रमाणत्वेन प्रमाप्यमाणवर्णनीयत्वप्रसङ्गात् तद्घटितस्य च प्रामाण्यस्य ग्रहौ स्वतस्त्वपरतस्त्वयोरप्रामाण्यतुल्यकक्षत्वं युक्तिमत्, अपि च प्रामाण्यज्ञानं निश्चितरूपा मतिज्ञानविशेषः, स च प्रामाण्यघटकपावत्पदार्थोपयोगादभ्यासाभ्यासास्तत्त्वति ज्ञाने स्वत एव, अन्यत्र तु परतोऽनुमानादिनेत्यनुत्कारकसन्दोहोत्पादस्यादेरपि प्रामाण्यस्य ज्ञप्तिस्तद्वीशालिनां नानुपपन्ना, अस्तु वा सर्वत्र सर्वदा बाधकाभावपर्यालोचनपर्वा प्रामाण्यांशे उपात्मकमेव ज्ञानम्, एकत्रापि ज्ञाने तदविषयत्वावच्छेदेन ज्ञानजन्यत्वज्ञाना बच्चात्स्यां परोक्षत्वप्रत्यक्षत्वयोरविरोधात्, बाधविषयापेक्षयैव प्रमितिमेतस्य तत्र तत्रोपपादितत्वादीदृशविज्ञानजन्येऽपाये च बाधविषये एवोपयोगसपर्याप्तिमतिमप्रमाणानाजन्यत्वेनैव प्रत्यक्षत्वव्यवस्थितेरित्यधिकं मत्कृत–न्यायबिन्दुप्रावेरवसेयम् । कृतसाम्योपम्भवसिद्धिरिति ( ४०–२–१० ) एकत्र प्रमितस्यैवान्यत्रारोपसम्भवादिति भावः । पराभ्युपगममात्रा पिति (४०–२–१०) परोपगतप्रमाणानिविकल्पादित्यर्थः, सर्वमवगतमिच्छतामिति (४१–१–५) वैनयिकानामि त्यर्थः, सर्वमिच्छन्तीति सर्वेषस्तेषामिति व्युत्पत्तिसारस्यात्तेरर्थलाभः, नैकप्रमाणवादिन इत्यादि ( ४१–१–१० )

सम्भवतो धूमस्याप्युपलम्भद्वयं पश्चादग्नेरनुपलम्भोऽनन्तरं धूमस्याप्यनुपलम्भ इति द्वावनुपलम्भाविति प्रत्यक्षानुपलम्भपञ्चकेन धूमाग्निसम्बन्धावगतौ तदविनाभावनियमोऽन्यथा नित्यं सत्त्वमसत्त्वं वा तस्य स्यात्, तदुक्तं "धूमाधीर्वह्निविज्ञानं, धूमज्ञानमधी-स्तयोः। प्रत्यक्षानुपलम्भाभ्यामिति पञ्चभिरन्वयः ॥१॥" इति, स्वभावहेतौ तु तत्प्रतीतिर्विपक्षे बाधकानुमानात्, अनुपलब्धिस्तु स्वभावहेतावन्तर्भवतीति न व्याप्तिग्रहाय भूयोदर्शनप्रमाणापेक्षेति मायाधनबौद्धमतं निरस्तम्, कार्ये हेतौ प्रत्यक्षानुपलम्भपञ्चकस्य व्याप्तिग्रहविषयत्वायोगात्, उपलम्भानुपलम्भस्वभावस्य द्विविधस्यापि प्रत्यक्षस्य सन्निहितमात्रविषयतया सर्वोपसंहारेण व्याप्त्यग्राहकत्वात्, व्यभिचारशङ्कया विपक्षबाधकान्वेषणेऽप्यक्षमत्वात्, ततः स्वभावहेतावपि तदयोगात्, प्रत्यक्षपृष्ठभाविनो विकल्पस्यापि प्रत्यक्षगृहीतमात्राध्यवसायित्वादधिकाध्यवसायित्वे प्रमाणान्तरस्य दुर्निवारत्वात् विपक्षे बाधकानुमानेऽप्यविनाभावग्रहार्थम-नुमानान्तराद्यपेक्षायामनवस्थानादिति । यदपि व्यभिचारादर्शनभूयस्सहचारदर्शनसहकृतं प्रत्यक्षमेव व्याप्तिग्रहे क्षममिति किं तदर्थं प्रमाणान्तरकल्पनेनेति नैयायिकैरभ्युपगम्यते, तदपि तुच्छं, व्याप्तेः प्रत्यक्षाविषयत्वे सहकारिसहस्रसमवहितेनापि तेन तद्ग्रहायोगात्, प्रत्यक्षविषयत्वे च प्रथमत एव तद्ग्रहप्रसङ्गात्, धूमव्यापकवह्निसामानाधिकरण्यविशिष्टधूमत्वादिरूपाया स्तस्याः स्वरूपतः सहचारदर्शनादिव्यङ्ग्यतया अपि वक्तुमशक्यत्वात्, व्याप्तित्वेन तस्योपगमस्याप्यतिरिक्तत्वानभ्युपगमे ऽपार्थत्वात्, अतिरिक्तव्याप्तिस्वीकल्पने च किमपराद्धमतिरिक्तव्याप्त्या यत्प्रमितिवैलक्षण्येनोक्तः प्रमाणान्तरं न सिध्येत्, न च धूमत्वादिरूपाया अपि व्याप्तेर्व्यापकसामानाधिकरण्यविशिष्टत्वेन ग्रहे सहचारदर्शनाद्यपेक्षेत्यपि वक्तुं युक्तम्, एवं सति दण्ड विशिष्टस्यादिना पुरुषग्रहेऽपि दण्डादेर्हेतुतापत्तेः, न च विशिष्टज्ञाने विशेषणज्ञानहेतुत्वमर्यादयेष्टापत्तिः, विशेषस्य चिन्त्यमानत्वात्,

किं चैव सन्निहितव्यक्तिविषयव्याप्तेर्यथाकथञ्चित्प्रतीतावपि समस्तवह्निव्यक्तिनिरूपितसमस्तधूमव्यक्तिनिष्ठव्याप्तेः कथं भानं, न कश्चित् प्रतियोग्यसमानाधिकरणयद्रूपविशिष्टसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदको यो धर्मस्तद्धर्मावच्छिन्नेन येन केनापि समं सामानाधिकरण्यं तद्रूपविशिष्टस्य तद्धर्मावच्छिन्नयावन्निरूपिता व्याप्तिरित्येव दीधितिकृता निष्कर्षकरणादिति चेत्, तर्हि व्याप्तिज्ञानानुमितिस्मरणादिकार्यकारणभावे रूपविशेषो निविशते न तु धर्मिविशेषोऽपीति महानसीयवह्निनिरूपितव्याप्तिमत्त्वेन ज्ञातादपि धूमाद्वह्नित्वेन पर्वते वह्न्यनुमितेरेकत्र व्यक्तौ धूमत्वेन व्याप्तिग्रहेऽन्यत्र तथा स्मरणस्य च नानुपपत्तिः, तद्रूपावच्छिन्नेन तेन सामानाधिकरण्यं तद्रूपावच्छिन्नवन्निरूपिता व्याप्तिरित्यभिधाने त्वनन्तहेतुहेतुमद्भावापत्तिः, गन्धत्वादिनैकगन्धादिसामानाधिकरण्यस्य पृथिवीत्वादौ ज्ञानादेन रूपेणापरत्र गन्धाद्यनुमितेरनापत्तिश्चेति साभिप्रायः, ओमिति चेत्, सोऽयं गुरुभिप्रायः, रूपविशेषस्येव धर्मिविशेषस्यापि निवेशे सर्वत्र नियमतो यावद्धर्मिविषयकत्वापत्तेः, सामान्यरूपेणैव व्याप्तिग्रहे क्वचिदपि विशेषव्याप्तिग्रहानापत्तेः, विशेषव्याप्तीनामेवावश्याभ्युपेयानां वह्निव्याप्तित्वेनानुगमीकृतानां सामान्यव्याप्तित्वाभ्युपगमौचित्यात् एकविशेषव्याप्तिज्ञानाद्विना हेतुविशेषणं सामान्यरूपेणाप्यन्यविशेषविषयानुमितेरनभ्युपगमात्, तस्मात् सर्वोपसंहारेण व्याप्तिग्रहार्थमवश्यमूहः स्वीकर्तव्यः। अथ सामान्यलक्षणाप्रत्यासत्त्या सकलवह्निधूमव्यक्त्युपस्थितौ सर्वोपसंहारेण व्याप्तिग्रहो विनाप्यूहं न दुर्घट इति चेत्, न। करितुरगरथपदातिविशेषप्रत्ययानन्तरं सेनाख्यसामान्यप्रत्ययस्येव सामान्यप्रत्ययानन्तरं तदाश्रययावद्विशेषप्रत्यक्षस्याप्यूहैकसाध्यत्वेन सामान्यलक्षणप्रत्यासत्तौ मानाभावात्। अत्रावसरे तर्करसिकजनमनःप्रसत्तये सामान्यलक्षणप्रत्यासत्तिमेव मनाग् मीमांसामहे, तत्र सामान्यधर्मज्ञानानन्तरं यावत्सामान्याश्रयप्रत्यक्षो

इत्थं सामान्यलक्षणाप्रत्यासत्तेः प्रत्यक्षहेतुतां कल्पयन्ति नैयायिकाः, सा च ज्ञायमानं सामान्यं, सामान्यज्ञानं वा, ज्ञानं च तदिन्द्रियसम्बन्धं प्राप्तं, स्मरणरूपस्य चित्तन्द्रियादिजन्यस्य च ज्ञानस्योत्तरकाले यावत्सामान्याश्रयप्रत्यक्षानुदयात्, तथा च घटत्वादिप्रकारतानिरूपितलौकिकान्यघटादिविषयताशालिचाक्षुषत्वावच्छिन्नं प्रति चाक्षुषप्रकारीभूतघटत्वत्वादिना घटत्वप्रकारकचाक्षुषत्वादिना वा हेतुता कल्प्यते, द्रव्यत्वादिसामान्यलक्षणाजन्यज्ञाने व्यभिचारवारणाय घटत्वादिप्रकारता-निरूपितत्वं विशेष्यतायां निवेशितम्। ज्ञानेऽपि घटत्वप्रकारकत्वनिवेशे तु घटत्वनिर्विकल्पकोत्तरोत्पन्ने सन्निकृष्टघटादौ घटत्वप्र-कारके द्रव्यत्वसामान्यलक्षणप्रत्यासत्तिजन्ये चाक्षुषप्रत्यक्षे व्यभिचार इत्यतस्तत्त्यक्तम्, न च तत्रासन्निकृष्टघटादिरपि घटत्वमाने चाक्षुषमात्रापर्यवसाने लौकिकान्यविषयविशेष्यतासत्त्वात् यथोक्तेनाप्यनिर्वाह इति शङ्कनीयम्। घटत्वसामान्यलक्षणा कारणविरहादेव तत्रासन्निकृष्टघटे घटत्वभानासम्भवात्, तदवृत्ति विशेषणज्ञानादिमात्रेण घटत्वप्रकारकबुद्धेर्जनयितुमशक्यत्वात्, घटत्वसामान्यलक्षणायाः पृथग्ज्ञानात्मकज्ञानलक्षणातः पृथग्लौकिकसन्निकर्षान्यसमविशेषसामग्रीसहकृतविशेषणज्ञानादीनामेव तत्र तज्जनकत्वात्, यथोक्तस्थले तादृशविशेषसामग्रीविरहेणोत्पादनासम्भवात्, जातित्वादिना घटत्वविशेष्यकस्मरणानन्तरं यत्र द्रव्यत्वप्रकारकघटविशेष्यकचाक्षुषं तदुत्तरोत्पन्नद्रव्यप्रत्यक्षे घटत्वस्य प्रकारतया भानं नेष्यत एवेति नानुपपत्तिः, एवमिह घटे घटत्वमिति चाक्षुषानन्तरोत्पन्नद्रव्यत्वप्रकारकचाक्षुषोत्तरद्रव्यत्वसामान्यप्रत्यासत्तिजन्यज्ञानस्थलेऽपि द्रष्टव्यम्। लौकिकान्यत्वस्य विशेष्यतायां निवेशान्निर्विकल्पाद्युत्तरोत्पन्नलौकिकप्रत्यक्षे न व्यभिचारः, न च यावत् घटविशेष्यत्वस्य कार्यतावच्छेदककोटिनिवेशावश्यकत्वात् किं लौकिकान्यत्वनिवेशेनेति वाच्यम्, तन्निवेशेऽपि

ज्ञापकविरहेणैव यावद्घटभानापत्तौ तन्निवेशे प्रयोजनविरहात्, व्यभिचारवारणाय घटत्वव्यापकविशेष्यताकत्वरू-
पयावद्घटविशेष्यकत्वापेक्षया लघोर्लौकिकान्यत्वस्यैव निवेशौचित्यात्, तथा च घटादिरूपसामान्यलक्षणस्थले यावच
स्वाश्रयविषयकलौकिकस्यापि सम्भवेन तन्निवेशप्रयोजनाच्च, मुख्यत्वनिवेशात् घटत्वादिप्रकारकस्मरणादिजन्यघटोपनीतभा-
नादौ न व्यभिचारः, बहिरिन्द्रियजन्ये उपनीतभाने उपनीतस्य विशेषणतयैव भानान्मुख्यत्वस्य च प्रकारतान्यत्वारम-
कत्वात्, घटत्वादिविषयकनिर्विकल्पकानन्तरं यावद्घटप्रत्यक्षानुदयात् कारणतावच्छेदककोटौ प्रकारत्वनिवेशः,
एकसम्बन्धेन सामान्यप्रकारकज्ञानादन्यसम्बन्धेन सामान्याश्रयप्रत्यक्षापत्तिवारणाय तत्सम्बन्धेन सामान्याश्रयप्रत्यक्षहेतुतायां
तत्सम्बन्धावच्छिन्नप्रकारता निवेशनीया । अत्र प्रथमकल्पे कारणतावच्छेदकप्रत्यासत्तिः समवायादि, कार्यतावच्छेदक-
प्रत्यासत्तिश्च विषयता, घटादिविषयविषयतात्वेन सम्बन्धत्वाभ्युपगमान्न समूहालम्बने व्यभिचारः । एकपुरुषीयसामान्य-
ज्ञानादन्यपुरुषीयसामान्याश्रयप्रत्यक्षवारणाय ज्ञानांशे तत्पुरुषीयत्वं निवेश्यम्, इत्थं च पुरुषभेदेनापि कारणताभेदः,
द्वितीयकल्पे कार्यस्य कारणस्य च समवाय एव प्रत्यासत्तिरतो नैकपुरुषीयसामान्यज्ञानादन्यस्य सामान्याश्रयप्रत्यक्षप्रसङ्गः ।
अत एतत्कल्पे पुरुषभेदेन कारणताभेदाभावात्पूर्वकल्पापेक्षया लाघवं, न चात्र सामान्यानां विशिष्य निवेशनीयतया गौरवं
मत्पक्षे तु लौकिकान्यमुख्यविशेष्यतासम्बन्धेन चाक्षुषत्वावच्छिन्नं प्रति प्रकारतासम्बन्धेन चाक्षुषादिसर्वत्रैकहेतुताकल्पनये-
वोपपत्तौ न सामान्यभेदेन कारणताभेद इति लाघवम्, पुरुषापेक्षया च विषयाणां बहुतरतया सामान्यभेदेन कारणताभेद-
कल्पनस्यैव पुरुषभेदेन कारणताभेदकल्पनापेक्षया गुरुत्वादिति वाच्यम्, सामान्यधर्माणां विशिष्यानिवेशे द्रव्यत्वप्रकारक-

तेनैव तथात्वे तापनमिति ग्राह्यम्, न चोक्तसम्बन्धेन चाक्षुषाधिकरणे तदव्यवहितप्राक्कालावच्छेदेन प्रकारतासम्बन्धेन चाक्षुषरूपकारणाभावात्कथं तत्र तदुत्पत्तिस्तत्कालस्यातीतनिष्ठप्रकारतासम्बन्धावच्छिन्नज्ञानरूपकारणाधिकरणतानवच्छेदकत्वादिति वाच्यम्, विषयतासम्बन्धावच्छिन्नाधिकरणताया अधिकरणासम्बद्धकालस्याप्यवच्छेदकत्वाभ्युपगमात्, अन्यथा ज्ञानेच्छादीनां विषयनिष्ठप्रत्यासत्त्या कार्यकारणभावविलयप्रसङ्गात्, अथवा प्रकृतस्थलेऽवच्छेदकत्वमनन्तर्भाव्य यत्र प्रदेशे यत्क्षणाव्यवहित पूर्वक्षणवृत्तिचाक्षुषादिरूपं कारणं प्रकारतासम्बन्धेन वर्तते तत्र तद्क्षणवृत्तिचाक्षुषादिरूपं कार्यं प्रकारतासम्बन्धेनोत्पद्यत इत्येव सामग्र्याप्तिरभ्युपगम्यत इति नानुपपत्तिः। अथ विनश्यदवस्थसन्निकर्षजन्यसामान्यप्रकारकचाक्षुषानन्तरं सामान्यप्रत्यासत्तिजन्यचाक्षुषापत्तिः, स्वाश्रयविशेष्यतानिरूपितसामान्यप्रकारकत्वसम्बन्धेन चक्षुःसंयोगविशिष्टचाक्षुषत्वा दिनात्मनिष्ठप्रत्यासत्त्या स्वाश्रयविशेष्यतानिरूपितत्वसम्बन्धेन चक्षुःसंयोगविशिष्टप्रकारतात्मकविषयनिष्ठप्रत्यासत्त्या चाक्षुषत्वादिना च हेतुत्वेऽपि यत्र धूलीपटलादिविशेष्यकधूमत्वादिप्रकारकभ्रमो दोषनाशश्च युगपत्तत्र तदुत्तरयावद्धूमप्रत्यक्षापत्तिः तद्वत्सामान्याश्रयीभूतस्वाश्रयविशेष्यतानिरूपिततत्सामान्यप्रकारताकत्वसम्बन्धेन चक्षुःसंयोगादिविशिष्टचाक्षुषत्वादिना समानाधिकरणवृत्तित्वस्वाश्रयविशेष्यतानिरूपितत्वोभयसम्बन्धेन चक्षुःसंयोगादिविशिष्टप्रकारतासम्बन्धेन चाक्षुषत्वादिना वा हेतुत्वकल्पने तु धूलीपटलादिविशेष्यकधूमत्वादिभ्रमादोषादिसत्त्वकालेऽपि यावद्धूमत्वाश्रयप्रत्यक्षानुदयप्रसङ्गः दोषादिवैशिष्ट्यं निवेश्य हेतुतान्तरकल्पने तु व्यभिचारवारणमशक्यमिति चेत्, न, सामान्यप्रत्यासत्त्या सामान्यप्रकारता निरूपितलौकिकविशेष्यताशून्यचाक्षुषादीनां कुत्राप्यजननात् तादृशविशेष्यताशालिचाक्षुषसामग्रीसहकारेणैव सामान्य

घटसामान्यमिति प्रकृते तदसत्त्वभासाधम्यप्रत्यक्षं विचाराधीन इति विचारकधीतत्वात् सामान्यप्रत्यासत्तेरस्वभावत्वं, वस्तु-
तस्तस्या यावदाश्रयभाने द्वित्वादावपेक्षाबुद्धेरिव वैजात्येनैव हेतुत्वमुचितमिति तस्या पक्षोद्धारकत्वं प्रमाणान्तरत्वं च युक्तिमत्,
एतेन, स्मरणादिसाधारणसामान्यविषयकज्ञानत्वेनैव हेतुता सामान्यप्रकारकप्रत्यक्षत्वेन कार्यता, स्मरणादिकालेऽपि सामान्या-
श्रयप्रत्यक्षमिष्टमेव, सामान्यप्रत्यासत्तिजन्यचाक्षुषादौ सामान्यप्रकारकलौकिकचाक्षुषसामग्र्या आवश्यकत्वात् द्वितीयपक्षे सामा
न्यप्रकारकचाक्षुषोत्पत्त्या तृतीयपक्षे यावत्सामान्याश्रयप्रत्यक्षस्य भवतोऽप्यावश्यकत्वात् सामान्यप्रकारकत्वेन कारणत्वमनावश्य
द्वितीयपक्षे तद्बुद्ध्युत्पादाभ्युपगमे मतिविरहात्, एवं निर्विकल्पोत्तरमपि यावत्सामान्याश्रयप्रत्यक्षमिष्टमेव । द्वितीयपक्षे
विशिष्टबुद्ध्युत्पत्त्या तृतीयपक्षे तद्बुद्ध्युत्पादाभ्युपगमस्य भवतोऽप्यावश्यकत्वात्, न च सामान्यविषयकज्ञानत्वेन हेतुत्वे विषयतात्वेन
प्रकारतावच्छिन्नतादीनामवच्छेदकत्वापेक्षया प्रकारतात्वेन प्रकारतामात्रस्यैव तथात्वमुचितमिति वाच्यम्, सामान्यप्रकारक-
ज्ञानत्वेन हेतुत्वे लौकिके उपनीतभाने च व्यभिचारवारणाय लौकिकजन्यबुद्धित्वविशेष्यतायाः कार्यतावच्छेदककोटौ दाने
गौरवात्, तदपेक्षया कारणतावच्छेदककोटौ विषयतात्वेन निवेशस्यैवोचितत्वादित्यादि नवीनोक्तमप्यपास्तम्, निर्विकल्पकस्या
विचारकत्वेनाप्रत्यासत्तित्वात् सामान्यविषयकज्ञानत्वेन हेतुत्वायोगात्, एकसम्बन्धेन सामान्यविषयकज्ञानात् सम्बन्धान्तरेण
सामान्याश्रयप्रत्यक्षाभ्युपगमस्यानुभवविरुद्धत्वेन तद्वारणाय सम्बन्धविशेषावच्छिन्नविषयतानिवेशगौरव्य निर्विकल्पकप्रत्या
योगाच्च, किञ्च निर्विकल्पकस्य प्रत्यासत्तित्वे घटत्वप्रत्यक्षकाले द्रव्यत्वसत्त्वादीनामपि प्रत्यक्षस्यापद्यनीयत्वात्, घटत्वनिर्वि
कल्पकद्वितीयपक्षे यावद्घटप्रत्यक्षवत् यावद्द्रव्यप्रत्यक्षस्य यावत्सत्प्रत्यक्षस्य चापत्तिः, सा चानिष्टेति, यस्य यावत्सामा

न्यत्वं द्रव्यमात्रवृत्तित्वेनोच्यते तदुपज्ञानानां घटद्रव्यत्वप्रविषयविषयिस्वभावात्मिका प्रतिपत्त्या, न चेद् एवं तदा ज्ञायमानात् सामा न्यात् यावद्घटाभयस्यैव ज्ञायमानविशेषात् यावद्घटाभिन्नस्यापि प्रत्यक्षाद्यभ्युपगमेन सामान्यलक्षणापत्तिक्षेपलक्षणापि बलात्प्रत्यासत्तिपदवीमासादयेत्, न च तत्र विशेषस्य सामान्यनाममात्रकरणेनापि निस्तारः, पर्यवसानपर्युत्क्रान्तानामर्थानां यथोक्तं युक्तिबाधेन स्वलक्षणमात्रविश्रान्तप्रतीतौ प्रत्यासत्त्यन्तरकल्पनापत्तेः। एवं घटाद्यर्थेऽपि भेदाभेदादिविचारे निर्विकल्पपर्यवसाने द्रष्टव्यम्। उक्तव्यापारोपगमे तु न कुत्रापीदृशस्थले विचारणीयमस्ति। अत्र फलीभूतबोधापलापे तु सामान्यप्रत्यासत्तिकल्पनोऽपीयत्करापदश्च इति ध्येयम्। इदमप्यत्र वदन्ति, निर्विकल्पकसाधारणसामान्यज्ञानस्य प्रत्यासत्तित्वमते ज्ञानप्रत्यासत्तेर्हेतुत्वे मानाभावः। घटे नास्ति सुरभि चन्दनमित्यादौ घटसौरभादीनां घटत्वसौरभत्वसामान्यलक्षणप्रत्यासत्तिबलादेव मानोपपत्तेः। न च सामान्यप्रत्यासत्त्या फलजनने किञ्चिदंशे सामान्यप्रकारकज्ञानसामग्र्यन्तरस्यापेक्षितत्वादुपदर्शितस्थले च घटांशे घटत्वप्रकारकज्ञानसामग्र्यन्तरविरहेण कथं घटत्वादिसामान्यलक्षणया घटादिज्ञानं जननीयमिति वाच्यम्, तत्र सामान्यज्ञानविषया घटादिप्रकारकप्रत्यक्षजनकघटादिज्ञानघटितोपनीतभानसामग्र्या एव सत्त्वात्। ज्ञानलक्षणायाः पृथग्घेतुत्व एव विवादात् घटसामान्यलक्षणाया अपि च प्रकृतघटत्वादिसामान्यलक्षणातिरिक्ततया सामग्र्यन्तरानुपपत्तेः, घटत्वसौरभत्वादिसामान्यलक्षणाप्रत्यासत्तेर्धर्मन्यूनावच्छेदकमोटायपि घटत्वसौरभत्वादिविषयता निषिध्यते ननु तदाश्रयविषयतेति तद्धर्मविषयकज्ञानाभावेन तथा तज्ज्ञानानिर्वाहाच्च तदंशमपि ज्ञानलक्षणा कल्प्यते, न च रजतत्वादिना शुक्त्या उपनीतमानानुरोधेन ज्ञानलक्षणप्रत्यासत्तेः पृथक्कारणत्वकल्पनमावश्यकं, तत्र शुक्तित्वविधर्मज्ञानाभावेन सामान्यलक्षणात्वस्य

निमाद्यादिति वाच्यम्, रजतत्वसामान्यलक्षणाया रजतत्वाश्रयप्रत्यक्षं प्रत्येव हेतुत्वेऽपि शुक्तेरपि वैज्ञानिकसम्बन्धेन रजतत्वा-
श्रयत्वात् तद्बलादेव तज्ज्ञानोपपत्तेः, वस्तुतो दोषादिरूपकारणबलादेव तत्र शुक्तिभानमिति न तदनुरोधेन ज्ञानप्रत्यासत्तिहेतु-
ताकल्पनं, न चैवं रजतत्वज्ञाने शुक्तेर्भानेऽपि दोषादिबलाद्घटादेरुपनीतभानापत्तिः, दोषस्य फलबलकल्प्यतया फलाभावेन
तत्र दोषाकल्पनात् । न च ज्ञानलक्षणायाः पृथग्हेतुत्वे घटत्वविशेष्यकज्ञानदशायां घटज्ञानाद्यसत्त्वेऽपि घटत्वादिना घटादि-
मुख्यविशेष्यकभानसोपनीतभानापत्तिः, घटत्वादिसामान्यलक्षणायाः किञ्चिदंशे घटत्वादिप्रकारकज्ञानसामग्र्यन्तरसहकृताया
एव फलहेतुत्वेन तत्र तदन्यज्ञानमादायेष्टापत्तेः कर्तुमशक्यत्वादिति वाच्यम् । एवमपि लौकिकान्यतद्विषयताशालिज्ञानत्वा-
वच्छिन्नंप्रति तद्विषयकज्ञानत्वेनैकहेतुताकल्पनेनैवोपपत्तौ ज्ञानप्रत्यासत्तिसामान्यप्रत्यासत्त्योः पृथक्कारणत्वे मानाभावात्, न च
सामान्यप्रत्यासत्तिजन्यातीतसामान्याश्रयप्रत्यक्षे व्यभिचारः, अव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ निवेशे तदभावात्, न
च घटत्वांशे लौकिकस्याप्यनुपघटमानस्य लौकिकान्यघटत्वविषयताशून्यत्वेन तत्र घटत्वादिज्ञानस्य पृथग्घेतुत्वकल्पनमाव-
श्यकम् एककारणतया निर्वाहाभावादिति वाच्यम् । तत्र घटत्वांशे द्विविधविषयतास्वीकारे दोषाभावात् अव्यवहितोत्तरत्व
निवेशेनैव लौकिकज्ञाने व्यभिचाराभावेन लौकिकान्यत्वानिवेशाच्च, न चातीतव्यक्तिभानाय सामान्याश्रयविषयतामन्तर्भाव्य
सामान्यज्ञानस्य हेतुत्वान्तरमावश्यकमिति वक्तव्यम्, सामान्यज्ञानजन्यतावच्छेदककोटौ सामान्याश्रयविषयताया अनिवेशेऽपि
तद्विषयकप्रत्यक्षेच्छाविरहविशिष्टविरोधिसामग्र्यभावजन्यतावच्छेदककोटौ तद्वत्सामान्याश्रयविषयतानिवेशात् तद्बलादेव
सामान्यप्रत्यासत्तिजन्यज्ञानस्य निखिलसामान्याश्रयविषयकत्वोपपत्तेः, न च सामान्यज्ञानशून्यकालेऽपि तादृशकारणबला

पदापत्तिः, तदन्यफलस्य सामान्यज्ञानजन्यतावच्छेदकाक्रान्ततया सामान्यज्ञानं विना तदापत्त्यसम्भवादिति, अत्राप्ययमस्माकं मनीषोन्मेषः, यावत्सामान्याश्रयज्ञाने बाधाभावसामान्यज्ञानयोर्नियमतः सहकारित्वे कल्पनीये सर्वत्र प्रमाणे बाधाभावग्रहस्य- प्रेक्षिणि तदपेक्षा स्यात्, न चैवमभ्युपगमः, किन्तु सर्वप्रमाणानां सामान्यविषयत्वमुत्सर्गतः स्वसामग्रीमहिम्नायातमित्येवाभ्युपगम इति । तस्मात् सामान्यज्ञानं यथैकव्यक्तिविषये स्याद्बाधाभावेन यावद्व्यक्तिविषयं स्यादित्युदारसङ्क्रमेण यावत्सामान्याश्रय ज्ञानमङ्गीकर्तुं युक्तम्, तेनैव व्याप्तिग्रहयोग्यताग्रहादिज्ञानानां सामान्यविषयत्वादनुमितिशाब्दादीनां सामान्यविषयत्व सङ्गतेर्व्याप्तिज्ञानादीनां सर्वानुग्राहकत्वकल्पनापेक्षया तत्कल्पनस्यापि लाघवात्, एवं सामान्याश्रयप्रत्यक्षत्वं न परमतेऽपि सामान्यज्ञानजन्यतावच्छेदकं, ईश्वरप्रत्यक्षोपगमेन तत्र व्यभिचारात्, किन्तु सामान्याश्रयजन्यप्रत्यक्षत्वमिति, तदपेक्षया सामान्याश्रयप्रत्यक्षत्वमेव तथा लाघवादित्यस्मन्मतमेव न्याय्य इति बोध्यम्, यावत्सामान्याश्रयमूर्तं विना बाधाभावमात्रेण तादृशज्ञानोपगमे तु नियमेन सर्वत्रानन्तपर्यायमानापत्तिः, एतेनानुमितौ पक्षतावच्छेदकावच्छिन्नत्वं पक्षतावच्छेदकव्यापकविध- यताकत्वं बाधाभावमात्रादित्यपि निरस्तम्, उक्तव्यापारानुसारेणैव तत्र नियतविषयमानादन्यथातिप्रसङ्गात्परामर्शेऽपि तज्ज्ञाने कारणस्य मृग्यत्वादिति दिक् । एतेन यदि च तत्प्रत्यक्षविषयतायाः कारणतावच्छेदकसम्बन्धेन सन्निकर्षाश्रयत्वनियतत्वं प्रामाणिकं तदा ज्ञानप्रत्यासत्तिसामान्यप्रत्यासत्त्योः पृथक्कार्यकारणभावकल्पनमावश्यकं, तथाहि—एतन्मते सामान्यलक्षणायाः स्वविषयीभूततत्सामान्यसम्प्रत्यासत्त्या ज्ञानत्वेन तत्सामान्याश्रयवृत्तिविषयतया प्रत्यक्षत्वावच्छिन्ने हेतुता कल्प्या, तथा च घटो नास्ति सुरभि चन्दनमित्यादौ घटत्वसौरभत्वादिविषमज्ञानाभावेन सामान्यलक्षणया तज्ज्ञानानुपपत्तेर्लौकिकजन्यविषयतया

प्रत्यक्षत्वावच्छिन्ने विषयतया ज्ञानत्वेन ज्ञानप्रत्यासत्तेर्हेतुत्वकल्पनमावश्यकम्, न च निर्विकल्पकसाधारणप्रत्यासत्तिमते सामा न्यलक्षणाया हेतुत्वे तत्पुरुषीयत्वं न निवेश्यते, विशेषणज्ञानविरहेणैवान्यदीयघटज्ञानात् घटत्वेन घटप्रत्यक्षवारणसम्भ वात्, इत्थं च घटो नास्तीत्यादावन्यत्र ईश्वरीयघटत्वादिप्रकारकज्ञानादेवोपपत्तौ किं ज्ञानप्रत्यासत्तिकल्पनया, सामान्य ज्ञानहेतुतायां तत्पुरुषीयत्वादिनिवेशे व्यभिचारविरहेण सामान्यप्रकारकत्वस्य अन्यथासिद्धेरकार्यतावच्छेदकत्वात्, सामान्यप्र त्यासत्तिजन्ये घटत्वादौ घटत्वादिप्रकारकसामान्यधर्मप्रकारकत्वेऽपि दोषाभावादिति वाच्यम्, सामान्यलक्षणाया: फलजनने तावत्सामान्यप्रकारकप्रत्यक्षजनकतासम्बन्धस्य सहकारित्वाभ्युपगमादुपदर्शितस्थले घटत्वादिप्रकारकसामान्यप्रकारकप्रत्यक्ष नकसामग्रीविरहेण घटत्वादिमानस्य सामान्यलक्षणयाऽनुपपत्तेर्ज्ञानलक्षणाया: पृथक्कारणत्वावश्यकत्वात्, इत्थमेव घटोप स्थितिशून्यकाले घटत्वविशेष्यकज्ञानाच्च घटत्वेन घटप्रत्यक्षविशेष्यकं मानसमित्युपपद्यते, यत्तु उपदर्शितनियमानुरोधेन विषयतया प्रत्यक्षत्वावच्छिन्ने स्वविषयधर्मवत्त्वसम्बन्धेन विषयतासम्बन्धेन वा ईश्वरज्ञानसाधारणेन ज्ञानत्वेनैकमेव हेतुत्वं, न चैवं घटत्वज्ञानदशायां तदनाश्रयप्रत्यक्षापत्ति:, घटत्वेन तज्ज्ञानस्य दोषविरहेणानापत्ते:, सति दोषे चेष्टत्वात्, तदनाश्रय घटत्वाद्यात्मवृत्तिधर्मप्रकारकज्ञानस्य च साध्यविशेषज्ञानसाध्यस्य तद्विरहेणैवायोगादिति, तन्न, उपदर्शितैकहेतुहेतुमद्भावे घटत्वाद्यात्म कयत्किञ्चिद्विशेषणज्ञानसहकृतस्यैव सामान्यज्ञानस्य फलव्याप्यत्वेन यत्किञ्चित्सामान्यज्ञानदशायां प्रमेयमात्रे विषयतया प्रत्यक्षापत्तेर्दुर्वारत्वात्, सामान्यभेदेन विशिष्य हेतुत्वे च तत्सामान्यज्ञानात्तदनाश्रयप्रत्यक्षानापत्ते:, ईश्वरीयप्रमेयत्वादिसा मान्यज्ञानाद्यज्ञानशून्यस्य च यत्किञ्चिद्व्यतिरेकिसामान्यज्ञानतो निखिलविषयकप्रत्यक्षापत्तेश्च, प्रमेयत्वादिसामान्यलक्षणाया:

त्वप्रमेयत्वादिरूपविशेषणज्ञानस्यैव सहकारित्वेन निरसनीयत्वादिति, घटत्वादिना यत्किञ्चिद्धर्मिभासकलौकिकसन्नि-कर्षादिशून्यकाले घटत्वादिसामान्यलक्षणाजन्यप्रत्यक्षानुदयाय घटत्वसामान्यधर्मप्रकारेण यत्किञ्चिद्धर्मिविषयकप्रत्यक्षजनकसामग्र्यन्तरस्य सामान्यलक्षणासहकारित्वं स्वीकरणीयम्, तच्च लौकिकप्रत्यक्षसामग्री उपनीतभानसामग्री च, तयोश्च प्रत्येकं सहकारिता वोध्या, सा च तदन्यतावच्छेदकसमानाधिकरणमन्यतावच्छेदकत्वरूपा, न चैवं कश्चिदापत्तिः सम्भवति, यतः तत्तद्व्यक्तिनिष्ठकार्यतानिरूपितकारणतावच्छेदकीभूता यावन्तो धर्माः प्रत्येकं तदवच्छिन्नस्योभयात्मकसामग्र्यास्तदभावच्छिन्नाभावकत्वात्, घटत्वाश्रयस्य यस्य कस्यापि लौकिकसामग्र्युपनीतभानसामग्र्योरसत्त्वेऽपि तादृशसामग्र्येव नास्ति, घटत्वप्रकारकप्रत्यक्षत्वावच्छिन्नस्य घटत्वादिप्रकारतानिरूपितलौकिकविषयताशालित्वया घटत्वादिनोपनीतयत्किञ्चिद्धर्मिविषयतया च द्विविधत्वात्, यत्किञ्चिद्विशेषणेन प्रथमोपादाने तद्भिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नस्योभयात्मकलौकिकसन्निकर्षादिरन्त्यस्य चोपादाने तद्भिन्नकार्यतानिरूपितकारणतावच्छेदकावच्छिन्नोपनायकज्ञानादरभावेन तत्र तद्घटितत्वाद्व्यक्तोभाभाव इति न कश्चिदनुपपत्तिः। अथ घटो नास्ति सुरभि चन्दनमित्यादौ चाक्षुषघटसौरभादिभानापत्तिः, चाक्षुषघटादिविषयकप्रत्यक्षत्वस्य सामान्यज्ञानजन्यतावच्छेदकत्वेन तदवच्छिन्नापत्तेः कर्तुमशक्यत्वेऽपि सामान्यप्रत्यासत्तिजन्यतावच्छेदको चाक्षुषघटविषयकप्रत्यक्षत्वव्यापकानुभवस्यात्, घटत्वेन यत्किञ्चिद्विषयकलौकिकप्रत्यक्षसामग्रीदशायां यावन्तो घटा भासन्ते न तु घटो नास्तीत्यादावित्यत्र नियामकस्याभावस्य वक्तव्यत्वादिति चेत्, न। घटत्वादिप्रकारतानिरूपितमुख्यविशेष्यताशालिप्रत्यक्षत्वस्य घटत्वादिसामान्यलक्षणाजन्यतावच्छेदकत्वे दोषाभावात्, तदवच्छिन्नफलस्य बहिरिन्द्रियजस्य मानसस्य वा द्विविधस्यापि घट इत्या

प्रकारकस्यैवोपगमात्, यत्तु घटत्वप्रकारतानिरूपितलौकिकविषयताया घटत्वज्ञानजन्यतावच्छेदककोटौ निवेशाद् घटो नास्ती-
त्यादौ घटांशे लौकिकसन्निकर्षघटितसामग्र्यभावान्नोक्तापत्तिः, ज्ञातघटादिज्ञाने च ज्ञानलक्षणात एवेति, तदसत्, घटत्वादिप्र-
कारतानिरूपितलौकिकविषयताया जन्यतावच्छेदककोटौ निवेशने सामान्यलक्षणाजन्यघटादिमानसासङ्ग्रहात्, अथ सामान्य-
घटितसामग्रीव्याप्तौ घटत्वादिप्रकारकलौकिकप्रत्यक्षसामग्र्यादेस्तादृशसामग्रीत्वेन घटचक्षुःसंयोगत्वादिना वा न निवेशः, तादृ-
शधर्माणां कारणतानवच्छेदकत्वात्, कारणतावच्छेदकधर्मावच्छिन्नस्य सामग्रीव्याप्तिमध्ये निवेशनेनातिप्रसङ्गवारणे सर्वमत-
सिद्धघटत्वादिकार्यकारणभावविलयप्रसङ्गात्, तथा चालोकसंयोगावच्छिन्नचक्षुःसंयोगत्वादिनैव लौकिकप्रत्यक्षादिहेतवः सामग्री-
व्याप्तिमध्ये निवेशनीया इति तादृशचक्षुःसंयोगादिसमवहितं घटत्वादिज्ञानं यदा यत्र कारणतावच्छेदकप्रत्यासत्त्या तदव्यव-
हितोत्तरक्षणे तत्र कार्यमित्येतादृशी सामग्रीव्याप्तिः स्वीकार्या, तत्र चक्षुःसंयोगादिसमवहितत्वमेकक्षणवृत्तित्वसम्बन्धेन,
नत्वेकदेशवृत्तित्वसम्बन्धेन, स्वविषयीभूतसामान्याश्रयत्वप्रत्यासत्त्या सामान्यज्ञानहेतुतामते तादृशसम्बन्धेन घटत्वज्ञानादीनां
घटचक्षुःसंयोगादिसमानदेशतासम्भवेऽपि पटादौ घटत्वादिभ्रमजनकदोषकाले घटत्वादिज्ञानेन यावद्घटादिचाक्षुषजननादे-
कदेशवृत्तित्वनिवेशासम्भवात्, एवं च दोषाभावेऽपि पटादिचक्षुःसंयोगमादाय चक्षुःसंयोगादिकालवृत्तित्वविशिष्टसामा-
न्यज्ञानमहिम्ना घटत्वादिज्ञानकार्योत्पत्तिः, घटचक्षुःसंयोगदशायां व्यभिचारेण सामग्रीव्याप्तौ दोषनिवेशस्याप्यसम्भवादिति
चेत्, न। बाधाभावादिघटितसामग्रीव्याप्तावप्यस्य दोषस्य तुल्यत्वात्, तत्रापि घटाभावादिप्रकारकचाक्षुषनिश्चयाभावादि-
घटितसामग्रीव्याप्तौ सन्निकर्षादीनां घटचक्षुःसंयोगत्वादिना निवेशासम्भवाच्चक्षुःसंयोगत्वादिनैव तेषां निवेशनीयतया पटा-

ऽपि चक्षुःसंयोगादिस्थले विनश्य घटचक्षुःसंयोगादिकं तज्जन्यतावच्छेदकीभूतघटादिप्रकारकचाक्षुषत्वापत्तेः । अथ तत्तद्घटादिविषयितासम्बन्धेन ज्ञानत्वावच्छिन्नं प्रति तादात्म्यसम्बन्धेन घटज्ञानसाधारणज्ञानत्वेन हेतुता कल्प्यते, तथा च घटवृत्तिविषयत्वसमवायादिरूपकार्यतावच्छेदकप्रत्यासत्तिघटितसामानाधिकरण्यसम्बन्धेन तादृशज्ञानविशिष्टचक्षुःसंयोगाधारत्वकविषयवृत्तिसामग्रीसमवहितघटमात्रचाक्षुषापत्तेः पटचाक्षुषत्वादिरूपकार्यतावच्छेदकावच्छिन्नव्याप्यत्वमभ्युपेयते, चक्षुःसंयोगादीनां च पटवृत्तिविषयतासम्बन्धेन सामानाधिकरण्येऽपि तत्समवहितबाधाभावादिविरहात् पटचाक्षुषापत्तिरिति चेन्, तुल्यं मतेऽपि, न च पटे घटत्वभ्रमजनकदोषसध्रीचीनघटचक्षुःसंयोगकाले घटत्वसामान्यलक्षणाजन्यचाक्षुषोदयात् घटादिवृत्तिविषयतासमवायघटितसामानाधिकरण्यसम्बन्धेन ज्ञानविशिष्टचक्षुःसंयोगाधारत्वकसामग्रीसमवहितघटत्वज्ञानस्यापि व्याप्याव्यापकत्वोपगमध्रौव्यात् दोषादिविरहकालेऽपि ततो घटत्वसामान्यलक्षणाजन्यज्ञानापत्तिः, तादृशस्थले दोषस्यापि निवेशात्, न चैवं घटत्वात्मकसामान्यलक्षणप्रत्यासत्तिघटितसामग्रीव्याप्तिरेव घटपटादिभेदेनानन्त्यात् गौरवमिति वाच्यं, तादृशगौरवस्य गत्यन्तराभावेनाकिञ्चित्करत्वात्, यद्वा, स्ववृत्तिप्रतियोगिकत्वसम्बन्धेन तद्विशिष्टघटत्वप्रकारतानिरूपितलौकिकविषयताशालित्वप्रत्यक्षप्रागभावत्वेन घटत्वादिप्रकारतानिरूपितमुख्यविशेष्यताशालिमानसान्यप्रत्यक्षं प्रति हेतुतामभिप्रेत्यासम्भवाकल्पने, घटो नास्तीत्यादिप्रत्यक्षे व्यभिचारवारणाय मुख्यविशेष्यतया घट इत्याकारकमानसे च तद्वारणाय मानसान्यत्वस्य निवेशः । तादृशसम्बन्धेन कृतिविशिष्टभोक्तृप्रागभावः प्रतियोग्यव्यवहितप्राक्क्षण एव वर्तते इति नातिप्रसङ्गः, इत्थं चैकात्मवृत्तित्वसम्बन्धेन तादृशप्रागभावविशिष्टघटत्वज्ञानत्वाद्यवच्छेदेन फलनिरूपितैककार्यतापत्तिरेवाभ्युपगत इति न गौरवमित्यादि

निरस्तम्, तथात्वस्य विषयतायाः प्रकारतावच्छेदकसम्बन्धेन सन्निकर्षाश्रयत्वनियमस्य चक्षुरप्राप्यकारितावादिभिरस्माभिर नभ्युपगमात्, तदनुरोधेन सामान्यप्रत्यासत्तेः धूमप्रकारकत्वे मानाभावात्, घटत्वादिप्रकारतानिरूपितधूमस्य विशेष्यताशालि प्रत्यक्षत्वस्य घटत्वादिसामान्यलक्षणाजन्यतावच्छेदकत्वे यो धूमवान् सोऽग्निमानित्यत्र तादात्म्येन व्याप्तिग्रहोच्छेदापत्ते, धूमत्वसामान्यलक्षणया धूमानुपसर्जनीभूतसकलधूमप्रकारयोगाद्धूमव्यक्तीनां च पृथगननुगतत्वेन ज्ञायमानधूमसामान्यलक्षणया सकलधूमस्योपस्थित्ययोगात्, परम्परासम्बन्धेन धूमत्वसामान्यभानस्वीकारे च यो धूमस्तद्वानिति प्रयोगापत्तेः, न च प्रत्यक्षत्वे सामान्यप्रत्यासत्तिजन्यतावच्छेदके कार्याकार्यवृत्तित्वादिस्याप्रसिद्धत्वमेव, तस्मात् सामान्यावच्छिन्नविशेषविषयकप्रत्यक्षत्वादौ सामान्यावच्छिन्नविशेषालम्बनस्य विशेषावच्छिन्नसामान्यविषयकप्रत्यक्षत्वादौ विशेषावच्छिन्नसामान्यालम्बनस्योभयस्य हेतुत्वमवश्यमेष्टव्यमिति, तत एव कार्यसिद्धौ किं सामान्यघटितसामग्र्यासौ घटत्वप्रकारतानिरूपितलौकिकप्रत्यक्षसामग्र्यादेर्दोषविशेषादेरुपनीतभानसामग्र्यादेश्च निवेशेनाप्रामाणिकगौरवकारिणा, स्ववृत्तिप्रतियोगिकत्वसम्बन्धेनस्यादिविकल्पे तु लाघवात् घटत्वप्रकारकज्ञानत्वावच्छिन्नं प्रति स्ववृत्तिप्रतियोगिताकत्वसम्बन्धेन कृतिविशिष्टप्रागभावस्य स्वप्रतियोग्युपयोगसम्बन्धेनैव हेतुत्वमुचितमतो मानसान्यत्वादेः कार्यतावच्छेदककोटौ निवेशेन, सामान्यात्मकलौकिकप्रत्यक्षसामग्र्यभावेऽपि सामान्येनोत्सर्गतो यावद्विशेषाश्रयेण भवितव्यमित्यूहकाले यावत्सामान्याश्रयज्ञानस्य सर्वसिद्धत्वात्, वस्तुत उक्त इत्यादिप्रतीतिसिद्धवैजात्यशालिज्ञाने स्वप्रयोज्यविजातीयोपयोगसम्बन्धेन सामान्यप्रत्यासत्त्यादिस्थानीयसत्वद्विचाराणां हेतुत्वान्न काचिदनुपपत्तिः, घटादौ चरमसंयोगस्येव ज्ञाने विजातीयोपयोगस्य चरमकारणत्वात्, अन्यहेतूनां सहकारकत्वेनैव हेतुत्वोपगमादिति, इत्य चैतदपर्यं तत्तद्विचार

फलीभूतधूमैवनिष्ठमभ्युपगन्तव्यम्, यतः सर्वोपसंहारेण व्याप्त्यादिग्रहः, नो चेत्, सामान्यप्रत्यासत्त्या यावद्धूमोपस्थित्यभ्युपगमेऽपि वाच्यत्वेनोपस्थितिः कुतः, नहि धूमत्वमेव धूमनिष्ठं वाच्यत्वं, धूमवान् वाच्यवानित्यनयोरविशेषप्रसङ्गात्, तथा च यावान् धूमस्तावान् वह्निजन्मस्वर्थप्रतिपत्तये ऊहप्रमाणमेव शरणं, सामान्यव्यभिचारानुपस्थितिसहकारेण विशेषसहचारज्ञानस्य यावद्धूमो यावत्साध्यव्याप्तिनिश्चायकत्वमपि तस्येन ग्रहं विनाऽसम्भवदुक्तिकं, तदूहे चोहप्रमाणं विना नान्यस्य व्यापार इत्याद्यन्यदपि विभावनीयमवहितमानसैः, " सामान्यलक्षणप्रत्यासत्तिप्रत्यर्थिनिर्वचनात् । एवमूहप्रमाणस्य राज्यं निष्कण्टकं स्थितम् " ॥ १ ॥ अथ प्रकृतम्, एवं तीर्थकृत्समयानां परस्परविरोधेन प्रमाजनकत्वात्तस्याभावं प्रसाध्य स्वस्य शासनस्याविरोधाभ्युपगमेऽपि प्रमाजनकत्वाभावेन तं प्रसाधयितुमाह–' यदि पुनरित्यादिना ' ( ४२–१–१ ) संविदद्वैतादीनामिति ( ४२–१–२ ) अत्रादिपदेन चित्राद्वैतपरमब्रह्माद्वैतशब्दब्रह्माद्वैतपरिग्रहः, अन्यत्र चेति (४२–१–६) चित्राद्वैतादिपक्षे चेत्यर्थः, ' निरंशत्वादिति ' ( ४२–१–७ ) अंशरहितस्यैकस्य ग्राह्यग्राहकभावाभावेन न स्वेनैव स्वप्रमेयेत्यर्थः । स्वप्रकाशत्वात्तत्र प्रमात्वं सेत्स्यतीत्यत आह–' प्रमाणेत्यादि ' ( ४२–१–७ ) तथा च प्रमात्वव्यापकप्रमाणप्रमेयत्वभावाभावे तत्र प्रमात्वाभाव इति भावः । व्याप्याभावाभावे व्यापकाभावादनेकान्तसिद्धौ परमतभङ्गप्रसङ्ग इत्याह–' तदव्याप्यत्वादिति ' ( ४२–१–७ ) तस्याः प्रमाया अव्याप्यत्वाभावनिषेधे, ऐकान्तिकत्वाभावादिति (४२–१–८) अनेकान्तप्रसङ्गादित्यर्थः, तथा च " नान्योऽनुभाव्यो बुद्ध्याऽस्ति, तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्, स्वयं सैवावतिष्ठते " ॥ १ ॥ इति धर्मकीर्त्युक्तं विप्लवतेति भावः । परं प्रति प्रसञ्जितमैकान्तिकत्वाभावं स्वाधर्म्येणापि साधयि

तुमाह–' प्रमात्रादीति ' ( ४२–१–८ ) तथा च प्रमात्राद्यनेकस्वभावत्वेनानेकान्तात्मनोऽनेकान्तात्मकत्वाद्याभ्यन्तरार्थ ग्राहकत्वेनानुभूयमानस्य प्रमाणस्य बलात् संविदद्वैताद्येकान्ताभावसिद्धिरिति भावः । ' भूतवादिभिरिति ' (४२–१–९) भूतवादिभिश्चार्वाकैस्तस्याः स्वप्रमायाः स्वसंविदितस्योपगमात्, तत्पक्षे च निरंशत्वेन स्वेनैव स्वप्रमायोगात्, प्रमाणप्रमेयस्व-भावस्याप्रवृत्तौ च प्रमाया व्याप्तेरित्यर्थः । तदाह–इति सिद्धा तत्र स्वप्रमाया व्यावृत्तिरिति ( ४२–१–१० ) कश्चित्तु तस्येन्द्रियजप्रत्यक्षस्यास्वसंविदितस्योपगमादिति व्याचष्टे, हेतुं च तत्र भूतचतुष्टयोत्पन्नत्वादिति पूरयति, तदनेकग्रन्थविरुद्ध, चार्वाकमते उत्पत्तिपक्षेऽभिव्यक्तिपक्षे वा ज्ञानस्य स्वसंविदितताया एवानेकग्रन्थसिद्धत्वात्, ' कारणगुणा ही ' त्यादिन्यायस्तु भूतचैतन्यमेवोच्छिन्द्यात्, न तु तस्यास्वसंविदितत्वं साधयेदिति तदभ्युपगमानुकूल एव, न च मदिरादिदृष्टान्तेन संयोगजन्ता नचादेऽस्य न्यायस्याबाधोऽपीति यत्किञ्चिदेतत्, एतेन ( ४२–१–११ ) चार्वाकमतनिराकरणे स्याद्वादाश्रयणपर्यवसानेन, तेषां सर्वप्रमाणविनिवृत्तिरिति, करणफलभावेनाप्यन्ततः स्वभावभेदध्रौव्यादित्यर्थः । तेषामपीत्यनन्तरं सर्वप्रमाणविनिवृत्ति रित्यनुषज्यते । एकोपयोगरूपेणानन्वये कारणफलभावस्यैवाभावादिति भावः; सर्वेषामेकान्तवादिनां प्रमाणलक्षणानुपपत्तौ साधारणमेकं हेतुमाह–' प्रत्यक्षादीत्यादि '( ४२–२–२ ) ' चागक्षेत्यादि ' भाष्यं–चागक्षगुरुदीक्षागुरुत्वादिक ( ४२–२–४ ) कर्तृ, क्वचित् एकान्तवादिभिरभिमते, सर्वेषु वादिषूत्स्वेऽप्यपकर्षद्योतकमेकवचनम्, अनाविलज्ञानं ( ४२–२–४ ) निरावरणज्ञानं, निराकरोषि, अनुमितिनिश्चयाभावप्रतियोगि करोषि, तत्र तदभावमनुमापयतीत्यर्थः, अविक्षि-प्तागादेरेव तदभिमतत्वसिद्धत्वात्तस्य च निरावरणज्ञानाभावव्याप्यत्वादिति भावः । न पुनस्तत्प्रतिषेधवादिषु (४२–२–४)

एकान्तनिराकरणनादिषु जैनाभिमतेषु सर्वेषु भावेष्वस्तेऽप्युत्कर्षद्योतकं वपुवचन, तथा षागादिकमनाविलज्ञानं निराकरोति, सिद्धिरस्य तस्य जैनाभिमतसर्वज्ञसिद्धिस्वात्, तस्य षानाभिलज्ञानव्याप्यत्वादिति भावः । इति एतत्, परमगहनं ( ४२-२-५ ) दुर्बोधम्, अतात्पर्यज्ञानामिति शेषः । तात्पर्यज्ञास्तु ' षागद्वेषादि ' धर्मिभेदेन विशिष्टाविशिष्टपरतया योजयन्त आत्मावच्युरस्यार्थस्यैकवाक्यतां च समर्थयन्तो न गहनमनुप्रविशन्तीति ध्येयम् । अत्र चैकान्तवादित्वावच्छेदे नाविशिष्टरागादिनाऽनाविलज्ञानाभावः साध्यमानस्तदभिमते सर्वज्ञेऽपि सिद्ध्यत्यनेकान्तवादित्वसामानाधिकरण्येन च विशिष्टरागादिना साध्यमानमनाविलज्ञानं जैनाभिमतसर्वज्ञे सिद्ध्यति भक्तामादिरूपा सर्वज्ञप्रसिद्धिर्युष्करस्यादित्यभिप्रायवताम् विवृणोति-' तथाहीत्यादि ' ( ४२-२-५ ) भाष्ये कः परमात्मेति ( ४२-२-११ ) तात्पर्यविवरणम्, आत्मत्वस्यैवैकपद पक्षतावच्छेदकत्वात् । चिदेवेति ( ४२-२-११ ) घटो नील एवेत्यत्रेव सर्वावच्छेदेन विशेषणसम्बन्धस्यैवकारार्थत्वात्, सर्वविषयावच्छिन्नज्ञानवानित्यर्थः । लब्ध्युपयोगेत्यादि ( ४२-२-११ ) तत्वे नियामकाभिधानं भवभृतां ( भवतां ) प्रभुरिति ( ४२-२-११ ) भवं यन्तीति क्विपि भवतो भवभृतस्तेषां गुरुः प्रभुरिति कारिकावयवव्युत्पत्तिस्वारस्यादुक्तं द्रष्टव्यम् । चिदेव स एवेति ( ४२-२-१४ ) एतावताऽऽत्मत्वव्यापकत्वावच्छेद एव सम्यते, न तु सर्वावच्छेदेन ज्ञत्वमिति तद्धामार्थिना मरुन्नव्याख्यैवानुसरणीया । चिदिति शब्दस्य (४२-२-१४) त्यायमिधानं तु प्रौढ्यैवेति मन्तव्यम्, चिच्छब्दस्य केवल ज्ञाने मुख्यत्वेनयविशेषोपमर्दं विनाऽप्रवृत्तात्, फलितार्थलाभे प्रकारस्य चोक्तत्वात्, इन्द्रियसंस्कारानुरोधेन चबेति (४२ १ २) इन्द्रियव्यापारानुसारेणैवेत्यर्थः । इन्द्रियव्यापारश्च शब्दे रूपे रसगन्धस्पर्शेषु च स्पष्टताऽस्पष्टतादस्पष्टतारूपो द्रष्टव्यः । अन्यथा

विषयाप्रतिपत्तेरस्पृष्टता चाभिमुख्योपलक्षणमिति नातिप्रसङ्गः, तयोः संस्कारा (४२–१–६) लब्ध्युपयोगयोः संस्काराः, अन्यज नकभावसम्बन्धे षष्ठी, संस्कारशब्दार्थो न स्वरूपार्थप्रमोन्मुखता, तस्या उपयोगरूपत्वेन तदजन्यत्वादित्यतो व्याचष्टे, स्वार्थधा रणा इति (४२–१–६) लब्ध्युपयोगजन्यस्मृतिजनकधारणारूपा इत्यर्थः । तेषां लब्ध्युपयोगसंस्काराणाम्, अत्यये अभावे सति स एव स्यादिति (४२–१–६) किञ्चित्प्रत्यक्षत्वनियामकलब्ध्युपयोगसंस्काराभावे सत्यर्थत एव सर्वज्ञः स्यात्, तज्ज्ञाने इन्द्रि याजन्ये प्रत्यक्षत्व चातीन्द्रियत्वादेवाविरुद्धम्, व्यवहारप्रत्यक्षत्वे इन्द्रियजन्यत्वव्याप्यप्रत्यक्षत्वे इन्द्रियाद्यजन्यत्वस्यापि प्रयोजकत्वादिति भावः । न च प्रत्यक्षत्वमेवेन्द्रियजन्यतावच्छेदकं लाघवादितीन्द्रियसंस्काराभावेऽतीन्द्रियप्रत्यक्षानुपपत्तिरिति वक्तव्यम्, परेणापीश्वरप्रत्यक्षव्याप्त्यर्थं प्रत्यक्षनिष्ठवैजात्यस्यैवेन्द्रियजन्यतावच्छेदकत्वोपगमादस्माकं तत्र केवलज्ञानव्याप्य क्षयोपशमे दोषाभावात् । अत एव न मतिज्ञानावरणक्षये क्षायिकमतिज्ञानापत्तिः, भावेन्द्रियसंस्काररूपकेवलेतरप्रत्यक्ष स्यावच्छिन्नसामग्र्यभावात् सामान्यसामग्रीसहकृताया एव विशेषसामग्र्याः फलोपधायकत्वात्, तदिदमाह–'कुतःपुनरि त्यादि' (४२–१–८) न च सकलावरणसक्षय (४२–१–९) इति, तथा च सकलावरणसंक्षयाविनाभूतो भावेन्द्रियाभाव एवार्थवशसिद्धमतीन्द्रियं सर्वविषयकं प्रत्यक्षमनुमापयतीति भावः । 'देशघातीत्यादि' (४२–१–१०) इहार्थे सम्प्र दायः–देशघातिनीनां मतिज्ञानावरणादिप्रकृतीनां द्विविधानि रसस्पर्द्धकानि भवन्ति सर्वघातीनि देशघातीनि च, कानि तानीति चेत्, यानि चतुःस्थानकानि त्रिस्थानकानि च, तानि सर्वाणि सर्वघातीन्येव, यानि पुनर्द्विस्थानकानि तानि मिश्राणि कानि चित्सर्वघातीनि कानिचित् देशघातीनीत्यर्थः । यान्येकस्थानकानि तानि तु देशघातीन्येव, तदुक्तं—" चउतिट्ठाणरसाइं,

सव्वघाईंधि दुवि फड्डाई । दुट्ठाणियाणि मीसाणि, देसघाईंमि सेसाणि ॥ १ ॥ " त्ति, तत्र सर्वघातिरसस्पर्द्धकेषु परिणामवि शेषेण देशघातितया परिणमितेषु क्षायोपशमिका अवस्थाविशेषाः प्रादुर्भवन्ति, तदाह–निहएसु सव्वघाईरसेसु फड्डेसु देसघा ईणं । जीवस्स गुणा जायंति ओहिमणचक्खुमाईया ॥ १ ॥ " एवं चाऔदयिकभावानुविद्धः क्षायोपशमिकभावः प्राप्तः, अनन्तानु बन्ध्यादिसर्वघातिमोहप्रकृतीनां त्वस्तु मध्योऽपि सर्वघातिप्रकृतित्वसामान्याच्चांशेनापि देशघातित्वया परिणमनमशक्यमिति तासौदयिकभावाननुविद्ध एव विपाकोदयविष्कम्भकरणात्मा क्षायोपशमिको भावो भवति, केवलज्ञानकेवलदर्शनावरणीययोस्तु विपाकोदयविष्कम्भोऽप्ययोग्यत्वमनन्यगत्या कल्प्यते, अन्यथा तयोः क्षयोपशमप्रसङ्गात्, अधिकं मत्कृतज्ञानबिन्दौ । तदेवं भावेन्द्रियेष्वौदयिकभावानुविद्धस्य क्षयोपशमस्य हेतुत्वाच्चेषामावरणनिबन्धनत्वसिद्धिरावरणक्षयोपशमत्वेन क्षीणोपशान्ता-वरणत्वेन वा हेतुत्वमित्यत्र विनिगमनाविरहस्याप्येवदर्थसाधित्वात्, यदि चैवमौपशमिकक्षायिकादिभावस्थलेऽतिप्रसङ्ग इति, तदाऽस्तु तावत् क्षयोपशमघटकं क्षयभागं परित्यज्यावरणविपाकविपाकोदयविष्कम्भस्यैव स्वसंपादितोदयसम्बन्धेन हेतुता, उपशमात् क्षयोपशमविशेषस्य प्रदेशानुभवेनैवाभिधानावेन ताहे नद्यमित्येनेव भावेन्द्रिये क्षीणोपशान्तावरणत्वेन न हेतुत्व मित्युक्तावपि न क्षतिरिति मन्तव्यम्, मीमांसक प्रत्यवतिष्ठते–' ननु चेत्यादि ' (४१–१–१४) नहि तत् साधक प्र त्यक्ष सत्त्वमस्तीति (४२–२–१) प्रत्यक्षस्य तावत्प्रतिनियतासन्नरूपादिगोचरचारित्वेन परसन्तानवर्तिसंवेदनवेदनमात्रेऽपि न शक्तिः, किं पुनरतीतानागतवर्तमानसमस्तान्तरितादिसमस्तसकलपदार्थसाक्षात्कारिसंवेदनशालिपुरुषविशेषपरिच्छेदे, विशेषा ग्रहणे विशिष्टाग्रहणादिति भावः । ' तदेकदेशस्येति ' (४१–२–२) स एकदेश आश्रयो यस्य तस्येत्यर्थः, यद्वा तस्य धर्मिणः

सर्वज्ञस्यैकदेशो धर्मस्तद्रूपस्येत्यर्थः, अस्मिन् पक्षे 'दृष्टो न चैकदेशोऽस्ति लिङ्गं वेति' वक्ष्यमाणसामानाधिकरण्योपपत्ति रिति ध्येयम्। तत्र मम्यगमकसमवायमभ्याश्रित्यैकदेशो ग्राह्य इति रत्नाकरे स्पष्टम्। अनिश्चितपक्षधर्मत्वस्य हेतोरगमकत्वा दनिश्चिते च धर्मिणि हेतोः पक्षधर्मत्वनिश्चयस्य कर्तुमशक्यत्वान्न केनापि लिङ्गेन सर्वज्ञानुमानं भवतीत्यर्थः। 'अतिप्रस ङ्गादिति' (४१–२–४) असाधूनि निमज्जन्तीत्यादेरपि प्रामाण्यप्रसङ्गादित्यर्थः। कर्मार्थवादप्रधानत्वादिति हिरण्यगर्भ प्रकृत्य स सर्वविदित्याद्यभिधानस्य कर्मकाम्यफलीभूतहिरण्यगर्भस्तुतिमात्रपरत्वादित्यर्थः, तात्पर्यासम्भवादित्यनन्तर (४१–२–५) यथाभुत इति शेषः। 'आदिमदित्यादि' (४१–२–७) अनादिनित्यागमो यदि सर्वज्ञमादिमन्तं प्रतिपादयति तदा स किमभूत् भवति भविष्यति वा कल्पत्रयेऽपि विरोध एवेति भावः। न च मन्त्रार्थवादानामिति (४३–२–१०) वेदो द्विविधो मन्त्रब्राह्मणभेदात्, तत्र ये वेदभागाः प्रयोगसमवेतमर्थं प्रकाशयन्तः स्वोच्चारणमात्रेण साध्यकर्मापि विनियुज्य न्तेऽभियुक्तयाज्ञिकैश्च मन्त्रत्वेन समाख्यायन्ते ते मन्त्रास्ते च ऋग्यजुःसामभेदेन त्रिप्रकाराः, अवशिष्टो भागो ब्राह्मणं, तच्च विध्यर्थवादभेदात् द्विधा, तत्र विधिर्लिङादिगर्भो वाक्यसन्दर्भः, अर्थवादः स्तुतिनिन्दाभेदात् द्विविधः, चोदनाशेषस्य तत्सामान्य लक्षणं, स पुनरर्थवादो द्विविधोऽपि त्रिविधः, तदुक्तं–" विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवा दस्त्रिधा मतः" ॥१॥ इति, तदिह मन्त्रार्थवादानां यथाभुते तात्पर्यं नावकल्प्यते, किन्तु न्यायप्राप्त एवेति नोक्तार्थवादात् सर्वज्ञसिद्धिरिति व्यक्तोऽर्थः। स्यादाशङ्का धर्माद्युपदेशकरणान्यथानुपपत्त्या सर्वज्ञसिद्धिर्भविष्यति, तत्र विकल्पद्वयमुपतिष्ठते, को नामात्र धर्माद्युपदेशोऽन्यथानुपपद्यमानो वाच्यः, सौगतादिसम्बन्धी त्रयीविरसम्बन्धी वा, नाद्यः, व्यामोहादेव बौद्धादीनां

सुकेन विधिवाधमानत्वेन प्रामाण्यनिश्चये इदं साधकत्वमित्यत्र तात्पर्यम् । तद्बाधकासम्भवाख्यं विधातनिबन्धनम्, प्रकृतेऽपि (४५-१-४) सर्वज्ञेऽपि, तदभावे (४५-१-४) बाधकासम्भवाभावे, मासिद्धयत् मा प्रापद्, तद्बाधकमेव प्रदर्शयन्नाह-सम्भवस्येति (४५-२-२) अभावप्रमाणवादिमतमभ्युपगन्तस्य पूर्वविप्रतिपत्तिमाह-न तु प्रामाण्यं प्रत्ययं प्रकारः, तस्याभावप्र माणानभ्युपगन्तृत्वादिति द्रष्टव्यम् । अयं सर्वज्ञग्राहकप्रमाणाभावः स्वसम्बन्धी सर्वसम्बन्धी वा तदभावसाधक उपेयः । आद्य आह-सर्वज्ञाप्यमवृत्तित ( ४५-२-३ ) इति, स्वसम्बन्धिनस्तस्य स्वमात्रविश्रान्तत्वान्न सर्वत्र सर्वज्ञाभावसाधकत्वमिति भावः । अन्त्ये त्वाह-'गृहीत्वेत्यादि' (४५-२-३) तथा च सर्वसम्बन्धिनः सर्वज्ञग्राहकप्रमाणाभावस्य दुर्ज्ञानत्वान्न प्रकृता भावसाधकत्वमिति भावः । परोपगमत ( ४५-२-९ ) इति, स सर्वज्ञः ( ४५-२-१० ) परोपगमतः (४५-२-१०) परसिद्धान्तेन सिद्धो नास्तीति यदि साध्यते मीमांसकेन, तदा स परोपगमः प्रमाणमप्रमाणं वेति विकल्पद्वयमुपतिष्ठते, आद्य आह-'तस्येति' तस्य परोपगमस्य प्रमाणत्वे स्याद्वादस्तत्स्वभावग्राहकस्य प्रमाणसिद्धस्यार्थस्य निषेद्धुमशक्यत्वादिति भावः । अन्त्ये आह-'अन्यथेति' अन्यथा (४५-२-१०) परोपगमस्याप्रमाणत्वे, स सर्वज्ञः, अन्योन्यवादिप्रतिवादिनोः सिद्धो न वादिन एवासिद्धत्वात्, तथा च तस्य नास्तित्वमनुमानेन साधयितुमशक्यम्, धर्मिहेत्वादीनां उभयवादिसिद्धा वक्तव्या इति समयबन्धादिति भावः । अत्राह मीमांसकः-'नन्वेवमिति' (४५-२-१०) एवं परप्रमाणमात्रसिद्धस्यानिषेध्यत्वे, सर्वथैकान्तः परोपगमसिद्धः (४५-२-१०) कथं जैनैर्निषिध्यते ? अत्रोत्तरम्, इति धीमतां न चोद्य (४५-२-१०) न प्रष्टव्यम्, यतोऽनन्तधर्मात्मन्यर्थे प्रमाणाबाधिते सिद्धे तत्रैकान्ताभावसाधने न दोषः, अनेकान्तात्मकज्ञानस्यैवैकान्तानुपलम्भ-

धर्माद्युपदेशोपपत्तेरिति मन्यम्। अन्ते त्वाह–'धर्माद्युपदेशस्येति' (४४–१–३) त्रयीवित्सम्बन्धी धर्माद्युपदेशोऽन्यथाऽपि सार्वज्ञ्याभावेऽपि महाजनपरिग्रहेणैवोपपद्यत इति भावः। 'उपदेशो ही' त्यादि (४४–१–४) कारिका पूर्वपक्षपरा, मुख्यादयो ही (४४–१–८) त्यादिकारिकाद्वयं विकल्पद्वयसमाधानपरम्, तत्र ये त्विति (४४–१–८) अस्या अयमर्थः। ये तु मन्वादयस्त्रयी विदां मध्ये प्राधान्येन सिद्धाः, कीदृशा इत्याह–त्रयीविद्भिराश्रितो ग्र न्थः स्मृत्यादिरूपो येषां कर्तृणां ते तथा ते मन्वादयो वेदप्रम योक्तया (४४–२–६) साङ्गमीमांसाध्ययनसमाप्त्यादिवत्सुत्पत्तिविशेषसध्रीचीनपदार्थानुसन्धानप्रमपच्छद्धर्माद्युपदेशा इत्यर्थः, यथा च तदुपदेशस्य वेदार्थविवेकेनान्यथोपपद्यमानत्वाच्च सर्वज्ञगमकत्वमित्यर्थः, 'न च गृध्रेत्यादि' (४४–२–२) गृध्राणां चक्षुःप्रत्यक्षेण वराहाणां श्रोत्रप्रत्यक्षेण पिपीलिकानां च घ्राणप्रत्यक्षेणेत्यर्थः, नक्तञ्चरप्रत्यक्षेण (४४–२–३) पूर्ववित्ता ठमूषकतस्करादिप्रत्यक्षेणेत्यर्थः, प्रत्यक्षादीत्यादिनाऽनुमानादेरपि साध्ये सद्भावात् तत्र व्यभिचारसम्भवप्रदर्शनायाह 'कास्या पनादीति' (४४–२–३) तस्यापीति (४४–२–४) उक्तप्रत्यक्षादेरपीत्यर्थः। एव चेन्द्रियाद्यघटितसामग्रीजन्यत्वनिवे घस्य साध्यत्वात्तदान्तरविशेषेणापि सामान्यसामग्र्यनुप्रवेशनाच्च व्यभिचार इति भावः। ननु सर्वमिदं प्रत्यक्षमात्रस्येन्द्रियजन्यत्वसिद्धावुपपद्यते तदेव नास्ति चैन्द्रियकप्रत्यक्षस्य चक्षुरिन्द्रियस्य हेतुत्वादत आह–'न च दृष्टेत्यादि' (४४–२–१२) प्रत्य क्षत्वावच्छिन्न एव साधकेनेन्द्रियस्य हेतुत्वादिन्द्रियजन्यतावच्छेदकप्रत्यक्षत्वस्य कल्पने गौरवादातीन्द्रियप्रत्यक्षसम्भावनेत्यर्थः। 'त्रिविधप्रकृष्टेति' (४५–१–१) त्रिः समापदेशकालैर्विप्रकृष्टा इत्यर्थविशेषणेनापि, बाधकासम्भवादिति (४५–१–२) यद्यपि साधकप्रामाण्यग्राहकत्वं बाधकासम्भवस्य व्यवस्थितं न तु स्वातन्त्र्येण साधकत्वं, तथापि व्यवहारादेः साधकस्य प्रद्रा-

मुखेन क्षिपिस्तायमानस्यानेन प्रामाण्यनिश्चये एवं साधकत्वमित्यत्र तात्पर्यम् । तद्बाधकासम्भवाश्च विश्वासनिबन्धनम्, प्रकृतेऽपि (४५-१-४) सर्वज्ञेऽपि, तदभावे (४५-१-४) बाधकासम्भवाभावे, मासिद्धयत् मा प्रापत्, तज्ज्ञापकोप लम्भस्येति (४५-२-३) प्रमाणप्रमाणवादिभङ्गमध्यपन्यस्य दूषयितुमाह—न तु प्रामाकरे प्रत्यये सकल, तस्याभावप्र माणानभ्युपगन्तृत्वादिति प्रष्टव्यम् । अयं सर्वज्ञग्राहकप्रमाणाभावः स्वसम्बन्धी सर्वसम्बन्धी वा तदभावसाधक उपेयः । आद्य आह—सर्वत्राप्यप्रवृत्तित ( ४५-२-१ ) इति, स्वसम्बन्धिनस्तस्य स्वमात्रविश्रान्तत्वान्न सर्वत्र सर्वज्ञाभावसाधकत्वमिति भावः । अन्त्ये त्वाह—'गृहीत्वेत्यादि' (४५-२-३) तथा च सर्वसम्बन्धिनः सर्वज्ञग्राहकप्रमाणाभावस्य दुर्ज्ञानत्वान्न प्रकृता भावसाधकत्वमिति भावः । परोपगमत ( ४५-२-९ ) इति, स सर्वज्ञः ( ४५-२-१० ) परोपगमतः (४५-२-१०) परसिद्धान्तेन सिद्धो नास्तीति यदि साध्यते मीमांसकेन, तदा स परोपगमः प्रमाणमप्रमाणं वेति विकल्पद्वयमुपतिष्ठते, आद्य आह—'तस्येति' तस्य परोपगमस्य प्रमाणत्वे व्याघातस्तद्भावग्राहकस्य प्रमाणसिद्धस्यार्थस्य निषेद्धुमशक्यत्वादिति भावः । अन्त्ये आह—'अन्यथेति' अन्यथा (४५-२-१०) परोपगमस्याप्रमाणत्वे, स सर्वज्ञः, अन्योन्यथाविप्रतिपादिनोः सिद्धो न धादिन एवासिद्धत्वात्, तथा च तस्य नास्तित्वमनुमानेन साधयितुमशक्यम्, धर्मिहेतुदृष्टान्ता उभयवादिसिद्धा यत्तम्या इति समयवन्यायादिति भावः । अत्राह मीमांसकः—'नन्वेवमिति' ( ४५-२-१० ) एवं परप्रमाणमात्रसिद्धस्यानिषेध्यत्वे, सर्वथै कान्तः परोपगमसिद्धः ( ४५-२-१० ) कथं जैनैर्निषिध्यते ! अत्रोत्तरम्, इति भीमतां न चोद्य ( ४५-२-१० ) न लम्भत . यतोऽनन्तधर्मात्मन्यर्थे प्रमाणाबाधिते सिद्धे तत्रैकान्ताभावसाधने न दोषः, अनेकान्तात्मकवस्तुन एवैकान्तानुपलम्भ

धर्माद्युपदेशोपपत्तेरिति गम्यम् । अन्ये त्वाह–'धर्माद्युपदेशस्येति' (४४–१–३) त्रयीवित्सम्बन्धी धर्माद्युपदेशोऽन्यथाऽपि सार्वज्ञ्याभावेऽपि महाजनपरिग्रहेणैवोपपद्यत इति भावः । 'उपदेशो हि' इत्यादि (४४–१–४) कारिका पूर्वपक्षपरा, बुद्धादयो ह्री (४४–१–८) त्यादिकारिकाद्वयं विकल्पद्वयसमाधानपरम्, तत्र ये त्विति (४४–१–८) अस्या अयमर्थः । ये तु मन्वादयस्त्रयी-विदां मध्ये प्राधान्येन सिद्धाः, कीदृशा इत्याह–त्रयीविद्भिराश्रिता ग्रन्थाः स्मृत्यादिरूपा येषां कर्तॄणां ते तथा ते मन्वादयो वेदप्रम-णोक्ततया (४४–१–६) साङ्गमीमांसाध्ययनसमासादितव्युत्पत्तिविशेषसध्रीचीनवेदार्थानुसन्धानप्रभवधर्माद्युपदेशा इत्यर्थः, तथा च तदुपदेशस्य वेदार्थविवेकेनान्यथोपपद्यमानत्वाच्च सर्वज्ञगमकत्वमित्यर्थः, 'न च गृध्रेत्यादि' (४४–२–२) गृध्राणां चक्षुःप्रत्यक्षेण वराहाणां श्रोत्रप्रत्यक्षेण पिपीलिकानां च घ्राणप्रत्यक्षेणेत्यर्थः, नक्तञ्चरप्रत्यक्षेण (४४–२–३) घूकविडा-लतस्करादिप्रत्यक्षेणेत्यर्थः, प्रत्यक्षादीत्यादिनाऽनुमानादेरपि साध्ये सद्भावात् तत्र व्यभिचारसम्भवप्रदर्शनायाह 'कास्था पनादीति' (४४–२–३) तस्यापीति (४४–२–४) उक्तप्रत्यक्षादेरपीत्यर्थः । एवं चेन्द्रियाद्यघटितसामग्रीजन्यत्वानिवे-शस्य साध्यत्वादवान्तरविशेषेणापि सामान्यसामग्र्यनुपस्थानाच्च व्यभिचार इति भावः । ननु सर्वमिदं प्रत्यक्षमात्रस्येन्द्रिय-जन्यत्वासिद्धावुपपद्यते तदेव नास्ति चैन्द्रियकप्रत्यक्ष एवेन्द्रियस्य हेतुत्वादत आह–'न च दृष्टेत्यादि' (४४–२–१२) प्रत्य-क्षत्वावच्छिन्न एव लाघवेनेन्द्रियस्य हेतुत्वादिन्द्रियजन्यतावच्छेदकजात्यन्तरकल्पने गौरवाभावादतीन्द्रियप्रत्यक्षसम्भावनेत्यर्थः । 'त्रिविप्रकृष्टेति' (४५–१–१) त्रिभिः स्वभावदेशकालैर्विप्रकृष्टा इत्यर्थविशेषणेनापि, बाधकासम्भवादिति (४५–१–२) यद्यप्येवं साधकप्रामाण्यप्राबल्ये बाधकासम्भवस्य व्यवतिष्ठते न तु स्वातन्त्र्येण साधकत्वं, तथापि व्यवहारादेः साधकस्य सद्भा-

नुरोधेनात्मन एव चोपांशस्य प्रकाशस्य प्रध्वांसस्य चाक्षेपविज्ञानाभावरूपस्याप्रकाशस्य प्रसक्तौ चाप्रचयस्यापामपि मामहं न जानामीत्यात्मनि कर्तरि भासमाने तदज्ञानानुभवेन द्विरूपतया अनपह्नवनीयत्वादित्याशयवान् शङ्कते–' कुतः पुनरित्यादि' (४९-२-२) यतोऽसावित्यादि क्रमेणैवेत्यन्त (४९-२-२) अज्ञत्वस्वभावप्रतिषेधफलप्रदर्शनम्, अज्ञानस्वभावाभ्युपगमे तद्विषयानाक्रमयसम्भवात् तं सर्वमर्थं क्रमेणैवेत्यस्यानुपपत्तेः । स एव च प्रतिषेधः कुतः स्वभावत्वेऽपि साधकस्याभिहितत्वादिति प्रश्नार्थः । चोदनाज्ञान एव त्वयाऽशेषविषयत्वोपगमात् तदृष्टान्तेनात्मनः सर्वज्ञत्वस्वभावसिद्धौ तद्विप्रतिषेधाभावस्वभावत्वं कल्पनीयम्, मां न जानामीत्यस्य विशेषज्ञानाभावपरत्वेनाप्युपपत्तेः, रूपिद्रव्येऽरूपस्येव चिद्द्रव्येऽप्रकाशस्य प्रध्वांसस्याभ्युपगन्तुमशक्यत्वात्, एतेन वेदान्तिनां भावरूपाज्ञानवादोऽपि निरस्तः, तादृशस्यापि तस्य ज्ञानविरुद्धत्वात्, समवायतदितरप्रत्यासत्तिभ्यां ज्ञानाज्ञानयोर्विरोधनिराकरणे च कर्मण एवाज्ञाननामपर्यवसानात्, कर्मकृतेन चाज्ञानेन विधिपर्येन त्रैकालिकस्यात्मनो ज्ञस्वाभाव्यस्याप्रतिघातादित्युपरभन्वार्थः । ' कथमेवमिति ' (४९-२-७) सर्वज्ञस्वभावत्वेऽत्मनः कदाचिदप्यज्ञानोदयो दुर्घट इत्ययं प्रश्नः । मिथ्यात्वमोहनीयकर्मोदयसध्रीचीनकेवलज्ञानावरणप्रतिबद्धाशेषज्ञस्वभावस्वप्रतिपन्थकज्ञानावरणकर्मोदयमहिम्ना तत्सिद्धिरित्याशयेनोत्तरमाह–उच्यन्त इत्यादिना, सम्बन्ध्यन्तर (४९-२-८) क्षीरनीरन्यायेन साभिन स्वसम्बन्धि, मोहोदयकारणक (४९-२-८) मोहोदयकारणं, कप्रत्ययः स्वार्थे, पञ्चमीतो पृष्टाज्ञानकारणाभासानुपरवैकल्यापत्तेः, वक्ष्यमाणानुमानविरोधाच्चेति द्रष्टव्यम् । 'अनन्तार्थव्यञ्जनपर्यायात्मकमिति' (४९ २-१२) अत्रार्थव्यञ्जनपर्यायलक्षणविवेकार्थमयं श्लोकः " स्थूलो व्यञ्जनपर्यायो, वा गम्यो नश्वरः स्थिरः । सूक्ष्मः प्रतिक्षणध्वंसी,

स्वेनानेकान्तात्मतायां विधिरूपतायामेकान्तात्मतायां च निषेधरूपत्वात्, अत एव गगनादौ शशशृङ्गादिज्ञानस्यैव शशशृङ्गाद्यनुपलम्भरूपत्वे शशशृङ्गाभावप्रसिद्धिः सम्बन्धेऽनुयोगित्वप्रतियोगित्वादेर्वैज्ञानिकस्य वस्तुसाधकत्वात्, इष्यते च विशिष्टज्ञानविरहेऽपि विशिष्ट धर्मावच्छिन्नप्रतियोगिता परैरपि, तदविशिष्टापि षष्ठीयत्वमुभयसंयोगसम्बन्धावच्छेदकतावच्छिन्नप्रतियोगिताकाभावाभ्युपगमे न काचिद् नुपपत्तिः, वैज्ञानिकसम्बन्धेन षष्ठीयत्वस्यापि प्रतियोगितावच्छेदकत्वाद्विशिष्टनिषेधव्यवहारे परं विशिष्टप्रतियोगिप्रतिपत्तये विक-ल्परूपा सम्बन्धप्रसिद्धिरपेक्ष्यते, एतेन भावाभावो न समप्रतियोगिकः, किन्तु तत्प्रकार इत्ययमपि नयपक्षोऽनुगृहीतो भवति, सर्वत्र सर्वाभावानुपलम्भे च नेयं गतिः, सर्वत्र किञ्चिज्ज्ञानस्यैव तद्रूपत्वात्, तस्य चात्यन्तमसम्भवादिति सर्वं सुस्थम्। साध कानिर्णयादिति (४१-१-११) साधकत्वप्रकारकनिश्चयाभावात् सत्तायां बाधकत्वप्रकारकनिश्चयाभावात्सत्तायामनुत्क-टकोटिकत्वे चोत्कटकोटिकारेका स्यादित्यर्थः। न साधकानिश्चयात् वा बाधकानिश्चयात् संशयः, किन्तु ज्ञानप्रामाण्यसंशया दित्यन्ये, प्रकृतज्ञानेऽगृहीतप्रामाण्यकत्वस्यावश्यवेद्यत्वात् गृहीताप्रामाण्यकस्य संशयकत्वत्वं, न तु प्रामाण्यसंशयाद्धर्मसंशय इत्यपरे। ननु भवन्मते भगवान् सर्वज्ञ एवेति कोऽयं विधिः स्वपरमतप्राप्तमीदृक्प्रतिपादनत्वेनैव भगवत्प्रसिद्धेरन भिमतकीटसंख्यादिपरिज्ञानस्याकिञ्चित्करत्वादित्याशङ्कायामाह भाष्यकृत् 'न चास्तीति' (४१-२-१) तथा च ज्ञानस्य सर्वविषयकत्वमात्मनश्च सर्वविषयकज्ञानवत्त्वं स्वभाव एवेत्याविर्भूतस्वभावे भगवत्यसौ सर्वज्ञत्वसिद्धौ पर्यवसानीयमिति भावः। यं न लभेत (४१-२-१) यं नाधिगच्छेत्। तत्स्वभावान्तरनिषेधात् (४१-२-१) ज्ञस्वस्वभावनिषेधात्, नन्वज्ञ स्वभावस्यात्मनः स्वभाव एव, ज्ञानाज्ञानोभयरूपस्यैवात्मनो भट्टैः स्वीकारात्, तत्स्वभावत्वस्यात्र न किञ्चिद्वैचित्र्यमिति परामर्शा-

पुरोधेनात्मन एव बोधांशस्य प्रकाशस्य ग्रन्थांशस्य चाक्षेपविज्ञानाभावरूपस्याप्रकाशस्य प्रसूतौ बाधकत्वायामपि मामहं न जानामीत्यात्मनि कर्तरि भासमाने तदज्ञानानुभवेन द्विरूपतया अनपह्नवनीयत्वादित्याशयवान् सङ्गते–' कुतः पुनरि त्यादि' (४६–२–२) यतोऽसावित्यादि कमेतैवेत्यन्तं (४६–२–२) अज्ञत्वस्वभावप्रतिषेधफलप्रदर्शनम्, अज्ञानस्वभावा भ्युपगमे तद्विषयानाक्रमणसम्भवात् तं सर्वमर्थं क्रमेतैवेत्यस्यानुपपत्तेः । स एव च प्रतिषेधः कुतः स्वभावद्वयेऽपि साधकस्या भिहितत्वादिति प्रभार्थः । बोधनाज्ञान एव स्वपाऽऽक्षेपविषयत्वोपगमात् तद्दृष्टान्तेनात्मनः सर्वज्ञत्वस्वभावसिद्धौ तद्विप्रति षेधाभावस्वभावत्वे कल्पनीयम्, मां न जानामीत्यस्य विशेषज्ञानाभावपरत्वेनाप्युपपत्तेः, रूपिद्रव्येऽरूपत्वेन चिद्रूपेऽप्रकाश स्य ग्रन्थांशस्याभ्युपगन्तुमशक्यत्वात्, एतेन वेदान्तिनां भावरूपाज्ञानवादोऽपि निरस्तः, तादृशस्यापि तस्य ज्ञानविरुद्धत्वात्, प्रभवायतदितरप्रत्यासत्तिभ्यां ज्ञानाज्ञानयोर्विरोधनिराकरणे च कर्मण एवाज्ञाननामपर्यवसानात्, कर्मकृतेन चाज्ञानेन चिद्वि वर्तेन त्रैकालिकस्यात्मनो ज्ञस्वाभाव्यस्याप्रतिघातादित्युपरतन्त्यार्थः । ' कथमेवमिति ' (४६–२–७) सर्वज्ञस्वभावत्वे चात्मनः कदाचिदप्यज्ञानोदयो दुर्घट इत्ययं प्रश्नः । मिथ्यात्वमोहनीयकर्मोदयसध्रीचीनकेवलज्ञानावरणप्रतिबद्धाशेषज्ञस्वभाव स्वप्रतिबन्धकज्ञानावरणकर्मोदयमहिम्ना तत्सिद्धिरित्याशयेनोत्तरमाह–उच्यन्त इत्यादिना, सम्बन्ध्यन्तरं (४६–२–८) क्षीरनीरन्यायेन स्वमिश्रं स्वसम्बन्धि, मोहोदयकारणक (४६–२–८) मोहोदयकारणं, कप्रत्ययः स्वार्थे, बहुव्रीहौ प्रृथाज्ञान- कारणाभासाद्युपरवैफल्यापत्तेः, वक्ष्यमाणानुमानविरोधाच्चेति द्रष्टव्यम् । 'अनन्तार्थव्यञ्जनपर्यायात्मकमिति' (४६ २ १२) अभार्थव्यञ्जनपर्यायलक्षणविवेकार्थमयं श्लोकः " स्थूलो व्यञ्जनपर्यायो, वा गम्यो नश्वरः स्थिरः । सूक्ष्मः प्रतिक्षणध्वंसी,

विषयमात्रारम्यादीनां विशेष्यप्रत्यक्षसामग्रीत्वेनानुगतानां हेतुत्वमित्यपि व्याख्यातम्। तत्रौपचारिकत्वासम्भवेन विलक्षणक्षयोपशमवत्त्वस्यैव सामग्रीपदार्थत्वात्, तस्या यावत्कारणरूपत्वेऽतीतानागतवृत्तिविषयचक्षुःसन्निकर्षाभावे चाक्षुषानुपपत्तेः, एतेनैव तद्व्यक्तिविषयकचाक्षुषे तद्व्यक्तिचक्षुःसंयोगत्वेनैव व्यासज्यवृत्तिधर्मप्रत्यक्षानुरोधेन कारणता कल्प्यते तत एव तद्व्यक्तिवृत्तिगुणकर्माभावचाक्षुषनिर्वाहाच्चक्षुःसंयुक्तसमवायादिप्रत्यासत्त्यकल्पनलाघवादिति नवीननैयायिकोक्तमप्यपास्तं, सामान्यलक्षणादिप्रत्यासत्त्याऽसन्निकृष्टतद्व्यक्तिविषयकप्रत्यक्षवारणाय तद्व्यक्तिनिष्ठलौकिकविषयताशालित्वस्य कार्यतावच्छेदककोटावश्यनिवेशनीयतया तद्व्यक्तिनिष्ठायास्तद्गतगुणकर्माभावादिनिष्ठायाश्च लौकिकविषयताया नियमाय तत्र प्रत्यासत्तिविशेषस्य मम तत्स्थाने क्षयोपशमविशेषस्य च हेतुताया आवश्यकत्वात्। किञ्च व्यासज्यवृत्तिधर्मस्य घटाकाशसंयोगादेर्गुरुत्वादिवद्योग्यत्वादेव न प्रत्यक्षं, चक्षुःसंयुक्ततत्संयुक्तघटपटसंयोगाप्रत्यक्षत्वस्य तु नोक्तकार्यकारणभावादपि निर्वाहः, संयोगादिप्रत्यक्षस्य यावदाश्रयविषयकत्वनियमोक्तावपि परस्परानवच्छेदकावच्छेदेन घटचक्षुःसंयोगपटचक्षुःसंयोगोभयसत्त्वे घटपटसंयोगादिप्रत्यक्षापत्तेर्दुर्वारत्वात्, स्वावच्छेदकावच्छिन्नघटवृत्तिपटसंयोगावच्छेदकावच्छिन्नत्वसम्बन्धेन घटचक्षुःसंयोगविशिष्टपटचक्षुःसंयोगत्वादिना तद्धेतुत्वे तु विनिगमनाविरहादनन्तकार्यकारणभावापत्तेः महागौरवं, तस्माद्द्रव्यसमवेतान्यावृत्तिप्रत्यक्षे व्याप्यवृत्तेरप्यवच्छेदकस्वीकारे वा द्रव्यसमवेतप्रत्यक्षत्वावच्छिन्न एव चक्षुःसंयोगावच्छेदकावच्छिन्नसमवायसम्बन्धावच्छिन्नाधारतानिरूपकत्वस्य प्रत्यासत्तित्वं परस्य वक्तुमुचितमिति यत्किञ्चिदेतत्, वस्तुतो द्रव्यविषयकचाक्षुषस्य सामग्र्यैव न तद्वृत्तिगुणकर्माभावप्रत्यक्षनिर्वाहो, द्रव्याविषयकस्यापि परमाणुवाय्वोर्महत्त्वरूपाभावचाक्षुषस्य परैरभ्युपगमा

घटचाक्षुषादिचाक्षुषस्यापि तैरभ्युपगन्तुं शक्यत्वादिति, ग्रन्थार्थमनुपादेः सार्वत्रिकत्वेऽपि यथायथं तत्तच्चाक्षुषविशेषे क्षयोपशमविशेषस्य हेतुत्वमवश्यं वाच्यम्, अन्यथा नियतधर्मोल्लेखानुपपत्तेः, तथा च प्रत्यासत्तीनां विशिष्य हेतुत्वमनतिप्रयोजनं, चाक्षुषत्वावच्छिन्ने चक्षुरभिमुखस्यैकस्यैव प्रत्यासत्तिस्थानेऽभिषेक्तुमौचित्यादित्यस्मत्सम्प्रदायानुगतो नवीनः पन्थाः। एतेन घटचक्षुःसंयोगादेर्विशिष्य प्रत्यासत्तिकल्पनपरिहाराय व्यासज्यवृत्तिधर्मप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वं कल्पनीयम्, तत्र कारणतावच्छेदकं कार्यतावच्छेदकं पर्याप्तिसम्बन्धेन, कारणतावच्छेदकतावच्छेदकः सम्बन्धः स्वावच्छिन्नाधारतावत्ता चाक्षुषत्वे, कारणतावच्छेदकः स्वविषयताविषयिता, कार्यतावच्छेदकत्वावच्छेदकः स्वावच्छिन्नाधेयतावच्चाक्षुषत्वं, कार्यतावच्छेदकसम्बन्धो विशेष्यतेति नाननुगमादित्यादि नवीनतरोक्तमप्यपास्तं, सति क्षयोपशमविशेषे यावदाश्रयप्रत्यक्षोत्पत्तिकाल एव द्वित्वसंयोगादिप्रत्यक्षोपगमेन तस्य हेतुत्वे मानाभावात् द्रव्यत्वात्यन्ताभावचाक्षुषे चाक्षुषान्यसमवेतत्वस्य प्रतिबन्धकत्वेनैव घटाभावसंयोगाद्यप्रत्यक्षत्वोपपत्तेः, इत्थमेव कतिपयाश्रयपदार्थपर्याप्तद्वित्वत्रित्वादिप्रत्यक्षस्यैकरूपप्रत्यक्षोत्पत्तिकाले मिलित्वा द्वित्वत्वस्य योग्यता। किञ्च संयोगत्वादिना पर्याप्तिमत्प्रत्यक्षे न यावदाश्रयप्रत्यक्षं हेतुः, किन्तु घटादिप्रकारकसंयोगादिप्रत्यक्षे, तत्र च विशेषणतावच्छेदकप्रकारकज्ञानमुद्रयैव घटादिज्ञानस्य हेतुत्वाच्च यावदाश्रयप्रत्यक्षत्वेन हेतुत्वम्, अन्यथा घटपटोभयाभावप्रत्यक्षादौ यावत्प्रतियोगिज्ञानत्वेनापि हेतुतापत्तेरिति विना क्षयोपशमानुसरणं न कुत्राप्युपपत्तिरिति परस्परमनुन चेयम्, अधिकमस्मत्कृतस्याद्वादरहस्य-स्याद्वादकल्पलतादौ, सत्त्वमेवैतत् प्रतिबन्धककर्मक्षयोपशमवशत एव प्रत्यक्षजननयोग्यतेति। साकल्येन निरस्तव्यामोहः सर्वं पश्यत्येवेति, ज्ञो ज्ञेये (४०-१-५) इति संग्रहकारिका अन-

मर्थः । यथा सर्वदायवादकत्वं यदेः स्वभावो मतिसम्बद्धकरतलस्वापवादस्तु ततः प्रतिबन्धकद्रव्यस्वभा सर्वक्रियावभासित्वं चि दात्मनः स्वभाव एव, छद्मस्थे तस्प्रतिबन्धस्तु प्रतिपन्थ इव इति, सकलावरणगमेऽर्थसिद्धमेव भगवतः सर्वज्ञत्वमिति । अत एवाक्षानपेक्षेति (४७-१-९) भाष्यप्रतीके मवमूलमनोरिति योजनीयम्, तदावरणेति (४७-१-१०) अक्षापेक्षा हि ज्ञाने विषयसद्दत्वार्थं तथावधिमनःपर्याययोः क्षयोपशमातिशयादेवेति तयोस्तदनपेक्षत्वेऽपि न क्षतिरिति भावः। स्वविषये परिस्फुट स्वादितिति सूक्ष्म इति (४७-१-११) तथा च प्रत्यक्षत्वे स्पष्टतैव प्रयोजिका, सा च द्विविधा, सकलस्पष्टता देशस्पष्टता च, आद्याया मावरणक्षयः प्रयोजकः, द्वितीयायां च क्वचिदिन्द्रिय क्वचिद्गुणविशेषः, मतिश्रुतयोः परोक्षत्वनये तु गुणविशेष एवेति मन्तव्यम्॥

एवं सति प्रकृतेऽप्रयोजकत्व स्यादक्षापेक्षत्वेऽपि गुणविशेषादविस्पष्टत्वसम्भवादित्याशङ्कय समाधत्ते—न चैव साकल्ये नेत्यादिना (४७-१-११) एवमवधिज्ञानमनःपर्यायज्ञानयोरक्षानपेक्षत्वे सत्साधर्म्येण केवलज्ञानस्य तथात्वप्राप्तौ भगवज्ज्ञस्य साकल्येन विरलव्यामोहत्वात् सर्वदर्शनत्वाद्या यथैवं तथैव यथाऽस्मदादिप्रत्यक्षमिति व्यतिरेकिणि हेतोरनैकान्तिकत्वमप्रयोजकत्वं न शङ्कनीयम्, इत्यत आह—'विपक्षइति' (४७-१-१२) अवधीति च, उभाभ्यामक्षापेक्षत्वस्य स्पष्टता प्रयोजकत्वं सम्भितं भवति, तथा चाक्षापेक्षत्वं देशस्पष्टत्वेऽपि न प्रयोजकं किं पुनः सर्वसाहत्वइति, हेतुसत्त्वे साध्यासत्त्वे प्रकृते सर्वसद्दत्वानुपपत्तिर्बाधकस्तर्क इति नाप्रयोजकत्वमिति भावः। न चापेक्षत्वेऽपि गुणविशेषान् सर्वस्पष्टत्वोपपत्तिः केवलज्ञानोत्पाद प्रागुक्तस्यैव लाघवादिन्द्रियसंस्कारनाशकत्वेन तस्य सद्भिस्वत्वादिति द्रष्टव्यम्, विकलप्रत्यक्षस्येति (४७-१ १४) पारमार्थिक प्रत्यक्षमात्रस्य पक्षीकरणे तु भागासिद्धतयाऽस्याहेतुत्वं स्यादेवेत्यर्थः। तर्हि सत्यत्वम (४७-२-३) इति, नन्वेवं स्वाभ्यान-

विषय चक्षुराद्यनपेक्षायां चाक्षुषादौ व्यपेक्षानियमभङ्गः, कथमिति चेत्, सत्यं पश्यामीत्यनुभवानुरोधेन स्पष्टविशेषेऽपि चाक्षुषत्वसिद्धेस्तत्र च चक्षुराद्यपेक्षाव्यतिरेकस्य स्पष्टत्वादित्यवेहि, पश्यामीत्यभिलापे विषयताविशेष एव प्रयोजको ननु चाक्षुषत्वं जातिः, स च चक्षुःसन्निकर्षप्रयोज्यो दोषविशेषप्रयोज्यश्चेति न दोष इति चेत्, न, सत्यत्वस्य स्पष्टविशेषणस्याभिधानेन दोषविशेषप्रयोज्यत्वाप्रसक्तेः तादृशविषयताविशेषावच्छिन्नेऽनुगतक्षयोपशमविशेषस्यैव हेतुत्वेनालोकचक्षुरादीनामप्रयोजकतया एव युक्तत्वात् द्रव्यचक्षुर्व्यापाराभावेऽपि भावचाक्षुषस्य 'पंचिंदिओ य बउलो' इत्यादिदृष्टान्तसिद्धत्वेनापसिद्धान्तापातादिति दिक्।

दोषावरणयोर्हानिर्निःशेषास्त्यतिशायनात् । क्वचिद्यथा स्वहेतुभ्यो बहिरन्तर्मलक्षयः ॥ ४ ॥

दोषावरणसामान्ययोर्हानिः प्रसिद्धत्वाद्धर्मित्वं न विरुध्यते । तत्प्रसिद्धिः पुनरस्मदादिषु देशतो निर्दोषत्वस्य ज्ञानादेश्च कार्यस्य निश्चयानुमानस्येव, अन्यथा तदनुपपत्तेः । सा क्वचिन्निःशेषास्तीति साध्यते, तादृशप्रतिवादिनोरत्र विप्रतिपत्तेः । अतिशायनादिति हेतुः । कनकपाषाणादौ किट्टकालिकादिबहिरन्तर्मलक्षयो यथेति दृष्टान्तः, प्रसिद्धत्वात् । स हि कनकपाषाणादौ प्रकृष्यमाणो दृष्टो निःशेषः । तद्वद्दोषावरणहानिरपि प्रकृष्यमाणाऽस्मदादिषु प्रतीता सती क्वचिन्निःशेषाऽस्तीति सिध्यति । कः पुनर्दोषो नामावरणाद्भिन्नस्वभाव इति चेत्, उच्यते । वचनसामर्थ्यादज्ञानादिर्दोषः स्वपरपरिणामहेतुः । न हि दोष एवावरणमिति प्रतिपादने कारिकायां दोषावरणयोरिति द्विवचनं समर्थम्, ततस्तत्सामर्थ्यादावरणात्पौद्गलिकज्ञानावरणादिकर्मणो भिन्नस्वभाव एवाज्ञानादिरभ्यूह्यते । तद्धेतुः पुनरावरणं कर्म जीवस्य पूर्वस्वपरिणामश्च । स्वपरिणामहेतुक एवाज्ञानादिरित्ययुक्तं, तस्य कादाचित्कत्वविरोधात्स्वाभाविकत्वापत्तेः परपरिणामहेतुक एवेत्यपि न व्यवतिष्ठते, मुक्तात्मनोऽपि तत्प्रसङ्गात्, सर्वस्य कार्यस्योपादानसहकारिसामग्रीजन्यतयोपगमात्तथा प्रतीतेश्च । तथा च दोषो

मलः पुनरज्ञानादिरागन्तुकः, कर्मोदयनिमित्तकत्वात् । स चात्मनः प्रतिपक्ष एव । ततः परिक्षयी । तथा हि । यो यत्रागन्तुकः स तत्र स्वनिर्ह्रासनिमित्तविवर्धनवशात्परिक्षयी । यथा जात्यहेम्नि ताम्रादिमिश्रणकृतः कालिमादिः । आगन्तुकश्चात्मन्यज्ञानादिर्मलः इति स्वभावहेतुः । न तावदयमसिद्धः । कथम् ? यो यत्र कादाचित्कः स तत्रागन्तुकः । यथा स्फटिकाश्मनि लोहिताद्याकारः । कादाचित्कश्चात्मनि दोष इति । न चेदं कादाचित्कत्वमसिद्धं, सम्यग्ज्ञानादिगुणाविर्भावदशायामात्मनि दोषानुपपत्तेः । ततः प्राक्तनसद्भावाद्गुणाविर्भूतदशायामपि तिरोहितदोषस्य सद्भावान्न कादाचित्कत्वं, सातत्यसिद्धेरिति चेत्, न, गुणस्याप्येवं सातत्यप्रसङ्गात् । तथा च तिरस्यगमोद्वेवर्तमानकालेऽपि चेदाविर्भावप्रसङ्गः । ज्ञानाज्ञानयोः परस्परविरुद्धत्वादेकत्रैकदा न प्रसङ्ग इति चेत्, तत एव सकलगुणदोषयोरेकत्रैकदा प्रसङ्गो मा भूत् । पुनर्दोषस्याविर्भावदर्शनाद्गुणकालेऽपि सत्तामात्रसिद्धिरिति चेत्, तर्हि गुणस्यापि पुनराविर्भावदर्शनाद्दोषकालेऽपि सत्तामात्रसिद्धिः, सर्वथा विशेषाभावात् । तथा चात्मनो दोषस्वभावत्वसिद्धिवद्गुणस्वभावत्वसिद्धिः कुतो निवार्येत ? । विरोधादिति चेत्, दोषस्वभावत्वसिद्धिरेव निवार्यतां, तस्य गुणस्वभावत्वसिद्धेः । कुतः सेति ? चेत्, दोषस्वभावत्वसिद्धिः, कुतः ?, संसारित्वान्यथानुपपत्तेरिति चेत्, तत्संसारित्वं सर्वस्यात्मनो यद्यनादित्वं, तदा प्रतिवादिनोऽसिद्धं, प्रमाणतो मुक्तिसिद्धेः । कुत इति चेत्, इमे प्रवदामः । क्वचिदात्मनि संसारोऽत्यन्तं निवर्तते तत्कारणात्यन्तनिवृत्त्यन्यथानुपपत्तेः । संसारकारणं हि मिथ्यादर्शनादिकमुभयप्रसिद्धं क्वचिदत्यन्तनिवृत्तिमत्, तद्विरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावात् । यत्र यद्विरोधिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिमद्भवति, यथा चक्षुषि तिमिरादि । नेत्रमुदाहरणं साध्यसाधनधर्मविकलं, कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धेस्तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धेश्च निर्विवादकत्वात् । कथं मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि निश्चीयते इति चेत्, तदुत्कर्षे तदपकर्षदर्शनात् । यदि प्रकृष्यमाणं

मता पुनरज्ञानादिरागन्तुकः, कर्मोदयनिमित्तकत्वात् । स चात्मनः प्रतिपक्ष एव । ततः परिक्षयी । तथा हि । यो यत्रागन्तुकः स तत्र स्वनिर्ह्रासनिमित्तविवर्धनवशात्परिक्षयी । यथा जात्यहेम्नि ताम्रादिनिमित्तकृतः कालिकादिः । आगन्तुकश्चात्मन्यज्ञानादिर्मलः, इति स्वभावहेतुः । न तावदयमसिद्धः । कथम् ? यो यत्र कादाचित्कः स तत्रागन्तुकः । यथा स्फटिकाश्मनि लोहिताद्याकारः । कादाचित्कश्चात्मनि दोष इति । न चेदं कादाचित्कत्वमसिद्धं, सम्यग्ज्ञानादिगुणाविर्भावदशायामात्मनि दोषाद्यनुपपत्तेः । ततः प्राक्तत्सद्भावाद्गुणाविर्भूतिदशायामपि विरोधिदोषस्य सद्भावान्न कादाचित्कत्वं, सातत्यसिद्धेरिति चेत्, न, गुणस्याप्येवं सातत्यप्रसङ्गात् । तथा च स्थिरस्वगमोर्देर्थार्थज्ञानकालेपि चेतनाभावप्रसङ्गः । ज्ञानाज्ञानयोः परस्परविरुद्धत्वादेकत्रैकदा न प्रसङ्ग इति चेत्, तत एव सम्यग्गुणदोषयोरेकत्रैकदा प्रसङ्गो मा भूत् । पुनर्दोषस्याविर्भावदर्शनाद्गुणकालेपि सत्तामात्रसिद्धिरिति चेत्, तर्हि गुणस्यापि पुनराविर्भूतिदर्शनाद्दोषकालेपि सत्तामात्रसिद्धिः, सर्वथा विशेषाभावात् । तथा चात्मनो दोषस्वभावत्वसिद्धिवद्गुणस्वभावत्वसिद्धिः कुतो निवार्येत ? । विरोधादिति चेत् दोषस्वभावत्वसिद्धिरेव निवार्यतां, तस्य गुणस्वभावत्वसिद्धेः । कुतः सेति ? चेत्, दोषस्वभावत्वसिद्धिः कुतः ?, संसारित्वान्यथानुपपत्तेरिति चेत्, तत्संसारित्वं सर्वस्यात्मनो यथानाद्यनन्तं, तथा प्रतिवादिनोऽसिद्धं, प्रमाणतो मुक्तिसिद्धेः । कुत इति चेत्, इमे प्रवदामः । कचिदात्मनि संसारोऽत्यन्तं निवर्तते तत्कारणात्यन्तनिवृत्त्यन्यथानुपपत्तेः । संसारकारणं हि मिथ्यादर्शनादित्रयमप्रसिद्धं कचिदत्यन्तनिवृत्तिमत् तद्विरोधिसम्यग्दर्शनादिपरमप्रकर्षसद्भावात् । यत्र यद्विरोधिपरमप्रकर्षसद्भावस्तत्र तदत्यन्तनिवृत्तिमद्भवति, यथा चक्षुषि तिमिरादि । नेदमुदाहरणं साध्यसाधनधर्मविकलं, कस्यचिच्चक्षुषि तिमिरादेरत्यन्तनिवृत्तिमत्त्वप्रसिद्धेस्तद्विरोधिविशिष्टाञ्जनादिपरमप्रकर्षसद्भावसिद्धेश्च निर्विवादकत्वात् । कथं मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि निश्चीयते इति चेत्, तत्प्रकर्षे तदपकर्षदर्शनात् । यदि प्रकृष्यमाणं

प्रकर्षेति तत् तद्विरोधि सिद्धम्। यथोष्णस्पर्शः प्रकृष्यमाणः शीतस्पर्शमपकर्षंस्तद्विरोधी। मिथ्यादर्शनादिकमपकर्षति च प्रकृष्यमाणं कश्चित्सम्यग्दर्शनादि तत् तद्विरोधि। कथं पुनः सम्यग्दर्शनादेः कश्चित्परमप्रकर्षसद्भावः सिद्ध इति चेत्, प्रकृष्यमाणत्वात्। यदि प्रकृष्यमाणं तत्कश्चित्परमप्रकर्षसद्भावसमाक्रान्तम्। यथा नभसि परिमाणम्। प्रकृष्यमाणं च सम्यग्दर्शनादि। तस्मात्परमप्रकर्षसद्भावभाक्। परत्वापरत्वाभ्यां व्यभिचार इति चेत् न, तयोरपि सपर्यन्तजगद्व्यापिनोः परमप्रकर्षसद्भावभाक्त्वसिद्धेः। न चापर्यन्तं जगदिति वक्तुं शक्यं विशिष्टसंनिवेशत्वात्पर्वतवत्। यत्पुनरपर्यन्तं तन्न विशिष्टसंनिवेशं सिद्धं, यथा व्योम। विशिष्टसंनिवेशं च जगत् तस्मात्सर्वदा सपर्यन्तमिति निगदितमन्यत्र। संसारेणानैकान्त इति चेत् न, तस्याप्यभव्यजीवेषु परमप्रकर्षसद्भावसिद्धौ प्रकृष्यमाणत्वेन प्रसिद्धेः। एतेन मिथ्यादर्शनादिभिर्व्यभिचारः प्रत्याख्यातः, तेषामप्यभव्येषु परमप्रकर्षसद्भावात्। ततो नानैकान्तिकं प्रकृष्यमाणत्वं परमप्रकर्षसद्भावे साध्ये। नापि विरुद्धं, सर्वथा विपक्षाद्व्यावृत्तः। इति कश्चिन्मिथ्यादर्शनादिविरोधि सम्यग्दर्शनादि परमप्रकर्षसद्भावं साधयति। स च सिध्यन्मिथ्यादर्शनादेरत्यन्तनिवृत्तिं गमयति। सा च गम्यमाना स्वकार्यसंसारात्यन्तनिवृत्तिं निश्चाययति। यासौ संसारस्यात्यन्तनिवृत्तिः सा मुक्तिरिति। तदन्यथानुपपत्तेरात्मनो ज्ञानादिगुणस्वभावत्वसिद्धेर्न दोषस्वभावत्वसिद्धिः, विरोधात्। प्रसिद्धायां कश्चिदात्मनि निःश्रेयसप्राप्तौ गुणस्वभावतायामभव्यादावपि तन्निर्णयः, जीवत्वान्यथानुपपत्तेः, प्रसिद्धे च सर्वस्मिन्नात्मनि ज्ञानादिगुणस्वभावत्वे दोषस्वभावत्वासिद्धेः सिद्धं दोषस्य कादाचित्कत्वमागन्तुकत्वं साधयति। ततः स एव परिणामी स्वनिर्ह्रासनिमित्तविवर्धनवशादिति गुणस्वभावस्यापि दोषनिर्ह्रासनिमित्तस्य सम्यग्दर्शनादेर्विशेषेण वर्धनप्रसाधनात्। इत्यागन्तुकस्य द्रव्यकर्मणो दोषस्य च भावकर्मणो मूलत इव मत्तोऽस्यात्यन्तनिवृत्तिसिद्धेः कर्मभूभृतां भेत्ता मोक्षमार्गस्य प्रणेता क्षोदक्षमः समवतिष्ठते विश्वतत्त्वानां ज्ञाता च।

व्यपरिणाममात्रहेतुको न भवति कादाचित्कत्वात्, व्यतिरेके जीवत्ववत्, परपरिणाममात्रहेतुके न भवति जीवधर्मत्वात्, व्यति-
रेके ज्ञीरत्ववत्, स्वपरपरिणामहेतुको भवति कार्यत्वात् माषपाकवदित्यनुमानत्रयं द्रष्टव्यम्। प्रथमे कादाचित्कत्वे न काळघस्य
भावप्रतियोगित्वं, स्वपरिणाममात्रहेतुके भव्यत्वे सत्त्वेन व्यतिरेकव्याप्तौ व्यभिचारात्, किन्त्वभूत्वा भावित्वं, विशेषणभागसन्त-
स्यवच्छेदकत्वं वा तत्, व्यतिरेके दृष्टान्तीभूतस्य जीवत्वस्य च व्यञ्जनपर्यायतया स्वरूपतोऽहेतुकत्वेऽपि शुद्धद्रव्यार्थाभिम-
तार्थपर्यायमेवनिरूपित स्वपरिणाममात्रहेतुकत्वं, तत्र कार्यतावच्छेदकानवच्छिन्नत्वेनोपस्थित एव विवक्षित इति नार्थपर्याया-
न्तरेऽतिप्रसङ्गः। द्वितीयेऽप्यनयैव रीत्या परपरिणाममात्रहेतुकत्वं परामिष्टः पारिणामिकभावत्वे मुक्तात्मनस्तत्प्रसङ्गो
विपर्यये बाधक उक्तो न पक्षता। तृतीये कार्यत्वस्योत्पत्तिमत्त्वादित्यर्थः, तेन जीवत्वादौ न व्यभिचारो नित्यत्वेनाप्रति
यत्वानित्यामेदारोपप्रयुक्तकार्यत्वानित्यस्याप्रयोजकत्वादिति ध्येयम्। 'साध्यापरिज्ञानादिति' (८९-१-११) तदेवपरानु-
मितिविषयापरिज्ञानादित्यर्थः, साध्या तदेवपरानुमितिविषयः तस्य दोषावरणात्यन्ताभावस्य अनिष्टत्वात् मुक्तित्वेनानाभि-
मतत्वात्, तस्य मुक्तित्वे सर्वात्मनो मुक्तिप्रसङ्गात् (८९-१-१२) त्रैकालिकव्यावर्तकतादात्म्यपरिणामनिषेधरत्यन्ताभावत्वात्
दोषावरणयोस्तादात्म्यपरिणामस्य चात्मनि नित्यनिषेधत्वादिति भाव। यद्यप्यावरणतादात्म्यमात्मनो नित्यनिषेधमभ्युपगन्तुं श-
क्यम्, भिन्नद्रव्यत्वात्, दोषतादात्म्यन्तु न तत्कालानवच्छिन्नतया तादात्म्यस्यात्यन्यवर्जनीयत्वात्, तथाप्येकत्वेऽप्युभयाभावात्म-
प्रतियोगेनात्मनोदयपरिणतिरूपत्रोपाभिप्रायेण वेदमभिधानमिति मन्तव्यम्। तत एव प्रसिद्धत्वादेव, तदेव स्पष्टीकुर्वन्नाह प्रागभि-
प्रमानस्यात्यादि (८०-१-१३) प्रध्वंसाभावे साध्ये न सिद्धसाध्यतेत्युपसर्जयति यत्र सोऽप्यनाभिव्याप्तिः (८९-१-१४

शरीरत्वेन गृहीत इति (८९-२-१) अभ्युपगमापायं इत्यादि सम्मत्युक्तरीत्या शरीरात्मनोः कथञ्चिदेकत्वेन तयैव लोकलोकोत्तरानुभवसिद्धत्वेन चात्मगृहीतत्वके पृथिव्यादिशरीरे मुक्त्याविनिर्मोक्षध्वंसस्य युक्तियुक्तत्वादिति भावः। नहि प्रतियोगिसमवायिदेश एव ध्वंसप्रागभावौ स्त इति नैयायिकवचन भद्रान्तमर्हं, समवायिकारणनाशजन्यद्रव्यनाशस्य निरधिकरणत्वापत्तेः, न च समवायिकारणसमवायिकारणमेव तत्राधिकरणं, तथात्वस्यलेऽप्यधिकरणचिन्तायां परमाणुविश्रामापत्तेः, घटत्वापत्तेः, न च समवायिकारणसमवायिकारणमेव तत्राधिकरणं, तथात्वस्थलेऽप्यधिकरणचिन्तायां परमाणुविश्रामापत्तेः, घटगतस्य च तस्य यथा प्रतीतिसम्बन्धविशेषेण स्थूलावयवनिष्ठताभ्युपगमे किमपरमधिकरणान्तरेण, येन तत्र तद्रूपाप्रतीति सिद्धावप्यपलप्येतेति दिक्। आकरमहानिर्न साध्या द्रव्यार्थपर्यायार्थविकल्पानुपपत्तेरित्याशयवानाह पूर्वपक्षे 'ननु च यदी स्यादि' (९०-१-९) स्वसमानाधिकरणस्वप्रतियोगिजातीयप्रागभावासमानकालीनत्वविशेषणमादावरकत्वावच्छिन्नध्वंसस्य वा साध्यत्वाच्च दोषइत्यभिप्रायवान् सिद्धान्तयति सोऽप्यनवधुक्तस्व (९०-१-११) इत्यादिना, सकलकर्मपर्यायनाशस्य कर्मत्वविशिष्टद्रव्यनाशनियतत्वेऽपि तदुपलक्षितद्रव्यनाशानियतत्वाच्च निरन्वयनाशापत्तिरित्याह-' सकलकर्मेत्यादि ' (९०-२-३) ननु कर्मपर्यायत्वावच्छिन्ने कर्मद्रव्यत्वेनाकर्मपर्यायत्वावच्छिन्ने चाकर्मद्रव्यत्वेन हेतुत्वात् कथं मुक्तौ कर्मद्रव्यस्या कर्मपर्यायाक्रान्ततया परिणमनमिति चेत्, न। पुद्गलद्रव्यस्यैवावस्थाविशेषेण कर्माकर्मात्मकतया परिणमनादन्योन्याभावस्याप्यव्याप्तित्वादुभयरूपतोपपत्तेः, नन्वेवं जीवद्रव्यमपि निःक्षेपितजीवपर्यायमजीवपर्यायानाददानमजीवद्रव्यं स्यात्, तद्द्रव्यस्य तदन्यद्रव्यपर्यायपरिणमनाभावव्याप्यत्वोपगमे च कर्मद्रव्यमप्यकर्मपर्यायपरिणामि न स्यादिति चेत्, न जीवाजीवपरिणामयोः प्रदेशविरोधस्य कर्माकर्मपरिणामयोश्च कालविरोधस्य सिद्धान्तसिद्धत्वेनोक्तप्रतिबन्ध्ययोगात् द्रव्यत्वसाक्षात्

हेतुः सन्निवेशविशिष्टत्वादिरिति चेत्, स्वभावभेदात्। यादृशमभिनवभवनादिषु सन्निवेशविशिष्टत्वमभ्यासदर्शिनोऽपि कृतबुद्ध्युत्पादकं धीम-
ज्जुष्टेन व्याप्तं प्रतिपन्नं तादृशमेव जीर्णप्रासादादिषूपलभ्यमाने धीमत्पूर्वकत्वस्य प्रयोजकं स्यात्, नान्यादृशं भूधरादिषु प्रतीयमानम-
कृतबुद्धिजनकमिति स्वयं मीमांसकैरभिधानात्। नैवमनुमेयत्वं, तस्य स्वभावभेदाभावात्। न हि साध्याविनाभावनियमनिश्चयैकलक्षण-
लिङ्गजनितज्ञानविषयत्वमनुमेयत्वमग्न्यादौ धर्मादौ च भिद्यते, येन किञ्चित्प्रयोजकमपरमप्रयोजकमिति विभागोऽवतरेत्। स्व-
भावकालदेशविप्रकर्षिणामनुमेयत्वमसिद्धमित्यनुमानमुत्सारयति यावान् कश्चिद्भावः स सर्वः क्षणिक इत्यादिव्याप्तेरसिद्धौ प्रकृतोपसं-
हारायोगाद्विप्रकर्षिणामनुमितेरनर्थकत्वात् सत्त्वादेरनित्यत्वादिना व्याप्तिसिद्धावपि सिद्धमनुमेयत्वमनयथेनेति न किञ्चिदेतत्
पश्यामः। स्वाभिमतं "केचिद्धर्माः प्रत्यक्षाः, यथा घटादयः, केचिदनुमेया ये कदाचित्कश्चित् प्रत्यक्षप्रतिपन्नाविनाभाविलिङ्गाः, केचिदा-
गममात्रगम्याः सर्वदा स्वभावादिविप्रकर्षिणो धर्मादयः तेषां सर्वप्रमाणसम्भिन्नप्रत्यक्षादिगोचरत्वायोगात्। तदुक्तं "सर्वप्रमाणसम्ब-
न्धप्रत्यक्षादिनिवारणात्। केवलागमगम्यत्वं लप्स्यते पुण्यपापयोः" ॥१॥ इति। "ततो धर्मादीनामनुमेयत्वमसिद्धमनुपपन्नमपि नानुमा-
नमुत्सारयति, तस्यानुमेयेऽर्थे व्यवस्थानात्" इति परास्तम्, धर्मादीनामप्यनित्यत्वादिस्वभावतयाऽनुमेयत्वोपपत्तेः। तथा हि। यावान्क-
श्चिद्भावः पर्यायात्मा स सर्वोऽनेकक्षणस्थायितयाऽभिन्नो यथा घटस्तथा च धर्मादिरिति मीमांसकैरपि क्वचित् पर्यायत्वादेरनित्य-
त्वेन व्याप्तिः साधनीया, तदसिद्धौ प्रकृतेऽपि धर्मादौ पर्यायश्च धर्मादिरित्युपसंहारायोगात्। कथं चायं स्वभावादिविप्रकर्षिणामनुमेय-
त्वमसिद्धमभिदधानः सुगतादीनामविप्रकर्षिणामनुमितेरनर्थकत्वं परिहरेत्? अन्यत्रविप्रकर्षिणामनुमितेरभिप्रेतत्वाददोष इति चेत्, न पुनरिय-
मनुमितिः स्यात्? कदाचिद्विप्रकर्षिणामन्यदा देशादिविप्रकृष्टानां प्रतिपन्नाविनाभाविलिङ्गानामनुमितिरितिचेत्, कथमेवं प्रत्यक्षत्व

शब्दानित्यत्वसाधनेऽपि कृतकत्वादावयं विकल्पः किं न स्यादिति । शब्दे हि धर्मिणि, कृतकत्वादिहेतुर्यद्यनित्यशब्दधर्मस्तदाऽसिद्धः । को नामानित्यशब्दधर्मं हेतुमिच्छन्ननित्यशब्दमेव नेच्छेत् ? अथ नित्यशब्दधर्मस्तदा विरुद्धः, साध्यविरुद्धसाधनात् । अथोभय-धर्मस्तदा व्यभिचारी, सपक्षेतरयोर्वर्तमानत्वात् । इति सर्वानुमानोच्छेदः, क्वचित्पावकादौ साध्ये धूमवत्त्वादावपि विकल्पस्यास्य समानत्वात् । विमत्यधिकरणभावापन्नविनाशधर्मिधर्मत्वे कृतकत्वादेरसंभवद्बाधकत्वादेरपि सन्दिग्धसद्भावधर्मिधर्मत्वं सिद्धं बोद्धव्यम् । ननु च शब्दादेर्धर्मिणः शब्दत्वादिना प्रसिद्धसत्ताकस्य सन्दिग्धानित्यत्वादिसाध्यधर्मकस्य धर्मो हेतुः कृतकत्वादिरिति युक्तं, सर्वथाप्यसिद्धसत्ताकस्य तु सर्वज्ञस्य कथं विवादापन्नसद्भावधर्मकस्य धर्मो हेतुरसंभवद्बाधकत्वादिर्युज्यते, प्रसिद्धो धर्मी प्रसिद्धधर्मविशेषणविशिष्टतया स्वयं साध्यत्वेनेप्सितः पक्ष इति वचनात्, कथञ्चिदप्यप्रसिद्धस्य धर्मित्वायोगात् । इति कश्चित्, सोऽपि यदि सकलदेशकालवर्तिनं शब्दं धर्मिणमाचक्षीत तदा कथं प्रसिद्धो धर्मीति ब्रूयात् ? तस्याप्रसिद्धत्वात् । परोपगमात्प्रसिद्धः शब्दः प्रसिद्धो धर्मीति चेत्, स्वाभ्युपगमात्सर्वज्ञः प्रसिद्धो धर्मी किन्न भवेद्धेतुधर्मवत् । परं प्रति समर्थित एव हेतुधर्मः साध्यसाधन इति चेत् धर्म्यपि परं प्रति समर्थित एवास्तु, विशेषाभावात् ? किञ्च सर्वथा प्रसिद्धसत्ताको धर्मी कथञ्चिद्वा ? सर्वथा चेत्, शब्दादिरपि धर्मी न स्यात् तस्याप्रसिद्धसाध्यधर्मोपाधिसत्ताकत्वात् । कथञ्चित्प्रसिद्धसत्ताकः शब्दादिर्धर्मीति चेत् । सर्वज्ञः कथं धर्मी न स्यात् ? प्रसिद्धात्मत्वादिविशेषणसत्ताकस्याप्रसिद्धसर्वज्ञत्वोपाधिसत्ताकस्य च धर्मिणोऽभ्युपगमे सर्वथा नाप्रसिद्धसत्ताकत्वं, कथञ्चित्प्रसिद्धसत्ताकत्वात् । स्याद्वादिनो हि कश्चिदात्मा सर्वज्ञोऽस्तीति पक्षप्रयोगमापद्यते, नान्यथा । ततोऽयमनुपालम्भमानो धर्मिस्वभावं न लक्षयत्येव, महत्त्वानुमाने सर्वज्ञस्य धर्मित्वावचनात् । सूक्ष्मादयोऽर्था एव तत्र धर्मिणः प्रसिद्धा अनुमानादप्रसिद्धसत्ताका एव, परमाण्वादीनामपि

यदि पुनरक्रमेणाप्यकरणं योगजधर्मानुगृहीतं युगपत्सकलसूक्ष्माद्यर्थविषयमिष्यते तदापि दृष्टातिक्रम एव मनसो युगपदनेकत्र विषये प्रवृत्त्यदर्शनात् । तत्र दृष्टातिक्रमेष्टौ वा स्वयमात्मैव समाधिविशेषोत्थधर्मविशेषवशादन्तःकरणनिरपेक्षः साक्षात् सूक्ष्माद्यर्थान् पश्यतु किमिन्द्रियेणान्तःकरणेन ? तथा च नेन्द्रियज्ञानेन कस्यचित्प्रत्यक्षाः सूक्ष्माद्यर्थाः संसाध्यन्ते । अतीन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षाः साध्यन्ते इति व्यर्थमसिद्धविशेषणः पक्षः, कस्यचिदतीन्द्रियज्ञानप्रत्यक्षत्वस्याप्रसिद्धेः सांख्यं प्रति विनाशी शब्द इत्यादिवत् । साध्यशून्यश्च दृष्टान्तः स्यादग्न्यादेरतीन्द्रियप्रत्यक्षविषयत्वाभावात् । इति केचित्तेपि न सम्यग्वादिनः, सूक्ष्माद्यर्थानामिन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वासाधनात्तत्पक्षनिक्षिप्तदोषानवतारात् । तथा साधयतां स्याद्वादिभिरपि तद्दोषसमर्थनात् । नाप्यतीन्द्रियप्रत्यक्षेण कस्यचित्प्रत्यक्षत्वं साध्यते येनाप्रसिद्धविशेषणः पक्षः साध्यशून्यश्च दृष्टान्तः स्यात्, प्रत्यक्षसामान्येन कस्यचित्सूक्ष्माद्यर्थप्रत्यक्षत्वसाधनात् । प्रसिद्धे च सूक्ष्माद्यर्थानां सामान्यतः कस्यचित्प्रत्यक्षत्वे सर्वज्ञस्य सम्यक्सिद्ध्युपपत्तेस्तत्प्रत्यक्षस्येन्द्रियानिन्द्रियानपेक्षस्य सिध्यत्येव । तथा हि । योगिप्रत्यक्षमिन्द्रियानिन्द्रियानपेक्षं, सूक्ष्माद्यर्थविषयत्वात् । यन्नेन्द्रियानिन्द्रियानपेक्षं तन्न सूक्ष्माद्यर्थविषयं दृष्टं, यथास्मदादिप्रत्यक्षम् । सूक्ष्माद्यर्थविषयं च योगिनः प्रत्यक्षं सिद्धं, तस्मादिन्द्रियानिन्द्रियानपेक्षम् । नावधिमनःपर्ययप्रत्यक्षाभ्यां हेतुर्व्यभिचारी, तयोरपीन्द्रियानिन्द्रियानपेक्षत्वसिद्धेः । ननु च कस्येदं सूक्ष्माद्यर्थप्रत्यक्षत्वं साध्यते ? अर्हतोऽनर्हतः सामान्यात्मनो वा ? यदि विप्रकृष्टार्थप्रत्यक्षत्वमर्हतः साध्यते पक्षदोषोऽप्रसिद्धविशेषणत्वम् । तत एव व्याप्तिर्न सिध्यात् । अनर्हतश्चेदनिष्टानुषङ्गोपि । कः पुनः सामान्यात्मा तदुभयव्यतिरेकेण यस्य विवक्षितार्थप्रत्यक्षत्वम् । इत्येतद्विकल्पजालं शब्दानित्यत्वेपि समानं, न केवलं सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संशीतौ वा । तदयमनुमानमुद्रां भिनत्ति । न कश्चित्सूक्ष्मादिसाक्षात्कारी, पुरुषत्वादेः, रथ्यापुरुषवत् । विवादापन्नः पुरुषः

सूक्ष्मादिमाप्तसाक्षात्कारित्वेन संशयित एव विप्रकृष्टस्वभावत्वात् पिशाचादिवत्। इति सूक्ष्मादिसाक्षात्करणस्य प्रतिषेधने संदीग्धो वा वापरिहं विकल्पजाल समानं सिद्धमेव। स हि तत्र प्रतिषेधं सत्त्वं वा साधयन् किमर्हतः साधयेदनर्हतः सामान्यात्मनो वा? यद्यर्हतस्तदेवमसि द्धेरनन्यस्यसम्यत्वविधाननिषेधात्। कः पुनः सामान्यात्मा वक्तुमनभ्यविशेषेण यस्य विवक्षितार्थसत्त्वप्रतिषेधसत्त्वे साध्येते? इति। तदप्युभयसिद्धत्वमापनेऽपि समानमेवविकल्पजालम्। तथा हि। अयं शब्दानां नित्यत्वं साधयन् सर्वगतानां साधयेदसर्वगतानां वा सामान्यात्मनो वा? यद्येषां नित्यत्वमव्यभिचारिणा सर्वगतानां यदि साधयति स्यादप्रसिद्धविशेषणः पक्ष इतरस्यानिष्ट्यनुपपत्तः। कीदृक् पुनः सामान्यं नाम वक्तुमपरोक्षसम्प्रतिपत्तय कस्येव? सर्वगतत्वसाधनेऽपि समानम्। तद्धि धर्माणाममूर्तानां साधयेन्मूर्तानां वा उभयसामान्यात्मनो वा? यद्यमूर्तानां सर्वगतत्वं साधयेत्तदाऽप्रसिद्धविशेषणता पक्षस्य। अथ मूर्तानामनिष्ट्यनुपपत्तः कीदृक् पुनः सामान्यं नाम वक्तुमपरोक्षसम्प्रतिपत्तय कस्येव? सर्वगतेतरसामान्यात्मन इव मूर्तेतरसामान्यात्मनोऽसम्भवाद्धर्मेषु। तदेवमनुमानमुद्रा सर्वेव विनश्यतीति मानुमानविचारणामपिरता स्यात्। अविवक्षितविशेषस्य पक्षीकरणे समः समाधिरित्यप्यमविच्छिन्नमिथ्याविकल्पौघः। यथैव हि शब्दस्याविवक्षितसर्वगतत्वासर्वगतत्वविशेषस्याव्यभिचारिहेतुना नित्यत्वे साध्ये न कश्चिद्दोषः स्यात्, तथाविवक्षितमूर्तेतरविशेषस्य सर्वत्रोपलम्भसामान्यव्यभिचारिणा सर्वगतत्वे तथैवाविवक्षितार्हदनर्हद्विशेषस्य कस्यचित्पुरुषस्य विप्रकृष्टार्थसाक्षात्करणेऽपि साध्येऽनुमेयत्वादिहेतुना न कश्चिद्दोषः प्रत्यासोऽप्ययमविच्छिन्नमिथ्याविकल्पौघेन प्रकृतसाधनामविषम्यिमतः तेषाममविच्छिन्नत्वात् साधनमात्रे इव सम्यक्साधनेऽपि स्यादिप्रसङ्गात्। ततो निरवद्यमिदं साधनं कस्यचित्सूक्ष्मादिसाक्षात्कारित्वं भावयति।

नन्वस्तु नामैवं कस्यचित्कर्मभूयस्त्वेऽपि नित्यमिव विश्ववस्तुसाक्षात्कारित्वं, प्रमाणसद्भावात्। स तु परमात्मैवेति क्व नियमो यतोऽयमेव महानमितगुणो भगवानिति व्यवसितामनुमानपुरस्सरं भगवतो विशेषसर्वज्ञत्वपर्यनुयोगे सर्वाचार्याः प्राहुः ॥ ५ ॥

यथाऽन्यादिरिति (९४-१-८) तथा च कारिकायाम् 'अनुमेयत्वतोऽग्न्यादिः' इत्यत्राग्न्यादिरित्यतः प्राग् यथेत्यध्याहृत्य योजनीयम्, अन्यथा दृष्टान्तोपानुपपत्तेरिति ध्येयम्, तस्य स्वभावभेदाभावादिति (९४-२-३) यद्यपि स्वभावभेदाभावेऽप्यनुकूलतर्कान्तराभावेऽप्रयोजकत्वशङ्कादिसव्यभिचारसंशयोऽनुमितिं प्रतिबध्नीयात्, स्वभावभेदेऽपि च क्षित्यादिकं सकर्तृकं कार्यत्वादित्यत्र कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन कारणत्वनिरूपणालाघवतर्कानवतारेणाप्रयोजकत्वमिति नैयायिकैरिष्यते तथा च प्रकृतेऽनुकूलतर्काभावादप्रयोजकत्वं स्यादिति वक्तुं शक्यं शङ्कितुम्, तथापि प्रकृते निरुपाधिसहचारस्यैवानुकूलतर्कस्य सत्त्वादप्रयोजकत्वमित्यत्र तात्पर्यं द्रष्टव्यम्। ईश्वरसाधकानुमानखण्डनं तु मीमांसकेन कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुतारूपानुकूलतर्कखण्डनेनैव विधेयम्, घटादौ कुलालादेर्विशिष्यहेतुत्वावश्यकत्वे सामान्यतः कार्यत्वावच्छिन्ने कर्तृत्वेन हेतुत्वे मानाभावात्, 'यद्विशेषयोः' इत्यादिन्यायस्य निर्युक्तिकत्वादन्यथा करणस्याप्येकस्य सिद्ध्यापत्तेः, यत्तु घटत्वावच्छिन्नेऽपि न कुलालत्वादिना कुलालादिकृतित्वादिना वा हेतुत्वं खण्डघटाद्युत्पत्तिकाले कुलालादिकृतेरसत्त्वात् किन्तु कर्तृत्वेन कृतित्वेन वेतीश्वरसिद्धिरिति दीधितिकृतोक्तं तदयुक्तं,कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन तत्कालेऽपि सत्त्वात्,वैशेषिकनये श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिकाले आरम्भकपरमाणुद्वयसंयोगस्य शुक्लादिनाशेऽपि पूर्वसंयोगादिध्वंसानामुत्तरसंयोगादौ कालोपाधितयाऽपि जनकत्वात्, तत्कालेऽपि कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगेन विद्यमानत्वाविरोधादन्यथा दण्डादिहेतुताया अपि

ऽयमाक्षेपपरिहारमतुरस्र इति मन्तव्यम् । अनुमयन्तद्वयोरर्थान्तरेणाप्युभयवादिसिद्धतो प्रदर्शयन्नज्ञानासिद्धिं परिजिहीर्षुराह 'अथवाऽनुमेयत्व' (९५-१-८) मित्यादि, न हेतोरिति (९५-१-११) सर्वथैकान्तेषु श्रुतज्ञानाधिगम्यत्वमस्ति प्रत्यक्षत्वं च नास्तीति हेतोर्व्यभिचारित्व नोद्भावनीयम् । यतस्तथा दृष्टेष्टाबाधितत्वमस्ति अबाधितश्रुतज्ञानविषयत्वं च हेतुर्विवक्षितः स च श्रुतज्ञानविषय नास्तीति, एतेन 'अत्यन्तासत्यपि' इत्यन्यायेन शाब्दबोधविषये शशशृङ्गादावपि न व्यभिचार इत्युक्तं भवति, स्थानत्रयाविसंवादि (१२) सूक्ष्मान्तरितदूरस्थलत्रयेऽपि विसंवादरहितम्, अप्रयोजकत्वशङ्कानिरासपरस्तेऽनुमेया इत्यादि र्मोऽप्यष्टसहस्रीग्रन्थस्तत्र बीजं निरुपाधिसहचार एव ज्ञानं क्वचिदाश्रितं गुणत्वादित्याद्यनुमानसहस्रे तस्यैव तर्कस्य सम्भवाद्बाध कादिरपि तस्यैवोपजीव्यत्वादिति ध्येयम् । यत्र (९१-२-८) सर्वज्ञे साध्ये, तं सर्वज्ञम्, कथमिति न कथञ्चिद् त्ययः । न चोक्तदिशा सत्प्रतिपक्षानवतारादत्र हेत्वाभासत्वमित्यपि शङ्कनीयम् । एकत्र साध्यतदभावसाधकहेतुद्वयोपनिपात एव तदभिधानात्, सूक्ष्माद्यर्थानां प्रत्यक्षत्वे साध्ये तदभावसाधकहेत्वनुत्थानात् सूक्ष्माद्यर्थसाक्षात्कारिणोऽसिद्धौ तन्नास्ति त्वसाधकस्य चाश्रयाऽसिद्धत्वादिति भावः । दिग्नागमतमालम्ब्य शङ्कते । 'ननु च सर्वज्ञस्येत्यादि (९५ २-१०)' अनुमानमात्रोच्छेदकत्वादयं विकल्पो नाश्रयणीय इत्याशयवाननुसरयति स हि तावदेवमित्यादिना न सम्भ व्यत (९५-२-१४) इति न साक्षात्कारजनकप्रत्यासत्त्याश्रयो भवतीत्यर्थः । तेन च कश्चित् सम्बन्धमादाय न बाधः प्रवर्तनाभावादप्यचाक्षुषादिजनकविलक्षणचक्षुःसंयोगादिरूपव्यापारजननाभावादित्यर्थः । 'किमिन्द्रियेणेवान्तःकरणे- नेति' (९७-२-३) साक्षात्कारत्वावच्छिन्नं प्रतीन्द्रियत्वेनेव जन्यज्ञानत्वावच्छिन्नं प्रति मनस्त्वेनापि हेतुत्वाभावाद्

योगजधर्मानुगृहीतात्मन एव साक्षात् धर्माधर्मदर्शित्वौचित्यादिति भावः । न च भक्त्यादिजन्यतावच्छेदिका योगजजन्यताव-
च्छेदिका च तत्त्वज्ञाननिष्ठा मानसत्वव्याप्या जातिः कल्प्यत इति योगिज्ञानं मानसमेवेत्यपि वक्तुं युक्तम् । मानससाम
ग्र्याः सर्वापेक्षया दुर्बलत्वेन चाक्षुषादिसामग्रीकाले तदनुत्पत्त्यापत्तेर्योगितरत्वस्य तत्त्वज्ञानेतरत्वस्यापि चाक्षुषसामग्र्यादिप्रतिबध्य
तावच्छेदककोटौ दाने च महागौरवात्, किञ्चैवं योगजधर्मानुग्रहस्य योगिन आत्मनि सदा सत्त्वेन तत्त्वज्ञानेतरज्ञानस्य कदाप्य
नुत्पत्तिप्रसङ्गस्तथा चापसिद्धान्तः परेषां ध्यानस्तैमित्यदशायामेव तत्त्वज्ञानस्यान्यदा च योगिनां चाक्षुषादिज्ञानस्याभ्युप
गमात्, एतेन योगान्यज्ञानप्रतिबन्धकतावच्छेदकतया समानीतजातिविशेषवतां सुखदुःखानामिव तत्त्वज्ञानेतरज्ञानप्रतिबन्धक-
तावच्छेदकतया समानीतजातिविशेषवतः समाधिविशेषस्योपजकत्वकल्पोऽपि निरस्तः, अन्यथा चाक्षुषादिसामग्रीप्रतिबन्धकतायां
तदुपेक्षकत्वकल्पनापेक्षया सर्वेन्द्रियजज्ञानमात्रप्रतिबन्धकत्वकल्पन एव लाघवात्, एवं च योगजधर्मानुगृहीतात्मन एव
साक्षात् धर्माधर्मदर्शित्वमिति जैनाभ्युपगम एव श्रेयान् सकलफलस्फुरादिस्थ्युपपत्तेः । एवं हि तत्तदात्मसाक्षात्कारे तत्त्व-
दात्मत्वे स्वात्मपरहितोपज्ञाने च समाधिविशेषत्वेन हेतुत्वे न गौरवं सर्वविषयकत्वस्य केवलज्ञाने स्वभावमहिम्नैव सिद्धेस्तस्य
कस्यचिदपि कार्यतानवच्छेदकत्वात् निखिलवास्यत्वे निरवच्छिन्नप्रकारताकज्ञानत्वं तु न समाधिविशेषजन्यतावच्छेदकम्,
प्रमानादिविषयासंग्रहात्, निरवच्छिन्ननिखिलविशेषविषयताकज्ञानत्वस्य कार्यतावच्छेदकत्वे विनिगमकाभावाच्चेति दिक्
'प्रत्यक्षसामान्येनेति' (१७-१-७) न चैवं सामान्यलक्षणप्रत्यासत्तिजन्यप्रत्यक्षविषयतया धर्माधर्मयोः सिद्धसा-
धनम्, तदनभ्युपगमात्, तदनभ्युपगमे वा प्रत्यक्षविशेषणं देयमिति न दोष इत्यभिप्रायः । यदि च भङ्गानुमाने धर्माधर्मतया

प्रत्यक्षत्वेन सिद्धसाधनमुद्देश्यासिद्धिर्वा विशेष्यप्रत्यक्षत्वे तु साध्ये व्याप्त्यग्रहः । अनुमितमात्रनष्टेऽर्थे विधिष्यप्रत्यक्षत्वस्य सिद्धेरप्रयोजकत्वं चेति विभाव्यते तदा प्रत्यक्षत्वं सर्वांशनिरावरणत्वमपि किञ्चिदंशनिरावरणत्वमपि तत्वादालोकत्ववत् व्यतिरेके घटत्वादिवदित्यादिना सर्वविषयकज्ञानवत्पुरुषधौरेयसिद्धिरित्यत्र तात्पर्यमिति दिक् ॥ ५ ॥

**स त्वमेवासि निर्दोषो युक्तिशास्त्राविरोधिवाक् । अविरोधो यदिष्टं ते प्रसिद्धेन न बाध्यते ॥ ६ ॥**

दोषास्तावदज्ञानरागद्वेषादय उक्ताः । निष्क्रान्तो दोषेभ्यो निर्दोषः । प्रमाणबलात्सिद्धः सर्वज्ञो वीतरागश्च सामान्यतो यः स त्वमेवार्हन् युक्तिशास्त्राविरोधिवाक्त्वात् । यो यत्र युक्तिशास्त्राविरोधिवाक् स तत्र निर्दोषो दृष्टो, यथा क्वचिद्व्याध्युपशमे भिषग्वरः । युक्तिशास्त्राविरोधिवाक् च भगवान् मुक्तिसंसारतत्कारणेषु तस्मान्निर्दोष इति निश्चयः । युक्तिशास्त्राभ्यामविरोधः कुतो भगवतः सिद्धो ऽनवद्येनेति चेद्यस्मादिष्टं मोक्षादिकं ते प्रसिद्धेन प्रमाणेन न बाध्यते । तथा हि । यत्र यस्याभिमतं तत्त्वं प्रमाणेन न बाध्यते स तत्र युक्तिशास्त्राविरोधिवाक् । यथा रोगस्वास्थ्यतत्कारणतत्त्वे भिषग्वर । न बाध्यते च प्रमाणेन भगवतोऽभिमतं मोक्षसंसारतत्कारणतत्त्वम् तस्मात्तत्र त्वं युक्तिशास्त्राविरोधिवाक् । इति विषयस्य युक्तिशास्त्राविरोधित्वसिद्धेर्विषयिण्या भगवद्वाचो युक्तिशास्त्राविरोधित्वसाधनम् । कथमत्र कारिकायामनुपात्तो भिषग्वरो दृष्टान्तः कथ्यते इति चेत् स्वयं ग्रन्थकारेणान्यत्राभिधानात्, "त्वं शम्भवः संभवतर्षरोगैः सन्तप्यमानस्य जनस्य लोके । आसीरिहाकस्मिक एव वैद्यो वैद्यो यथा नाथ रुजां प्रशान्त्यै" ॥ १ ॥ इति स्तोत्रप्रसिद्धेः । इह दृष्टान्तवचनं तु संक्षेपोपन्यासान्न विरुध्यते, अन्यथानुपपन्नत्वनियमैकलक्षणप्राधान्यप्रदर्शनार्थं वा । तत्र भगवतोऽभिमतं मोक्षतत्त्वं तावन्न प्रमाणेन बाध्यते, प्रत्यक्षस्य तद्बाधकस्यायोगात् । नास्ति कस्यचिन्मोक्षः, सदुपलम्भकप्रमाणपञ्चकाविषयत्वात् कूर्मरोमादिव

रित्यनुमानेन न बाध्यते इति चेत् न, मोक्षस्यानुमानादागमाच्च प्रसिद्धप्रामाण्यान्निश्चितत्वस्य व्यवस्थापनात्[1] कथंचिद्दोषावरणक्षयस्यैवानन्तज्ञानादिस्वरूपलाभलक्षणस्यानुमानागमप्रसिद्धस्य मोक्षत्वात्, "बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः" इति वचनात्। तत एव नागमेनापि मोक्षतत्त्वं बाध्यते, तस्य तत्प्रख्यापकत्वप्रसिद्धेः। तथा मोक्षकारणतत्त्वमपि न प्रमाणेन विरुध्यते प्रत्यक्षतोऽकारणकमोक्षप्रतिपत्तेरभावात्तेन तद्बाधनायोगात्। नानुमानेनापि तद्बाधनं ततो मोक्षस्य कारणवत्त्वसिद्धेः। सकारणको मोक्षः, प्रतिनियतकालादित्वात् पटादिवत्। तस्याकारणकत्वे सर्वदा सर्वत्र सर्वस्य सद्भावानुषङ्गः परापेक्षारहितत्वादिति, नागमेनापि मोक्षकारणतत्त्वं बाध्यते तस्य तत्प्रकाशकत्वात् "सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः" इति वचनात्। तथा संसारतत्त्वमपि न प्रसिद्धेन बाध्यते, प्रत्यक्षस्य संसाराभावासिद्धेस्तस्य तद्बाधकत्वाघटनात्। स्वोपात्तकर्मवशादात्मनो भवान्तरावाप्तिः संसारः। स न प्रत्यक्षविषयो येन प्रत्यक्षं तं बाधेत। अनुमानं तद्बाधकमिति चेत् न, तदभावविषयलिङ्गाभावात्। गर्भादिमरणपर्यन्तचैतन्यविशिष्टकायात्मनः पुरुषस्य जन्मनः पूर्वं मरणाच्चोत्तरं नास्ति भवान्तरम् अनुपलब्धेः खपुष्पवत्, इत्यनुपलम्भः संसाराभावसाधकः संसारतत्त्वबाधक इति चेत्, न तस्यासिद्धेः। प्राणिनामाद्यचैतन्यं चैतन्योपादानकारणकं, चिद्विवर्तत्वान्मध्यचैतन्यविवर्तवत्। तथाऽन्त्यचैतन्यपरिणामश्चैतन्यकार्यः तत एव तद्वत्। इत्यनुमानेन पूर्वोत्तरभवोपलम्भात् पूर्वोत्तरसंसारतत्त्वसिद्धेः। गोमयादेरचेतनादचेतनस्य कृम्यादेरुत्पत्तिदर्शनात्तेन व्यभिचारी हेतुरिति चेत् न, तस्यापि पक्षीकरणात्। कृम्यादिशरीरस्याचेतनस्यैव गोमयादेः सम्मूर्छनं, न पुनः कृम्यादिचैतन्यविवर्तस्य, तस्य पूर्वचैतन्यविवर्तादेवोत्पत्तिप्रतिज्ञानात्। तज्जिनचरमचित्तेन चित्तान्तरानुपादानेन व्यभिचारः साधनस्येत्यपि मनोरथमात्रं, तस्य प्रमाणतोऽप्रसिद्धत्वात्

१ दोषावरणयोर्हानिरित्याद्यनुमानादिना

निरन्वयक्षणक्षयस्य प्रतिक्षेपात् । ननु च यथायं पश्चिमोऽग्निररणिनिर्मथनोत्थोऽनग्निपूर्वको दृष्टः परस्त्वग्निपूर्वक एव, तथाद्यं चैतन्यं कायाकारपरिणतभूतेभ्यो भविष्यति, परं तु चैतन्यपूर्वकं, विरोधाभावात् । इति कस्यचिदभ्युपगमस्थितिः स्वपक्षघातिनी जातिरेव, पिष्टमर्दत्वस्य हेतोः साध्येन व्याप्तेरखण्डनात् । प्रथमपश्चिमाग्नेरनग्न्युपादानत्वे सजातीयानामप्यनलानामुपादानत्वोपपत्तेः पृथिव्यादिभूतचतुष्टयस्य तत्त्वान्तरभावविरोधः । तथा हि । येषां परस्परमुपादानोपादेयभावस्तेषां न तत्त्वान्तरत्वम् । यथा क्षितिविवर्तानाम् । परस्परमुपादानोपादेयभावश्च पृथिव्यादीनाम् । इत्येकमेव पुद्गलतत्त्वं पृथिव्यादिविवर्तमवतिष्ठेत । अथ सलिलादीनां न परस्परमुपादानोपादेयभावः, सहकारिभावोपगमात् । कथमपावकोपादानः प्रथमः पश्चिमपावकः प्रसिद्धो यतस्तद्वच्चेतनपूर्वकं प्रथमचैतन्यं प्रसज्येत ? यथैव हि प्रथमाविर्भूतपावकादेस्तिरोहितपावकान्तरादिपूर्वकत्वं तथा गर्भचैतन्यस्याविर्भूतस्वभावस्य तिरोहितचैतन्यपूर्वकत्वमिति किम व्यवस्था स्यात् ? स्यान्मतं, सहकारिमात्रादेव प्रथमपश्चिमाग्नेरुपजननोपगमात्तिरोहितान्याग्न्यन्तरोपादानत्वमसिद्धमिति, तदसत्, अनुपादानस्य कस्यचिदुपजननादर्शनात् । अन्त्यपितुरादेरुपादानादर्शनाद्दोष इति चेत्, न, तस्यापि सोपादान एव, कार्यत्वात्, पटादिवदित्यनुमानात्तस्यादृष्टोपादानस्यापि सोपादानत्वस्य साधनात् । नन्वस्तु सर्वोऽग्निरग्न्यन्तरोपादान एव सर्वस्य सजातीयोपादानत्वव्यवस्थितेः । चेतनस्य तु चेतनान्तरोपादानत्वनियमो न युक्तः, तस्य भूतोपादानत्वघटनात् भूतचेतनयोः सजातीयत्वात्तत्त्वान्तरत्वासिद्धेरिति चेत्, न, तयोर्भिन्नलक्षणत्वात्तत्त्वान्तरत्वोपपत्तेः तोयपावकयोरपि तत एव परैस्तत्त्वान्तरत्वसाधनात् । तथा हि । तत्त्वान्तरं भूताच्चैतन्यं, तद्विलक्षणत्वान्यथानुपपत्तेः । न चायमसिद्धो हेतुः क्षित्यादिभूतेभ्यो रूपादिसामान्यलक्षणेभ्यः स्वसंवेदनलक्षणस्य चैतन्यस्य तद्विलक्षणत्वप्रसिद्धेः । न हि भूतानि स्वसंवेदनलक्षणानि, अस्मदाद्यनेकप्रतिपत्तृप्रत्यक्षत्वात् । यत्पुनः स्वसंवेदनलक्षणं तन्न तथा प्रतीतं, यथा

विरोधः । क्रियावत्यात्मा क्रियायाः स्वात्मन्येव चेत्कथं तत्र विरोधः, ? क्रियावत्येव सर्वस्याः क्रियायाः प्रतीतेरविरोधसिद्धेः । अथ क्रिया, करणं निष्पादनं स्वात्मनि विरुद्धमित्यभिमतं तर्हि न ज्ञानं स्वरूपं निष्पादयतीत्युच्यते येन विरोधः स्यात् । इत्यसिद्धः स्वात्मनि क्रियाविरोधः स्वकारणविशेषादभिव्यज्यमानस्य ज्ञानस्य स्वपरप्रकाशनरूपत्वात् प्रदीपस्य स्वपरोद्योतनरूपत्ववत् । यथैव हि रूपज्ञानोत्पत्तौ प्रदीपः सहकारित्वाच्चक्षुषो रूपस्योद्योतकः कथ्यते तथा स्वरूपज्ञानोत्पत्तौ तस्य सहकारित्वात्स्वरूपोद्योतकोपि । तथा ज्ञानं स्वपररूपयोः परिच्छेदकम् तत्राज्ञाननिवृत्तिहेतुत्वान्यथानुपपत्तेः । इत्यविरुद्धं पश्यामः स्वसंवेदनमन्यथास्य कथम भूताद्यन्यमतीति भिन्नलक्षणत्वं तयोः सिद्धमेव । तच्च सिध्यत्तत्त्वान्तरत्वं साधयति, तथाऽसजातीयत्वम् । तयोरुपादानोपादेयभावाभाव तयोरसजातीयत्वात् । यदेवं भूतचैतन्ययोर्नास्त्युपादानोपादेयभावो, विभिन्नलक्षणत्वात् । इति व्यापकविरुद्धव्याप्तोपलब्धिः, उपादानो पादेयभावव्यापकस्य सजातीयत्वविशेषस्य विरुद्धेन तत्त्वान्तरभावेन व्याप्ताद्विभिन्नलक्षणत्वात्प्रतिषेध्याभावसाधनात् । ननु सजातीय-त्वविशेषस्योपादानोपादेयभावव्यापकत्वमसिद्धम्, विजातीयत्वाभिमतयोः पयःपावकयोः सत्त्वादिना सजातीययोरपि तदनुपगमात् कथञ्चिद्विजातीययोरपि मृत्पिण्डघटाकारयोः पार्थिवत्वादिना विशिष्टसामान्येन सजातीययोरुपादानोपादेयभावसिद्धेः । कथं तर्हि सजातीयत्वविशेषस्य तत्त्वान्तरभावेन विरोध इति चेत्तत्त्वान्तरभूतयोस्तदनुपलम्भात्, पूर्वाकारापरित्यागाऽजहद्वृत्तोत्तराकारान्वयप्रत्ययविषयस्योपादानत्वप्रतीतेः, परित्यक्तपूर्वाकारेण द्रव्येणात्मसात्क्रियमाणोत्तराकारस्योपादेयत्वनिर्णीतान्यथातिप्रसङ्गात् । कथं तत्त्वान्तरभावेन भिन्नलक्षणत्वं व्याप्तमिति चेत्, तदभावेनुपपद्यमानत्वात् । किण्वादिमदिरादिपरिणामयोस्तत्त्वान्तरभावेपि भिन्नलक्षणत्वस्य दर्शनात्तस्य तेनाव्याप्तिरिति चेत्, न, तयोर्भिन्नलक्षणत्वासिद्धेः, किण्वादेरपि मदजननशक्तिसम्भवान्मदिरादिपरिणामवत् । सर्वथा

व्यपदिश्यार्थं हेतुः, ज्ञानादीनां स्वसंवेदनप्रत्यक्षत्वाच्चेतनत्वप्रसिद्धेरध्यक्षबाधितपक्षानन्तरं प्रयुक्तत्वात् । अथ चेतनसंसर्गादचेतनस्यापि ज्ञानादेश्चेतनत्वप्रतीतिः प्रत्यक्षतो भ्रान्तैव । तदुक्तं "तस्मात्तत्संसर्गादचेतनं चेतनावदिव लिङ्गम्" इति । तदप्यपरीक्षिताभिधानं, शरीरादेरपि चेतनत्वप्रतीतिप्रसङ्गाच्चेतनसंसर्गाविशेषात् । शरीरादसंभवी बुद्ध्यादेरात्मना संसर्गविशेषोऽस्तीति चेत् स कोऽन्योऽन्यत्र कथं चित्तादात्म्यात् तद्दृष्टकर्मकृतत्वादिविशेषस्य शरीरादावपि भावात् । ततो नाचेतना ज्ञानादयः स्वसंविदितत्वात् अनुभववत् । स्वसंविदितास्ते परसंवेदनान्यथानुपपत्तेः इति प्रतिपादितप्रायम् । तथा चात्मस्वभावा ज्ञानादयः, चेतनत्वात्, अनुभववदेव । इति न चैतन्यमात्रेऽवस्थानं मोक्षः अनन्तज्ञानादिचैतन्यविशेषे चावस्थानस्य मोक्षत्वप्रतीतेः । "एतेन बुद्ध्यादिविशेषगुणोच्छेदादात्मत्वमात्रेऽवस्थानं मुक्तिः" इति कणभक्षाक्षपादमतं प्रमाणेन बाधितमुपदर्शितं, पुंसोऽनन्तज्ञानादिस्वरूपत्वसाधनात्, स्वरूपोपलब्धेरेव मुक्तित्वसिद्धेः । स्यान्मतं "न बुद्ध्यादयः पुंसः स्वरूपं ततो भिन्नत्वात्, अर्थान्तरवत् । ततो भिन्नास्ते विरुद्धधर्माधिकरणत्वाद्घटादिवत् । विरुद्धधर्माधिकरणत्वं पुनस्तेषामुत्पादविनाशधर्मकत्वादात्मनोऽनुत्पादाविनाशधर्मकत्वात्प्रसिद्धम्" इति तदयुक्तं, विरुद्धधर्माधिकरणत्वेऽपि सर्वथा भेदासिद्धेर्मेचकज्ञानवदाभरवत् । एकं हि मेचकज्ञानमनेकं तदाकारो नीलादिप्रतिभासविशेषः इत्येकत्वानेकत्वविरुद्धधर्माधिकरणत्वेऽपि मेचकज्ञानतत्प्रतिभासविशेषयोर्न भेदोऽभ्युपगम्यते, मेचकज्ञानत्वविरोधात् । यदि पुनर्युगपदनेकार्थग्राहि मेचकज्ञानमेकमेव न तत्रानेकप्रतिभासविशेषसम्भवो यतो विरुद्धधर्माधिकरणत्वमभेदेऽपि स्यादिति मतं तदापि तदेकमनेकया शक्त्यानेकमर्थं युगपद् गृह्णाति किं चैकया ? यद्यनेकया तदैकमनेकशक्त्यात्मकमिति स एव विरुद्धधर्माध्यासः । ततोऽनेकशक्तेरनेकत्वधर्माधारभूताया एकत्वात् तस्य चैकत्वधर्माधारत्वाभेदेऽत्र विरुद्धधर्माध्यास इति चेत्, कथमनेका शक्तिस्तस्येति व्यपदिश्यते ? ततो भेदाद्धर्मान्तरवत् । सम्बन्धादिति चेत्, तर्हि तदनेकया शक्त्या संबन्धमा-

मनेकेन रूपेण कथमनेकरूपं न स्यात्? तस्याप्यनेकरूपस्य ततोऽन्यत्वात्तदेकमेवेति चेत्, कथं तत्तस्येति व्यपदेष्टव्यम्? सम्बन्धादिति चेत्, स एव दोषोऽनिष्ठश्च पर्यनुयोगोऽनवस्थानात्। यदि पुनरेकेनैव रूपेणानेकया ज्ञप्त्या संबध्यते तदानेकविशेषणत्वविरोधः। पीतग्रहणशक्त्या हि येन स्वभावेन संबध्यते तेनैव नीलादिग्रहणशक्त्या चेत् पीतग्राहित्वविशेषणमेव मेचकज्ञाने स्यात् नीलादिग्राहित्वविशेषणमिति पीतज्ञानमेव स्यात् न तु मेचकज्ञानम्। यद्येकया शक्त्यानेकमर्थं गृह्णातीति द्वितीयविकल्पः समाश्रीयते तदापि सर्वार्थग्रहणप्रसङ्गः। पीतग्रहणशक्त्या ह्येकया यथा नीलादिग्रहणं तथातीतानागतवर्तमानाशेषपदार्थग्रहणमपि केन निवार्येत? अथ न पीतग्रहणशक्त्या नीलग्रहणशक्त्या वा पीतनीलाद्यनेकार्थग्राहि मेचकज्ञानमिष्यते। किं तर्हि? नीलपीताद्यनेकार्थग्रहणशक्त्यैकयैवेति मतं तदा न कार्यभेदः कारणशक्तिभेदव्यवस्थाहेतुः स्यादिति तदेकहेतुकं विश्वस्य वैश्वरूप्यं प्रसज्येत। तथा चानेककारणप्रतिवर्णनं सर्वकार्योत्पत्तौ विरुध्यते। तदभ्युपगच्छता मेचकज्ञानमनेकार्थग्राहि नानाशक्त्यात्मकमुररीकर्तव्यम्। तेन च विरुद्धधर्माधिकरणेनैकेन प्रकृतहेतोरनैकान्तिकत्वात् ज्ञानादीनामात्मनो भेदैकान्तसिद्धिर्येनात्मा ज्ञानाद्यात्मको न भवेत्। निराकरिष्यमाणत्वाच्च सर्वथा गुणगुणिनोरन्यतैकान्तस्य, न ज्ञानादयो गुणाः सर्वथात्मनो भिन्नाः शक्याः प्रतिपादयितुं यतोऽशेषविशेषगुणनिवृत्तिर्मुक्तिर्व्यवतिष्ठेत। ननु च धर्माधर्मयोस्तावन्निवृत्तिरात्यन्तिकी मुक्तौ प्रतिपत्तव्या, अन्यथा तदनुपपत्तेः। तन्निवृत्तौ च तत्फलसुखादिनिवृत्तिरवश्यंभाविनी निमित्तापाये नैमित्तिकस्याप्यनुपपत्तेः। मुक्तस्य मनोऽन्तःकरणसंयोगाभावे वा न तत्कार्यस्य बुद्ध्यादेरुत्पत्तिः। इत्यशेषविशेषगुणनिवृत्तिर्मुक्तौ सिद्धस्त्वेवेति केचित् तेऽप्यदृष्टहेतुकानां बुद्ध्यादीनामात्मान्तःकरणसंयोगजानां च मुक्तौ निवृत्तिं ब्रुवाणा न निवार्यन्ते। कर्मक्षयहेतुकयोस्तु प्रशमसुखानन्तज्ञानयोर्निवृत्तिमाचक्षाणास्ते न स्वस्थाः प्रमाणविरोधात्। ततः कथञ्चिद्बुद्ध्यादिविशेषगुणानां निवृत्तिः कथञ्चिदनिवृत्तिर्मुक्तौ व्यवति

पापेन च मायाम्बु[illegible] न स्यात् ? तस्मादनेकरूपस्य ततोऽन्यस्यापेक्षमेवेति ये तिमिरमीर्षितं न्यायागमविरुद्धम् । तत्त्वज्ञानमात्रं न परनिःश्रेयसकारणं, प्रकर्षपर्यन्तो[illegible] अपि परमेकेन [illegible] मिथ्याज्ञानवत् । न तावदिहासिद्धो हेतुः, सर्वज्ञानामपि कपिलादीनां स्वयं प्रकर्षपर्यन्तप्राप्तस्यापि ज्ञानस्य शरीरेण सहावस्थानोपगमात् । साक्षात्सकलार्थज्ञानोत्पत्त्यनन्तरं शरीराभावे कुतोऽयमाप्तस्योपदेशः प्रवर्तेत ? अशरीरस्याप्तस्योपदेशकरणविरोधादाकाशवत् । तस्यानुत्पन्ननिःशेषार्थज्ञानस्योपदेश इति चेत्, न, तस्याप्रमाणत्वप्रसङ्गादनिर्वृत्तेरन्यास्मान( रथ्या )पुरुषोपदेशवत् । यदि पुनः शरीरान्वयानुत्पत्तिर्निःश्रेयसं न गृहीतशरीरनिवृत्तिः । तस्य साक्षात्सकलतत्त्वज्ञानं कारणं न तु गृहीतशरीरनिवृत्तेः, फलोपभोगाद्युपगमात् । तत्र पूर्वोपात्तशरीरेण सहावतिष्ठमानावस्थाज्ञानाप्तस्योपदेशो युक्त इति मतं तदा हेतुः सिद्धोऽभ्युपगतत्वात् । स च परनिःश्रेयसाऽकारणत्वं तत्त्वज्ञानस्य साधयत्येव, भाविशरीरस्येवोपात्तशरीरस्यापि निवृत्तौ परनिःश्रेयसत्वात्, तस्य च तदपेक्ष्यमाणत्वात् । फलोपभोगक्षयोपात्तकर्मक्षयापेक्षं तत्त्वज्ञानं परनिःश्रेयसकारणमित्यप्यनालोचिताभिधानं, फलोपभोगस्यौपक्रमिकानौपक्रमिकविकल्पानतिक्रमात् । तस्यौपक्रमिकत्वे ध्रुवस्युपक्रमोऽन्यत्र तपोविशेषात् । इति तत्त्वज्ञानतपोद्वितयहेतुकं परनिःश्रेयसमायातम् । समाधिविशेषादुपात्ताशेषकर्मफलोपभोगोपगमाददोष इति चेत्, कः पुनरसौ समाधिविशेषः ? स्थिरीभूतं ज्ञानमेव स इति चेत्, तदुत्पत्तौ परनिःश्रेयसस्य भावे स एवाप्तस्योपदेशाभावः । सकलतत्त्वज्ञानस्यास्थैर्यावस्थायामसमाधिरूपस्योत्पत्तौ युक्तोऽयं योगिनस्तस्योपदेश इति चेत्, न, सकलतत्त्वज्ञानस्यास्थैर्यविरोधात्तस्य कदाचिच्चलनानुपपत्तेः अक्रमस्यापि यथा स्वरसंचरणाभावात्, अन्यथा सकलतत्त्वज्ञानत्वासमवायसमवादिज्ञानवत् । अथ तस्योपदेशदशायां योगिनोऽपि ज्ञानं विनेयजनप्रतिबोधाय व्याजिघ्यासमस्थिरमसमाधिरूपं पश्चान्निवृत्तसकलव्यापारं स्थिरं समाधिव्यपदेशमास्कन्दतीत्युच्यते तर्हि

समाधिश्चारित्रमिति नाममात्रं भिद्यते नार्थः तत्त्वज्ञानाद्द्वेषाज्ञाननिवृत्तिलक्षणस्य परमोपेक्षालक्षणस्य समुच्छिन्नक्रियाऽ-
प्रतिपातिपरमशुक्लध्यानस्य तपोऽतिशयस्य समाधिव्यपदेशकरणात्। तथा चारित्रसहितं तत्त्वज्ञानमन्त्यभूततत्त्वार्थश्रद्धाने परनिःश्रेयस
मनिच्छतामपि कपिलादीनामागमे व्यवस्थितम्। ततो न्यायविरुद्धं सर्वथैकान्तवादिनां ज्ञानमेव मोक्षकारणत्वम्। स्वागमविरुद्धं च,
सर्वेषामागमे प्रव्रज्याद्यनुष्ठानस्य सकलदोषोपरमस्य च बाह्यस्याभ्यन्तरस्य च चारित्रस्य मोक्षकारणस्याभिधानात्। तथा संसारतत्त्व
चान्येषां न्यायागमविरुद्धम्। तथा हि। नास्ति नित्यस्यैकान्तस्य कस्यचित्संसारः विक्रियानुपपत्तेः। इति न्यायविरोधः।
सर्वथैकान्ते तदागमविरोधश्च स्वयं पुरुषस्य संसाराभाववचनात्, गुणानां संसारोपपत्तेः परेषां सभूत्या संसारव्यवस्थितेः।
तथा संसारकारणतत्त्वं चान्येषां न्यायागमविरुद्धम्। तद्धि मिथ्याज्ञानमात्रं नैकरीकृतम्। न च तत्कारणः संसारः, तन्निवृत्ता-
वपि संसारानिवृत्तेः। यन्निवृत्तावपि यन्न निवर्तते न तत्तन्मात्रकारणम्। यथा तक्षादिनिवृत्तावप्यनिवर्तमानं देवगृहादि न तन्मात्र
कारणम्। मिथ्याज्ञाननिवृत्तावप्यनिवर्तमानश्च संसारः। तस्मान्न मिथ्याज्ञानमात्रकारणक इति। अत्र न हेतुरसिद्धः, सम्यग्ज्ञानोत्पत्तौ
मिथ्याज्ञाननिवृत्तावपि दोषानिवृत्तौ संसारानिवृत्तेः स्वयमभिधानात्। दोषाणां संसारकारणस्यानेकस्यागमस्वीकरणाच्च तन्मात्रं संसार
कारणत्वं न्यायागमविरुद्धं सिद्धम्। तदेवमन्येषां न्यायागमविरुद्धभाषित्वात्सर्वथैव युक्तिशास्त्राविरोधिवाक् सर्वज्ञो वीतरागश्च निश्ची
यते। ततः स एव सकलशास्त्रार्थो मेधावतां संस्तुत्यः। ये त्वाहुः 'सतोऽपि यथार्थदर्शिनो वीतरागस्येच्छया निर्मातुमशक्यस्य तत्कार्यस्य
व्यापारादेस्तदभिप्रायरहितस्यापि दर्शनात् सरागाणामपि वीतरागवच्चेष्टमानानामनिवारणाच्च कस्यचित् न रागसेवा इति विप्लवः
संभवति' इति तेषामपि, विचित्राभिसन्धितया व्यापारव्याहारादिसाङ्कर्येण कस्यचिन्निश्चयानिर्णयेपि धर्मधर्म्यादिविशेषेषु ज्ञानवतोपि

विसंवादात् क पुनराभासे कर्मेभहि ? न हि ज्ञानवतो वीतरागात्सुरुपादिसंभवात् कश्चित्संभवति सुगतादावन्यनाभासप्रसङ्गात् यस्य कपिलादिभ्यो विशेषेष्टेरानर्थक्यप्रसङ्गात् । न च व्यापारव्याहाराकारविशेषाणां तत्र साङ्कर्यं सिद्ध्यति, विचित्राभिसन्धितानुपपत्तेः, यस्मिः पृथग्जने रागादिमत्यपि प्रसिद्धेः प्रक्षीणदोषे भगवति निवृत्तेः अस्य यथार्थमविपादनाभिप्रायतानिश्चयात् । कुतश्चायं सर्वस्य विचित्राभिप्रायतामदृष्टां व्यापारादिसाङ्कर्येऽपि निश्चिनुयात् ? शरीरित्वादेर्हेतोः स्यात्समीचेति चेत्, तत एव सुगतस्यासर्वज्ञत्वमि-त्यनोस्तु । तत्रास्य हेतोः सन्दिग्धविपक्षव्यावृत्तिकत्वान्न तन्निश्चयः । शरीरी च स्यात्सर्वज्ञश्च, विरोधाभावात्, विज्ञानप्रकर्षे शरीरापच-योऽदर्शनादिति चेत्, तत एव सर्वज्ञस्य विचित्राभिप्रायतानिश्चयोऽपि मा भूत्, तत्रापि मोक्षहेतोः सन्दिग्धविपक्षव्यावृत्तिकत्वाविशेषात् । सोऽयं विचित्रव्यापारादिकार्यदर्शनादसर्वज्ञस्य विचित्राभिसन्धितां निश्चिनोति, न पुनः कस्यचिद्वचनादिकार्यातिशयनिश्चयात् सर्वज्ञत्वमपीति स्वमिति कथमनुन्मत्तः ? कैवल्यमात्रस्य सन्तानान्तरस्य सन्तानक्षणक्षयस्वर्गप्रापणशक्त्यादेर्विप्रकृष्टस्येष्टेः ? विप्रकृष्टस्वभावस्याविशेषात्, चेष्टादेरकारणव्यतिरिक्तस्य चेतनादेर्वा विशेषस्य प्रमाणभूतस्य जगद्धितैषिणः शास्तुस्तायिनः शोभनं गतस्य सम्पूर्णं वा गतस्य पुनरनावृत्त्या सुष्ठु वा गतस्य विशेषस्येष्टेः ? सर्वत्रानाश्वासाविशेषात् । न चैवं वादिनः किञ्चिदनुमानं नाम, निरसिस धीनामपि चतुर्थं कार्यस्वभा वानियमोपलम्भात्, सति काष्ठादिसामग्रीविशेषे कश्चिदुपलभ्यस्य तदभावे प्रायसानुपलभ्यस्य मण्यादिकारणकलापेऽपि संभवात् । यथा तीयो यतः संस्थितस्त्वावीचावाटगति दुर्लभनियमतायां धूमधूमकेत्वादीनामपि व्याप्यव्यापकभावः कथमिव निर्णीयेत ? धूमः क्षिप्त पात्वादिति क्वचाद्भूतादेरपि कश्चिदेव दर्शनात् प्रमाणतां किमिव निश्चिनुयात् चेतः स्यात् ? सर्वसरप्रसंसयैकान्तवादिना विलम्बमर्कानामिव स्वमहत्त्वमक्षमम् । ननु च काष्ठादिसामग्रीजन्योऽग्निर्यादृशो दृष्टो न तादृशो मण्यादिसामग्रीप्रभव इति यथाऽवीयो यतो दृष्टः स तादृ

समाधिधारित्वमिति नाममात्रं भिद्यते नार्थः, तत्त्वज्ञानाद्शेषाज्ञाननिवृत्तिलक्षणस्य परमोपेक्षालक्षणस्य समुच्छिन्नक्रियाऽ-प्रतिपातिपरमशुक्लध्यानस्य तपोविशेषस्य समाधिव्यपदेशकरणात्। तथा चारित्रसहितं तत्त्वज्ञानमव्यवहितं तत्त्वार्थश्रद्धानं परनिःश्रेयस-मभिव्यक्तमपि कपिलमीमांसके व्यवस्थितम्। ततो न्यायविरुद्धं सर्वथैकान्तवादिनो ज्ञानमेव मोक्षकारणत्वम्। स्वागमविरुद्धं च सर्वेषामागमे ज्ञानस्याप्यनुष्ठानस्य सकलदोषोपरमस्य च वाक्यस्याभ्यन्तरस्य च चारित्रस्य मोक्षकारणत्ववचनात्। तथा संसारतत्त्वं चाप्येषां न्यायागमविरुद्धम्। तथा हि। नास्ति नित्यत्वैकान्ते कस्यचित्संसारः, विक्रियानुपपत्तेः। इति न्यायविरोधः। सर्वथैकान्ते तदागमविरोधश्च स्वयं पुरुषस्य संसाराभाववचनात्, गुणानां संसारोपपत्तेः परेषां सर्वस्या संसारव्यवस्थितेः। तथा संसारकारणतत्त्वं चाप्येषां न्यायागमविरुद्धम्। तद्धि मिथ्याज्ञानमात्रं तैरङ्गीकृतम्। न च तत्कारणः संसारः, तन्निवृत्तावपि संसारानिवृत्तेः। यन्निवृत्तावपि यन्न निवर्तते न तत्तस्य कारणम्। यथा यवादिनिवृत्तावप्यनिवर्तमानं हेमगृहादि न तन्मात्र-कारणम्। मिथ्याज्ञाननिवृत्तावप्यनिवर्तमानश्च संसारः। तस्मान्न मिथ्याज्ञानमात्रकारणक इति। अत्र न हेतुरसिद्धः सम्यग्ज्ञानोत्पत्तौ मिथ्याज्ञाननिवृत्तावपि दोषानिवृत्तौ संसारानिवृत्तेः स्वयमभिधानात्। दोषाणां संसारकारणत्वस्यैवागमस्वीकरणाच्च तन्मात्रं संसार-कारणत्वं न्यायागमविरुद्धं सिद्धम्। तदेवमन्येषां न्यायागमविरुद्धाभिधायित्वेन मुक्तिसाक्षाद्विरोधित्वात् सर्वज्ञो वीतरागश्च मिथ्यी-त्वे। ततः स एव सकलज्ञाता मेधावी संस्तुतः। ये त्वाहुः ‘सतोऽपि यथार्थदर्शिनो वीतरागस्येच्छया निःशेषमर्थवत्कार्यस्य व्यापारेऽस्याभिधायकवीतरागोऽपि दर्शनात् सरागाणामपि वीतरागवच्चेष्टमानानामनिवारणात् कस्यचित् स एवैवाप्त इति निर्णेतुं संभवति’ इति तेषामपि, विचित्राभिसन्धितया व्यापारव्याहारादिमात्रेण कस्यचिद्व्यक्तिरूपाभिनिर्णये चैवमर्थक्याद्विशेषेऽपि, ज्ञानवतोऽपि

ज्ञातेन न पुनरन्यादृशापि यतो धूमपावकयोरन्योन्यव्याप्यव्यापकभावो न निर्णीयते, तथा यादृशं धूमवं वह्नित्वेन व्याप्तं तादृशं न व्याप्त्येन, यतः शिंशपात्ववृक्षत्वयोरपि व्याप्यव्यापकभावनियमो दुर्लभः स्यात् इति कश्चित्सोपि मतीतेरपलापकः, कार्यस्य तादृशतया प्रतीयमान स्यापि कारणविशेषाविशुद्धिदर्शनात् । यत्नतः परीक्षितं कार्यं कारणं नातिवर्तते इति चेत्, सुवं प्रस्तुतं, व्यापारादिविनिवेशस्यापि किञ्चि-ज्ज्ञरागादिमदसंसर्गिणो यत्नतः परीक्षितस्य भगवति ज्ञानाधिविधानविशुद्धिसिद्धेः । यत्नेन यत्नतः परीक्षितं व्याप्यं व्यापकं नातिवर्तते इति युक्तापि सुवं प्रस्तुतमित्युक्तं वेदितव्यं, पुरुषविशेषत्वादेः स्वभावस्य व्याप्यस्य सर्वज्ञत्वव्यापकस्वभावानतिक्रमसिद्धेस्तद्विरोधात् । तयोर्व्यभिचारपरागमो नानुमानस्येत्यनुकूलमाचरति । यन्नतरमितो धूमादिकमपि परीक्षितुमशक्यास्ततो धूमध्वजादिष्वपि व्यभिचार दर्शनात् । प्रमाणविषयतया तु सर्वत्र परीक्षासमानो यथा धूमादि पावकादिकं न व्यभिचरति तथा व्यापारव्याहारकारविशेषः कपिलादिना गतिशयमपीत्यनुकूलमाचरणम् । एवं युक्तिशास्त्राविरोधिवाक्त्वं, भगवतोऽर्हत एव सर्वज्ञत्वं साधयतीत्यभिधाय परेषां तत् युक्तिशास्त्रासम्भव प्रापकप्रमाणस्यभावसेन सर्वज्ञत्वं बाधयति नान्येषामविरोध इत्यादिना सूचयति, स्यादिति शेषः, यत्नन्मादविरोधः युक्तिशास्त्रे मवद्व्यापकप्रमाणत्वं त्वय्येव तस्मात्त्वमेव स इत्यभिधानसम्बन्धात् । स यत्नाविरोधः पुनः सिद्ध इत्यादेकार्यो यदिदं ते प्रसिद्धेन न बाध्यते इत्यभिधानात् । तथेदं मतं नागममनुपपद्यते, निराकरणपादोपि कश्चिदविप्रतिषेधात् । न पुनरिच्छाविपर्यासमिदं, प्रक्षीणमोहे भगवति मोहपर्यायात्मिकाया इच्छाया संभवाभावात् । तथा हि । नेच्छा सर्वविदः शासनप्रकाशननिमित्तं, प्रणष्टमोहत्वात् । यस्येच्छा शासनप्रकाशननिमित्तं न स प्रणष्टमोहो यथा किञ्चिज्ज्ञः । प्रणष्टमोहश्च सर्वविन्मामपतः सापितरतस्मान्न तस्येच्छा शासनप्रकाशननिमित्तम् । इति केवलव्यतिरेकी हेतुर्निराकरणार्थं साधयति, अव्यभिचारात् । न सर्वविदिच्छामन्तरेण यदि वक्तृत्वात् भरमतादिवत्, इत्यनेन

निराकृतत्वात्तो विमतिविषेध इति चेत्, नायं नियमोऽस्ति। तदनभ्युपगमे को दोष इति चेत्, नियमाभ्युपगमे सुषुप्त्यादावपि निरभिप्रायप्रवृत्तिर्न स्यात्। न हि सुषुप्तो गोत्रस्खलनादौ वाग्व्यापारादिहेतुरिच्छास्ति। प्रतिसंविदिताकारेच्छा तदा संभवन्ती पुनः स्मर्येत पाश्चात्यान्तरवत्। न अप्रतिसंविदिताकारेच्छा संभवति न पश्चान्न स्मर्यते। पूर्वकालभाविनीच्छा तदा वागादिप्रवृत्तिहेतुरप्रतिसंविदिताकाराऽनुमेया सम्भवत्येवेति चेत्, किं पुनस्तदनुमानम्? विवादाध्यासिता वागादिप्रवृत्तिरिच्छापूर्विका, वागादिप्रवृत्तित्वात्, प्रसिद्धेच्छापूर्वकवागादिप्रवृत्तिवदिति चेत्, न हेतोरप्रयोजकत्वात्। यथाभूतस्य हि जाग्रतोऽनन्यमनसो वा वागादिप्रवृत्तिरिच्छापूर्विका प्रतिपन्ना देशान्तरे कालान्तरे च तथाभूतस्यैव तत्प्रवृत्तिरिच्छापूर्विका साधयितुं शक्या, न पुनरन्यादृशा, अतिप्रसङ्गात्। न च सुषुप्तस्यान्यमनस्कस्य वा तत्प्रवृत्तिरिच्छापूर्वकत्वेन व्याप्ताऽवगता, तदवगतेरसंभवात्। सा हि स्वसन्ताने तावन्न संभवति, सुषुप्त्यादिविरोधात्। सुषुप्तोऽन्यमनस्कश्च प्रवृत्तिमिच्छापूर्विकामवगच्छति (स्वपिति) चेति व्याहतमेतत्। पश्चादुत्थितोऽवगच्छतीति चेत्, इदमपि तादृगेव। स्वयमसुषुप्तोऽनन्यमनाश्च सुषुप्ताऽन्यमनस्कप्रवृत्तिमिच्छापूर्वकत्वेन व्याप्तामवगच्छतीति ब्रुवाणः कथमप्रतिहतवचनपथः स्वस्थैराश्रीयते? तदनुमानात्तदवगतेरदोष इति चेत्, न, अनवस्थाप्रसङ्गात्, तदनुमानस्यापि व्याप्तिप्रतिपत्तिपुरस्सरत्वात् तद्व्याप्तेरप्यनुमानान्तरापेक्षत्वात्, सुदूरमपि गत्वा प्रत्यक्षतस्तद्व्याप्तिप्रतिपत्तेरघटनात्। एतेन सन्तानान्तरे तद्व्याप्तेरवगतिरपास्ता, अनुमानात्तदवगतावनवस्थानाविशेषात्, प्रत्यक्षतस्तदवगतेरसम्भवाच्च। इति नानुमेया सुषुप्त्यादाविच्छास्ति तत्काले पूर्वकाले वा, तदनुमानस्यानुदयात्। तथा च सर्वज्ञप्रवृत्तेरिच्छापूर्वकत्वे साध्ये वक्तृत्वादेर्हेतोः सुषुप्त्यादिना व्यभिचारात् तदनियम एव। ततश्चैतन्यकरणपाटवयोरेव साधकतमत्वम्। ननु च सत्यपि चैतन्ये करणपाटवे च वचनप्रवृत्तेरदर्शनाद्विवक्षापि तत्सहकारिकारणमपेक्ष्यत एवेति चेत्, सहकारिकारणान्तरं न वै नियतमपेक्षणीयं, नक्तञ्चरादेः संस्कृतचक्षुषो

चाऽनपेक्षितालोकसन्निधेः रूपोपलम्भात् । न चैवं संनिकर्षपाटवयोरप्यभावे विषयग्रहणमात्रस्यापि प्रवृत्तिः प्रसज्यते, संनिकर्ष-
देशस्थे यथाविषयं वाग्वृत्तेरभावात् । न हि तयोर्नेत्रस्य ज्ञानपरिणामाभावे तथात्मानविषयत्वो सत्यामपि ग्रहणप्रवृत्तिर्दृश्यते,
करणपाटवस्य चाभावे स्वप्नज्ञानोत्पादनं, चाक्षुषत्वादेरपि तत्प्रसङ्गात् । ततश्चैतन्यं करणपाटवं च वाचो हेतुरेव नियमतो न विवक्षा,
विवक्षामन्तरेणापि सुषुप्त्यादौ वाग्दर्शनात् । न च दोषजातिस्तद्धेतुर्यतस्तां वाचं नातिवर्तेत, तत्प्रकर्षापकर्षानुविधानाभावानुषङ्गादिना । न
हि यथा बुद्धेः शक्तेश्च प्रकर्षे वाचः प्रकर्षोऽपकर्षे चापकर्षः प्रतीयते तथा दोषजातेरपि, तत्प्रकर्षे वाचोपकर्षात् तदपकर्षे एव तत्प्र-
कर्षात् यतो वक्तुर्दोषजातिरनुमीयेत । सत्यपि च रागादिदोषे कस्यचिद्बुद्धेर्यथार्थव्यवसायित्वादिगुणस्य सद्भावात् सत्यवाक्प्रवृत्तेरुपल-
म्भात् कस्यचित्तु वीतरागद्वेषस्यापि बुद्धेरयथार्थव्यवसायित्वादिदोषस्य भावे वितथवचनस्य दर्शनादिज्ञानगुणदोषाभ्यामेव वाग्वृत्तेर्गुण-
दोषवत्ता व्यवतिष्ठते, न पुनर्विवक्षातो दोषजातेर्वा । तदुक्तं 'विज्ञानगुणदोषाभ्यां वाग्वृत्तेर्गुणदोषता । वाञ्छन्तो वा न वक्तारः शास्त्राणां
मन्दबुद्धयः ॥ १ ॥" इति । ततः साधूपदिष्टं 'तदेतत् सर्वं शासनमुपपद्यते' इति । तदसिद्धेन न बाध्यते । प्रमाणतः सिद्धं प्रसिद्धम् ।
परेण कस्यचिदागमनं युक्तम् । विशेषणमेतत्परमतापेक्षम्, प्रसिद्धेनाप्यनित्यत्वाद्येकान्तधर्मेण बाधाऽसम्भवात् । तदनेकान्तशासनस्य
प्रत्यक्षतः सिद्धोऽस्त्यनित्यत्वधर्मो बाधकः, सर्वथा नित्यत्वादिधर्मवत् । अनुमानात्सिद्धो बाधक इति चेत्, नैवं प्रमाणात्प्रतिबन्धासिद्धेरभ्यु-
पगमात् । न खलु परेषां प्रत्यक्षमतिपूर्वयोः साध्यसाधनयोः साकल्येन व्याप्तिं प्रति समर्थम्, अविचारकत्वात्संनिहितविषयत्वाच्च ।
अस्मदादिप्रत्यक्षं हि साध्यसाधनयोर्व्याप्तिमात्रे परैरभ्युपगम्यते, न योगिप्रत्यक्षम्, अनुमानवैयर्थ्यप्रसङ्गात्, योगिप्रत्यक्षेण देशतः
कार्त्स्न्येन वा निरवशेषसाध्यसाधनव्यक्तिसाक्षात्करणे समारोपस्याप्यभावात् तद्व्यवच्छेदनार्थमप्यनुमानोपयोगायोगात् । तच्च निर्विकल्पकमिव

सविकल्पकमपि न विचारकं पूर्वापरपरामर्शशून्यत्वादभिलापसंसर्गरहितत्वात् । सन्निहितविषयं च, देशकालस्वभावविप्रकृष्टार्थागोचरत्वात् । ततः साकल्येन व्याप्तिग्रहणसमर्थम् । न चानुमानम् अनवस्थानुषङ्गात् । व्याप्तिग्राहिणोऽनुमानस्यापि व्याप्तिग्रहणपुरस्सरत्वात् व्याप्तेरप्यनुमानान्तरापेक्षत्वात् । क्वचिदप्यवस्थानाभावात् । एवमप्रसिद्धव्याप्तिकं च कथमनुमानमेकान्तवादिनामनित्यत्वाद्येकान्तधर्मस्य साधकं येन प्रमाणसिद्धः सर्वथैकान्तोऽनेकान्तशासनस्य बाधकः स्यात् ? स्याद्वादिनां तु परोक्षान्तर्भाविना तर्केण सम्बन्धो व्यवतिष्ठेत । तस्य विचारकत्वात्, प्रत्यक्षानुपलम्भसहकारिणो मतिज्ञानविशेषपरोक्षतर्कज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषादुपजायमानस्य यावान्कश्चिद्धूमः स सर्वोऽप्यग्निजन्माऽनग्निजन्मा वा न भवतीति शब्दयोजनासहितपरामर्शोऽस्मत्कालत्रयवर्तिसाध्यसाधनव्यक्तिविषयत्वाच्च व्याप्तिं प्रति समर्थत्वात्, प्रत्यक्षवद्व्याप्तिग्रहणपूर्वकत्वाभावादनुमानान्तरानपेक्षत्वादनवस्थानुषङ्गात्, संवादकत्वेन समारोपव्यवच्छेदकत्वेन च प्रमाणत्वात् । तदप्रमाणत्वे न लैङ्गिकं प्रमाणमिति शेषः, समारोपव्यवच्छेदाविशेषात् तर्केण सम्बन्धस्याधिगमे समारोपविरोधात् । न हि निर्विकल्पकोऽधिगमोऽस्ति यतस्तत्र समारोपोऽपि स्यात् । किं तर्हि ? अधिगमोऽपि व्यवसायात्मैव, तदनुत्पत्तौ सतोऽपि दर्शनस्य साधनान्तरापेक्षया सन्निधानाऽभेदात् सुषुप्तचैतन्यवत् । सन्निधानं हीन्द्रियार्थसन्निकर्षः । तत्स्वयमप्रमाणमाख्यत् तथागतः, साधनान्तरापेक्षित्वात् तस्यार्थपरिच्छित्तौ । तत एव दर्शनस्याप्रमाणत्वं, सुषुप्तचैतन्यवत् स्वयं संशयविपर्यासानध्यवसायाव्यवच्छेदकत्वात् । तद्व्यवच्छेदिनो निश्चयस्य जननात्प्रमाणं दर्शनमिति चेत्, तत एव सन्निकर्षः प्रमाणमस्तु । तस्यासाधकतमत्वान्न प्रमाणत्वमिति चेत्, कुतस्तस्यासाधकतमत्वम् ? अचेतनत्वाद्घटादिवदिति चेत्, दर्शनस्याप्यसाधकतमत्वं चेतनत्वात्सुषुप्तचैतन्यवत्किं न स्यात् ? यस्य भावेऽर्थः परिच्छिन्नो व्यवह्रियतेऽभावे चाऽपरिच्छिन्नस्तद्दर्शनं साधकतममिति चेत्, सन्निकर्षः साधकतमोऽस्तु, भावाभावयोस्तद्वत्ता साधकतमत्वमिति वचनात्।

मविकल्पकमपि न विचारकं पूर्वापरपरामर्शशून्यत्वादभिलापसंसर्गरहितत्वात् । सन्निहितविषयं च देशकालस्वभावविप्रकृष्टार्थागोचर त्वात् । तन्न प्रत्यक्षेण व्याप्तिग्रहणसमर्थम् । न चानुमानम् अनवस्थानुषङ्गात् । व्याप्तिग्राहिणोनुमानस्यापि व्याप्तिग्रहणपुरस्सरत्वात् तद्व्याप्तेरप्यनुमानान्तरापेक्षत्वात् । क्वचिदवस्थानाभावात् । एवमप्रसिद्धव्याप्तिकं च कथमनुमानमेकान्तवादिनामनित्यत्वाद्येकान्तधर्मस्य साधकं येन प्रमाणसिद्धः सर्वथैकान्तोऽनेकान्तशासनस्य बाधकः स्यात् ? स्याद्वादिनां तु परोक्षान्तर्भाविना तर्केण सम्बन्धो व्यवतिष्ठेत । तस्य विचारकत्वात् प्रत्यक्षानुपलम्भसहकारिणो मतिज्ञानविशेषपरोक्षतर्कज्ञानावरणवीर्यान्तरायक्षयोपशमविशेषादुपजायमानस्य यावान् कश्चिद्धूमः स सर्वोप्यग्निजन्माऽनग्निजन्मा वा न भवतीति सकलयोजनासहितपरामर्शात्मकत्वात्त्रिकालगोचरसाध्यसाधनव्याप्तिविषयत्वाच्च व्याप्तिं प्रति समर्थत्वात्, प्रत्यक्षवद् व्याप्तिग्रहणपूर्वकत्वाभावादनुमानान्तरानपेक्षत्वादनवस्थानानुषङ्गात्, स्वार्थकत्वेन समारोपव्यवच्छेदकत्वेन च प्रमाणत्वात् । तदप्रमाणत्वे न लैङ्गिकं प्रमाणमिति शेषः, समारोपव्यवच्छेदाविशेषात् तर्कवत् । अवग्रहस्याधिगमे समारोपविरोधात् । न हि निर्विकल्पकोधिगमोस्ति यतस्तत्र समारोपोपि स्यात् । किं तर्हि ? अधिगमोपि व्यवसायात्मैव, तदनुत्पत्तौ सतोपि दर्शनस्य साधकतमत्वापेक्षया सन्निधानाऽभेदात् सुषुप्तचैतन्यवत् । सन्निधानं हीन्द्रियार्थसन्निकर्षः । ततस्तदप्रमाणमास्थेयं तथागतैः, साधनान्तरापेक्षित्वात् तस्यार्थपरिच्छित्तौ । तत एव दर्शनस्याप्रमाणत्वं, सुषुप्तचैतन्यवत् स्वयं संशयविपर्यासानध्यवसायाव्यवच्छेदकत्वात् । तद्व्यवच्छेदिनो निश्चयस्य जनकत्वात् दर्शनमिति चेत्, तत एव सन्निकर्षः प्रमाणमस्तु । तस्यासाधकतमत्वान्न प्रमाणत्वमिति चेत्, कुतस्तस्यासाधकतमत्वम् ? अचेतनत्वाद्घटादिवदिति चेत् दर्शनस्याप्यसाधकतमत्वं चेतनस्यापि सुषुप्तचैतन्यवत्किं न स्यात् ? यस्य भावेर्थः परिच्छिन्नो व्यवहितश्चाभावे चाऽपरिच्छिन्नस्तद्दर्शनं साधकतममिति चेत्, सन्निकर्षः साधकतमोस्तु, भावाभावयोस्तद्वत्ता साधकतमत्वमिति वचनात् ।

इह दृष्टान्तावचन स्विति (१००–१–११) हेतुर्यद्यपि हेतुधर्मविशेषप्रमरिम्णैव इतरहेतुमत्त्वावलाभात् तथापि दृष्टान्तलाभे शाब्दसामग्री न व्याप्रियत इत्याक्षेपात् तल्लाभः सम्प्राप्याहारात शाब्दबोधे प्रवेश इति संक्षेपाच विरुध्यत इत्यनेनोच्यत इति विभावनीयं सुधीभिः। 'अन्यथानुपपन्नस्येत्यादि' (१००–१–१२) पक्षधर्मत्वादिपञ्चरूपोपपन्न एव हेतुरिति नैयायिकाः त्रिरूपोपपन्न इति सौगताः। अन्यथानुपपन्नैकलक्षणो हेतुरिति जैना इति विभागात् स्वाभीष्टचरमपक्षप्राधान्यं स्फोटयितुमित्यर्थः, चिद्विवर्तत्वात् (१००–२–१०) विसदृशाप्तकार्यत्वादिच्छादीनामपि चिदनुस्यूतत्वेन चैतन्योपादानकारणकत्वस्याभीष्टत्वादित्यर्थः। पूर्वचिद्व्याप्तक्षणोपमर्देनोत्तरचिद्व्याप्तक्षणोत्पत्तेः, परस्परं तेषामुपादानोपादेयभावस्य चार्वाकेणाभ्युपगमात्, न चैवंभूतोपादेयचैतन्यभावे भूतानामपि चिद्विवर्तत्वादायचैतन्यस्य भूतात्मकचैतन्योपादेयत्वेनार्थान्तरत्वम्, अचाक्षिप्तभूते घटादौ चैतन्याव्यभिचारेन चिद्विवर्तत्वेन भूतव्याप्त्यधीनैव प्रकृतोपपादनसम्भवात्, तस्य च तस्य विषयालोकमनस्कारादीनां परस्परसहभावनैयत्येऽपि नियतोपादानस्याभ्युपगमश्च दुष्कराभ्युपगममिति दिक्। जातिरेव (१०१ १ २) असदुत्तरमेव, अर्थान्तरत्वेन निग्रहस्थानमेव वा प्रकृतानुमानप्रतिकूलानभिधानेन परस्यैव पराजयादिति भावः। तत्त्वान्तरभावविरोध इति (१०१ १ ४) अत्र तत्त्वान्तरत्वं भिन्नपदार्थविभाजकोपाध्यवच्छिन्नत्वम्, पृथिव्यादिविवर्तमिति (१०१ १ ५) पृथिव्यादिः पृथिवीत्वाद्यवच्छिन्नो विवर्तः पर्यायो यस्य तथा, 'अनुपादानस्येति' (१०१–१–८) तथा च जन्यपृथिवीत्वाद्यवच्छिन्ने पृथिवीत्वादिना समवायिकारणत्वं नैयायिकाद्यभ्युपगतमकामेनापि चार्वाकेणावश्यमाश्रयणीयमित्यर्थः। स्याद्वादिना तु तादात्म्येन पृथिवीत्वाद्यवच्छिन्ने स्वध्वंसत्वसम्बन्धेन पृथिवीत्वादीना हेतुत्वं वाच्यम्, विभागजातोत्पत्तिस्थलेऽपि द्व्यणुका

इह दृष्टान्तावचनं स्थिति (१००-१-११) हेतुर्यद्यपि हेतुगर्भविशेषणमहिम्नैव हेतुहेतुमद्भावलाभात् तथापि दृष्टान्तलाभे शाब्दसामग्री न व्याप्रियत इत्याक्षेपात् तल्लाभः शब्दाप्यासहाराय शाब्दबोधे प्रवेश इति संक्षेपाय विरुच्यत इत्यनेनोच्यत इति विभावनीयं सुधीभिः । 'अन्यथानुपपन्नत्वेत्यादि' (१००-१-१३) पक्षधर्मत्वादिपञ्चरूपोपपन्न एव हेतुरिति नैयायिकाः त्रिरूपोपपन्न इति सौगताः । अन्यथानुपपत्त्येकलक्षणो हेतुरिति जैना इति विभागात् स्वाभीष्टपरमपक्षप्राधान्यं स्फोटयितुमित्यर्थः, चिद्विवर्तत्वात् (१००-२-१ ) चित्तमात्रकार्यत्वादिच्छादीनामपि चिदनुस्यूतत्वेन चैतन्योपादानकारणकत्वस्याभीष्टत्वादित्यर्थः । पूर्वचिदभ्यासक्रमोपगमेनोत्तरचिदभ्यासक्रमोऽस्यथे, परस्परं तेषामुपादानोपादेयभावस्य चार्वाकेणाभ्युपगमात्, न चैवंभूतोपादेयचैतन्यवादे भूतानामपि चिद्विवर्तत्वादाद्यचैतन्यस्य भूतसमकचैतन्योपादेयत्वेनार्थान्तरत्वम्, अवशिष्टभूते घटादौ चैतन्यावच्छेदेन चिद्विवर्तत्वेन भूतव्याप्त्यैनैव प्रकृतोपादानसम्भवात्, तत्त्वं च तस्य विषयालोकमनस्कारादीनां परस्परसहभावनैयत्येऽपि नियतोपादानत्वाभ्युपगमवच्च दुष्कराभ्युपगममिति दिक् । जातिरेव (१०१ १ २) असदुत्तरमेव, अर्थान्तरत्वेन निग्रहस्थानमेव वा प्रकृतानुमानप्रतिकूलानभिधानेन परस्यैव पराजयादिति भावः । तत्त्वान्तरभावविरोध इति (१०१ १ ४) अत्र तत्त्वान्तरत्वं भिन्नपदार्थविभाजकोपाध्यवच्छिन्नत्वम्, पृथिव्यादिविवर्तमिति (१०१ १ ५) पृथिव्यादिः पृथिवीत्वाद्यवच्छिन्नो विवर्तः पर्यायो यस्य तथा, 'अनुपादानस्येति' (१०१-१-८) तथा च जन्यपृथिवीत्वाद्यवच्छिन्ने पृथिवीत्वादिना समवायिकारणत्वं नैयायिकाद्यभ्युपगतमकामेनापि चार्वाकेणावश्यमाश्रयणीयमित्यर्थः । स्याद्वादिना तु तादात्म्येन पृथिवीत्वाद्यवच्छिन्ने स्वध्वंसत्वसम्बन्धेन पृथिवीत्वादीनां हेतुत्वं वाच्यम्, विभागजातोत्पत्तिस्थलेऽपि द्व्यणुका

दिग्धर्मरूपाया एव परमाणूस्तयो स्वीकारादिति युक्तं पश्यामः। 'शब्दादिरिति' (१ १-१-९) अनेनानुमानेन शब्दस्य भाषावर्गणोपादानत्वं विपुद्गलादेमान्याद्युपादानत्वं साधनीयमिति भावः। तयोर्भिन्नलक्षणत्वादिति (१०१-१-१२) भिन्नं लक्षणं तयोर्बहिरन्तर्मुखतया च प्रतीयमानत्वमेवेति द्रष्टव्यम्। तत एव भिन्नलक्षणत्वादेव सदाद्–अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चेति अस्मदादिभिस्त्वसत्त्वादिति असदादिनेकप्रतिपत्तृप्रत्यक्षत्वादित्यर्थः। तेन ज्ञाने न व्यभिचारः, घटादिवदिति न चैवं पटादावेव पक्षतावच्छेदकसाध्यसामानाधिकरण्यसिद्धेरनुमानवैफल्यमिति शङ्कनीयम्। पृथिवीतरेभ्यो भिद्यते इत्यत्रेव प्रकृते पक्षतावच्छेदकावच्छेदेन साध्यासिद्धेरभ्युपगमेन तदवैफल्यमित्यभिप्रायात्, न चोपचरितेति (१०१-२-५) अन्यथोपचरितधूमेन वाष्पादिना वह्न्यादेरपि व्यभिचारविप्लवोऽपि सकर्मकर्मारुन्तुदः स्यादिति भावः। स्वतो परिच्छिन्नेति यथा च प्रकृते बहिरर्थमयं स्वाभिन्नपरमेवेति भावः। स्वाभिन्नत्वमपि न स्वप्रतियोगिकभेदवत्त्वमात्रं परिच्छिन्न यावदिष्टत्वयोः, आद्ये स्वाभिन्नेन स्वभेदप्रसङ्गात्, अन्त्ये च क्वापि तदप्रसिद्धेः सत्त्वादिना भेदस्य कुम्भादावप्यभावात्, किन्तु स्वनिष्ठज्ञानत्वावच्छिन्नप्रतियोगिताकभेदवत्त्वम्, तच्च सुखादिसंवेदनापेक्षया सुखादावपि सिद्धम्, इति न तत्र बहिरर्थपरिच्छेदकत्वासिद्धिरित्याशयेनाह 'कुम्भादिवेदनस्यापीति (१०१-२-७) सुखादीति' सुखादेः कारणं सातवेदनीयकर्मोदयादिः, तत्संवेदनस्य कारणं च ज्ञानावरणकर्मक्षयोपशमादिः, इत्येवं कारणभेदादप्यनयोर्भेदो न केवलमास्वादनपरिच्छेदाकाररूपलक्षणभेदादिति भावः। 'तस्यैवेति' (१०१ २ १०) विषयनिर्मुक्तज्ञानानुभवाभावात्तदुपरक्तस्यैव तस्य स्वांशे स्वसंवेदकत्वं विषयांशे च परसंवेदकत्वमविरुद्धमिति भावः। अविरुद्धं पश्याम (१०२-१-५) इति ननु रूपमेतदविरुद्धं

प्रत्यक्षविषयताया इन्द्रियसन्निकर्षप्रयोज्यत्वेन ज्ञाने सन्निकृष्टघटाद्यर्थविषयस्योपपत्तावपि स्वविषयतानुपपत्तेः स्वविषयतायाः प्रत्यक्षत्वनियतताया अभ्युपगमाभावात्तस्याः प्रयोजकाभावादिति चेत्, न। प्रत्यक्षविषयतामात्रस्येन्द्रियसन्निकर्षप्रयोज्यत्वे मानाभावादसन्निकृष्टे वस्तुनि प्रत्यक्षविषयतायास्तत्र तत्रोपपादितत्वाच्छुक्तिसन्निकर्षेऽपि रजतविषयकप्रत्यक्षस्य सार्वजनीनत्वाच्चे न्द्रियसन्निकर्षघटादेरपि प्रत्यक्षविषयताप्रयोजकत्वाभ्युपगमे च तादात्म्येन ज्ञानस्यापि तत्त्वं किमिति न रोचयेः। ज्ञानस्य ज्ञानान्तरवेद्यत्वेऽनवस्थानात् ज्ञानमानसत्वे चाक्षुषादिसामग्र्यादेः प्रतिबन्धकत्वाकल्पनलाघवाच्च स्वसंवेद्यताया एव गुरुत्वादिति दिक्। 'विजातीयत्वाभिमतयोरिति' (१०२-१-९) सत्त्वादिना सजातीययोरपि जलानलयोर्जलत्वानलत्वाभ्यां विजातीययोर्यथा नोपादानोपादेयभावश्चार्वाकैरभ्युपगम्यते, तथाऽस्माभिर्भूतचैतन्ययोरिति साक्षात्पदविशेषस्योपादानोपादेयभावप्रयोजकत्वं चाभासमिति भावः। 'पार्थिवत्वादिनेति' (१०२ १ १०) नन्वेवं घटत्वपटत्वाद्यवच्छिन्ने कपालत्वतन्तुत्वादिना हेतुत्वं न स्यादिति चेत्, न। तथाहेतुत्वेऽपि ययोरुपादानोपादेयभावस्तयोः पदार्थविभाजकोपाधिना साक्षात्त्वमिति नियमस्याभङ्गात्। साक्षात्पदविशेषेण नियतारम्भस्य सुव्यवस्थितत्वात्, केचित्तु नास्त्येव पटत्वाद्यवच्छिन्ने तन्तुत्वादिना हेतुत्वमत एव त्वपि द्वितन्तुकपटादेस्तन्त्वन्तरसंयोगे पटोत्पत्तिर्घटते, एकैकतन्तुसंयोगे द्वितन्तुकादेर्नाशे त्रितन्तुकाद्युत्पत्तौ, पुनरेकैकतन्तुवियोगे त्रितन्तुकादिनाशे द्वितन्तुकाद्युत्पत्तिरिति कल्पनाया गौरवमासादितस्याहुः—'तदयुक्तम्, अनन्यथासिद्धान्वयव्यतिरेकानुविधानात् तथाहेतुत्वसिद्धेः त्रितन्तुकपटादेरपि तन्त्वादेवोत्पत्तिस्वीकारात् युगपत्तन्तुत्रयादिसंयोगे तन्त्वोरेव तदुत्पत्तेर्दर्शनात्, द्वितन्तुकादिक्रमेणोत्पन्नचतुरादितन्तुकपटस्य द्वितन्तुकासमवायिकारणसंयोगनाशाद् द्वितन्तुकादिनाशक्रमेण नाशोऽन्तरा पुन

साद्वितन्तुकादिमति त्रितन्तुकाद्युत्पत्तिर्निराबाधैव स्वोत्पत्त्यव्याप्यद्रव्यत्वावच्छिन्नाभावस्य हेतुत्वोपगमे तु द्वितन्तुकादिमति त
त्वन्तरादियोगादेकतन्तुकोत्पत्तेर्दुर्वारत्वापत्तेरित्याहुः॥ क्षमाश्रमणपूज्यपादानुसारिणस्तु चरमतन्तुसंयोगकाल एव क्रिय
मार्णं कृतमिति नयेन पटोत्पत्तिं स्वीकुर्वते, तत्प्राक्कालीनकार्यकोटिषु पटधीस्तु पटगताभिलाषोत्कर्षदोषाधयुक्तं घटमाश्रित्य
महाभाष्ये-" पइसमयकज्जकोडीणिरवेक्खो घडगयाहिलासो सि। पइसमयकज्जकोडिं धूलमइ घडमि लाए
सि ॥१॥" त्ति, एवं चैकः पट इत्यादेर्बोधस्य लोके शास्त्रे च व्यवहारस्य चोपपत्तिः, नहि नाना पटाः प्रतीयन्ते व्यवह्रियन्ते
न च चाक्षुषीभूततत्संयोगाद्यवच्छेदेन प्राप्यापनन्तरसंयोगानुपलब्ध्यादिवन् , साक्ष्यादित्रयाणानापटाद्यनुपलब्ध्युपपत्तिः, उभयत्रै
कयुक्त्यभावात्, महापटकाले द्वितन्तुकादेः स्वीकारे तन्त्वाकाशसंयोगादिवोऽनन्तद्वितन्तुकाकाशसंयोगादेर्द्वितन्तुकत्रितन्तुकादेः
परस्परकर्मजसंयोगद्वित्वत्रित्वादेर्वाप्याद्यनन्तसंयोगादेश्च कल्पनामपेक्ष्य तेषां नाशस्य क्वचिदन्येषां कल्पनस्यैव च लाघवे
नौचित्यात्, तन्त्वारम्भे द्रव्याभावस्य तु निरवच्छिन्नविशेषणतया हेतुत्वाद्देशावच्छेदेन पटाद्यभावसत्त्वेऽपि न दोषः। चक्षुरा
दिव्यवहारस्त्वेकस्मिन् हस्तयुगादिव्यवहारवदुपपादनीयः। एकतन्तुकाद्युत्पत्त्यनापत्तिस्तु निर्द्रव्यद्रव्यस्य विजातीयसंयोगेन
सन्यद्रव्यहेतुत्वादित्याहुः॥ 'सर्वेऽप्येते नयवादा वस्तुत 'एगसमयंमि एगदवियस्स च हुमा वि हुंति उप्पाया' इत्यादिपर्यालोचनया
संयोगविभागमानन्त्योत्पादतावभाक्षकिम्मीरितधौव्यैकस्वभावस्यस्त्वभ्युपगमादापेक्षिकानापेक्षिकनानापटपरिणामारम्भकतन्तूत्पा
दाभ्युपगमात्स्मार्क न काप्यनुपपत्तिः, एकस्मिन् पटे हस्तादिभेदेन नानापटव्यवहारस्यापि स्कन्धदेशप्रदेशकरूपद्रव्यविभागेनै
वोपपत्तेरुपादानता तु तत्र व्यवहारतस्तन्तुत्वादिना निश्चयतस्तुशक्तिविशेषेणेति तन्वोरिव द्वितन्त्वादेरपि न पटानुत्पत्तिः इत्थं च

पार्थिवत्वाविलाम्बुपादानोपादेयभावो नियतारम्भनपेऽन्यथा तु शक्तिविशेषेण जलादिपरमाणोरपि पार्थिवारम्भस्य बहुलमुप लम्भात्, पुद्गलपर्यायत्वावच्छिन्ने पुद्गलद्रव्यत्वेनोपादानोपादेयभावस्तु कल्पनीयोऽन्यथाऽसमानजातीयद्रव्यपर्यायमनुष्यादौ पुद्गलान्तर्विशेषानुपलम्भापत्तेः, इत्थमपि च चिदचितोर्मिथोपादानोपादेयत्वमप्यावृतमप्यासज्यपृथिवीधर्मत्वादिति दिक् । ' पूर्वाकारेति ' (१०२-१-११) द्रव्यार्थिकनयेनात्र देवादिपर्यायध्वंसविशिष्टात्मत्वेन तद्व्यवहितोत्तरपर्यायत्वेनोपादा-नोपादेयभावः, पर्यायार्थिकनयेन तु स्वध्वंसत्वसमनन्तर देवादिपर्यायस्य मनुष्यादिपर्यायत्वावच्छिन्ने तादात्म्येनेति विशेषो द्रष्टव्यः । तस्य तेनाव्याप्तिरिति भिन्नलक्षणत्वस्य तत्त्वान्तरभावेन सह व्याप्यव्यापकभावाभावइत्यर्थः । ' भवजननश क्तिसद्भावादिति ' ( १०२-१-१४ ) तथा च सामान्यविशेषेण भिन्नलक्षणत्वविरोधादित्यर्थः । ' इष्टप्रतिष्ठानादिति ' ( १०२-२-३ ) चैतन्यलक्षणस्यान्वयिन आत्मद्रव्यस्यैव सिद्धेर्विरामभ माधर्वनन्यायात्तस्य भूतनामकरणेऽपि चरस्वव्यापा तादित्यर्थः । तद्विधर्मत्वमसङ्गादिति ( १०२-२-३ ) सामान्यविशेषस्य विनिगमकस्यानभ्युपगमादित्यर्थः । कादा चित्कत्वादितो न विधर्मत्वं भविष्यतीत्यत आह-' अनाद्यनन्तत्वाविशेषादिति ' भूतचैतन्ययोरित्यर्थः । तथा चेच्छा मात्रेणोपादानोपादेयभावाभ्युपगमेऽतिप्रसङ्गो दुर्वार इति भावः । ' चैतन्यविशेष इति ' (१०२-१-६) अनावृतसर्वविष यकचैतन्य इत्यर्थः । न च कूटस्थनित्यात्मश्रुतिश्चैतन्यविशेषावस्थानाभ्युपगमविरोधिनीनिर्धर्मकत्वस्य कूटस्थपदार्थत्वे चित्स्व धर्मस्याप्युच्छेदापत्तेस्तस्याभयाभिभावव्याख्यात्मकत्वेऽनन्तविशेषाणामपि तथात्वसम्भवात् सामान्यप्रतिज्ञाव्याघाताभि-प्रायत्वस्यापि च कार्यचिन्तनविशेषैवोपपत्तेरिति, अनुमयेन ( १०३-१-९ ) पुद्गलनिष्ठप्रतिबिम्बादतबिम्बचैतन्यलक्षणेनेत्यर्थः ।

बुद्ध्यध्यवसित (१०३-१-१०) बुद्धिप्रतिबिम्बितम्, चेतयते (१०३-१-१०) निमिनोति, तदुपायानुष्ठानवैयर्थ्यमेव स्यादिति (१०३-१-११) सर्वमुक्त्योपायानां ध्यानमौनाचरणादीनां निरर्थकतैव स्यादित्यर्थः॥ 'स कोऽन्य इति' (१०३-२-२) एवेन दर्पणे मुखप्रतिबिम्बस्थानीयो सुखाकारमिति पुष्पोपरागो मुखरक्तवासंसर्गस्थानीयो घट इत्यादिर्विषयोपरागो बिम्बच-लनावेशस्थानीयः करोमीति व्यापारावेश इत्यंशत्रयकल्पनमपास्तम्। सम्बन्धसामान्यस्यातिप्रसञ्जकत्वात् सम्बन्धविशेषस्य च तादात्म्यातिरिक्तस्य युक्तिरिक्तत्वादमूर्तस्यात्मनः प्रतिबिम्बादिकल्पनाया बालक्रीडाप्रायत्वादिति द्रष्टव्यम्। न निषा पेन्त इति (१०४-१-१४) न च ज्ञानत्वाद्यवच्छिन्न एवान्तःकरणादिहेतुत्वात् मुक्तौ तदजन्यज्ञानाद्यनुपपत्तिरिति वक्तुं युक्तम्, परैरपीश्वरज्ञानादिव्याप्तये जन्यत्वस्य कार्यतावच्छेदककोटौ दानात् तस्य च ध्वंसप्रतियोगित्वरूपत्वात्, ध्वंसाप्रति योगिज्ञानादीनां मुक्तावनुपपत्त्यभावात्, न च जन्यत्वेन ज्ञानादीनां मुक्तावपि ध्वंस आवश्यक इति वाच्यम्। जन्यत्वेन ध्वंसहेतुत्वे मानाभावात् प्रतियोगिनो विशिष्य हेतुत्वेऽपि मुक्तज्ञानादीनां ध्वंसाहेतुत्वकल्पन एव लाघवात्, नचोपयोगस्य संसारदशा यामन्तर्मुहूर्तविकल्पनाश्यत्वदर्शना मुक्तावपि कालाभावप्रसङ्ग इति वाच्यम्। केवलज्ञानादीनां काठानाश्यत्वस्य तदुपयोग क्षायिकत्वे च प्रवाहतस्तदानन्त्यस्य सिद्धान्तसिद्धत्वादित्याद्यधिकमस्मत्कृतन्यायालोकादौ, अन्यत्र केवलेस्यापि (१०४-२-२) विशेषनिषेधस्य क्षेपास्यनुमाफलकत्वादौपशमिकादिभावमध्यपतितस्य चारित्रादेः क्षायिकभावस्यापि सिद्धिसमये नाश इत्यस्माद्वचनाल्लभ्यते यो यः क्षायिको भावः स स नाशाप्रतियोगीति नियमस्यानेनैवानिरासात्, केवलसम्यक्त्वाद्यन्य भवमात्रनाशेऽयोगिगुणस्थानचरमसमयस्य हेतुत्वात् क्षायिको भावः साद्यनन्त एवेति तु मतान्तरम्, तदाश्रयणे तु सिद्धा-

मिति चेद्, न। मूर्च्छाद्यवस्थायामप्युपजायमानदुःखनिवृत्तेरेव सुखहेतुत्वात्तस्याश्च मुक्तावप्यव्याहतत्वात्, तथापि सिद्धत्वमष्टकर्म क्षयजनितः साद्यनन्तः पारिणामिको भावः, सिद्धिसुखं च वेदनीयकर्मक्षयजनितम्, इति कथं भावो मुक्तिः सिद्धत्वमेवान न्तसुखमिति समनियतत्वेन चैक्याभ्युपगमे सिद्धगुणाष्टकोपवर्णकग्रन्थाघात इति सिद्धत्वग्रहणेऽप्यनन्तसुखाग्रहणान्न्यूनत्वदोषः प्रकृतस्यापरिहृत एवेति चेन्नैवम्, सिद्धत्वेनानन्तं सुखमुपलक्ष्यत इति न न्यूनत्वमित्यत्र तात्पर्यात्, अन्यत्रोपलक्षणत्वेनाविवक्षाया च प्रकर्तुः स्वतन्त्रेच्छत्वस्यैव परमत्वात्, अत एवोक्तं कण्ठरवेण विहितसहृदयाल्हादाः क्षमाश्रमणपादाः, " तत्तोदईमा- इआ भवर्ण च विविहपए समय। सम्मत्तनाणदंसणसुहसिद्धत्ताइ मोक्खे ॥१॥" इति, इत्यपर इति (१०४-२-७) तौतातित इत्यर्थः। तदाहुरुदयनाचार्याः "नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः" इति तौतातिता इति, सोऽपीति, मुक्त्यागमबा- धक तौतातितस्य, सुखमात्रस्यादृष्टजन्यत्वेन नित्यसुखे मानाभावादात्मरूपस्यैव सुखस्योपगमे तन्नित्यतया सुखनित्यत्वे संसारदशायामप्यात्माभिन्नतदभिव्यक्तौ मुक्तिप्रसंगाद्दुःखात्यन्तनिवृत्तेरेव नित्यसुखत्वप्रकारकाभिव्यक्तिहेतुत्वे विशेषणासिद्धया तस्याश्रमवनकल्पापत्तेरस्यार्थस्य निष्कर्षे नित्यस्य सुखस्याभिव्यक्तिर्नित्या वा सुखाभिव्यक्तिर्मोक्ष इत्यनुच्छिद्यमानसुखज्ञानधा रात्मकमोक्षवादिवीथीनिःक्रान्तत्वस्यैव पर्यायाद्विशेषपेशलमतिप्रपञ्चितस्य साम्राज्यापत्तेः, ग्रन्थादिदृष्टे तु साद्यनन्तं सुखं तादृशी तदभिव्यक्तिश्चेत्युभयमपि मुक्तौ प्रामाणिकम्, तदाह, ' तदनन्तं सुखमित्यादि ' (१०४-२-७) सातसंवेदनस्येति (१०४-२-९) सुखमात्रस्य स्वसंवेदनव्याप्यसाक्षात्त्वनियमेनासंवेद्यमानस्य सुखत्वविरोधादित्यर्थः। ते वेदान्तिनः, परमा त्मन इति (१०४-२-९) तस्यैव सच्चिदानन्दरूपत्वेन श्रुत्युक्तत्वादित्यर्थः। एवं सम्प्रधार्यम् (१०४-२-१०) एवं विचार

णीयम्। 'अन्यथा द्वैतप्रसङ्गादिति' (१०४-२-१२) सूत्रं यत्र येऽपुमयस्य वाग्रूपत्वादित्यर्थः। अथास्तुसम्यग्दर्शिरेव सूत्रं यत्रेति न द्वैतप्रसङ्ग इति यदि विभाव्यते, तदाऽश्वबुद्ध्याद्यपाऽनन्तगुणात्मस्वभावापस्थितिरूपमुक्तिवादेऽपि न द्वैतप्रसङ्गो भवि ष्यतीति सन्तोष्टव्यम्, मन्यतामिति (१०४-२-१४) योगधर्ममहिम्ना वातस्य सर्वविषयकज्ञानस्य नाशकाभावेनाकालमनुवृत्ते रित्यर्थः। न च तपोविशेषफलं सार्वज्ञ्यं शापानुग्रहादिसामर्थ्यवत् कस्यचिदेव, मुक्तिस्तु सर्वस्य नित्यसत्यचिदानन्दस्वरूपेण स्यपि चक्र युक्तम्। सार्वज्ञस्यात्मस्वभावतया व्यवस्थापितत्वात्तत्प्रतिबन्धककर्मक्षयस्य सर्वमुक्तसाधारणत्वात्तपोविशेषस्यापि प्रशस्तपर्यिना सार्वज्ञ्यसिद्धये क्रियमाणत्वाभावेति दिक्। सौगतमतमुपन्यस्य दूषयति येऽपीत्यादिना (१०४-२-१४) 'प्रदीपेत्यादि' (१०५-१-१) प्रदीपनिर्वाणोपमं ज्ञानस्य निर्वाणमित्येतन्मतं यथा युक्त्याभ्युपायेन च बाध्यते पूर्व- क्षणात उत्तरक्षणस्यप्रादुर्भावस्तदर्थिप्रवृत्त्यौपयिकयुक्तिवाधाभावस्य निर्हेतुकत्वाभ्युपगमेन कारणबाधाच्च तथा "निराश्रयचित्तसन्तत्या नोत्पत्तिर्मुक्तिः" इति मतमपि भावनानाश्रयविधानां बन्धमोक्षसामानाधिकरण्यानुरोधार्थमेकद्रव्यान्वयाभ्यपगमेनयत्वे केवल पर्यायोऽन्यक्रमस्यनुकूलयुक्तिवाधादाभयचित्तध्वंसरूपायास्तस्या निर्हेतुकत्वेनाभ्युपायबाधाच्च, तथा च मोक्षः पुरुषार्थो न स्यात् अनाश्रयचित्तक्षणेष्वेकं जातिमङ्गीकृत्य तदवच्छिन्ने परमाश्रयचित्तक्षणस्य हेतुत्वे स्वैकैकक्षणस्य कार्यकारणकोटिमध्यप्रवेशे विनिगमनाभावस्तत्क्षणस्य पूर्वापरतानियमे प्रकृष्यमाणम तादृशक्षणेऽयं कार्यकारणभावो व्यावहारिकस्त्वन्य एवेति न मोक्षार्थे मायासूनवीयक्षाणसिद्धदीक्षादिप्रवृत्त्यनुपपत्तिरिति चेत्, न। चिदात्मनः परिणामित्वमविद्यादिसम्बन्धाच्यमर्यान्तरं योग सामर्थ्यनाश्यं तन्मुक्तियोग्यता च व्यवहारतो मोक्षार्थिप्रवृत्तेः कथमप्यपन्नात्वचितयोपगमे च स्याद्वादिमतस्यैव साम्रा

न्यादित्यधिकं समर्थितमनेकान्तव्यवस्थायामस्माभिः । 'शरीरेणेति' (१०५-१-३) शरीरनिवृत्तिरूपे मोक्षे शरीरसद्भावस्थितत्त्वज्ञानस्य हेतुत्वायोगादित्यर्थः । साक्षादिति (१०५-१-४) साक्षात्काररूपम् अपरोक्षमिथ्याज्ञानेऽपरोक्षतत्त्वज्ञानस्यैव नाशकत्वादिन्दोषादौ तथा दर्शनादिति भावः । शरीराभावे (१०५-१-५) इति साक्षात्तत्त्वज्ञानस्य शरीरनिवृत्तिरूपमोक्षहेतुत्वे तदुत्पत्त्यनन्तरं तदभावस्य प्रसक्तापत्तेरिति भावः । ननु तत्त्वज्ञानस्य मिथ्याज्ञानादिनिवृत्तिद्वारा शरीरान्तरानुत्पत्तौ कारणता । तथा च न्यायसूत्रं द्वितीयं "दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति । न चोत्पन्नतत्त्वज्ञानस्य यावच्छरीरस्थिति नोपदेशविरोध इत्याशङ्क्य दूषयितुमाह, यदि पुनरित्यादिना (१०५-१-६) उपात्तशरीरस्यापीति (१०५-१-९) एकविंशतिभेदभिन्नदुःखनिवृत्तेरेव नैयायिकसाम्प्रदायिकैर्मोक्षत्वाभिधानादुक्तवचनस्य चार्थसिद्धक्रमाभिधानपरत्वादिति भावः । वस्तुतो "सुखदुःखध्वंसविशेषो मुक्तिः, इत्यप्युक्तमप्ययुक्तम्, उत्पन्नानुत्पन्नदुःखविकल्पग्रासेन तस्या अपुरुषार्थत्वादुत्पन्नस्य स्वत एव नाशादनुत्पन्नस्य च नाशयितुमशक्यत्वात्, न च परमदुःखमुत्पाद्यत्वज्ञानं समाश्रयतीति न मुक्तेरपुरुषार्थत्वमित्यपि युक्तम्, दुःखे प्रवृत्तेः कथमपि कस्याप्ययोगात्मत्वस्यार्थसमाजसिद्धत्वेन कार्यतावच्छेदकत्वात् सुखान्तमुक्तेरसम्भवप्रसङ्गाच्चेति दिक् । तथा चारित्रसहितमिति (१०५-२-३) ननु केवलज्ञानस्यैव यथाख्यातचारित्रस्य परनिःश्रेयसरूपफलजनने विलम्बस्तुल्य एव परमशुक्लध्यानरूपसमाधेरविलम्बेन तदुत्पत्त्युपगमे च तस्यैव परनिःश्रेयसहेतुत्वमुच्यतां किं ज्ञानचारित्रयोस्तत्कल्पनयेति चेत् न, अन्वयव्यतिरेकाभ्यामागमाच्च ज्ञानचारित्रयोः परनिःश्रेयसहेतुत्वसिद्धावुक्तसमाधेर्द्वारत्वकल्पनेनाविरोधात्, न च मिथ्याज्ञानवासनाया संसार

पीयम् । 'अन्यथा द्वैतप्रसङ्गादिति' (१०४–२–१२) सुखं प्रत्य चेत्सुखस्य आत्मरूपत्वादित्यर्थः । अथात्मसुखस्याविरेव सुख
प्रवेति न द्वैतप्रसङ्ग इति यदि विभाव्यते, तदाऽत्वुभ्यात्स्याऽनन्तगुणात्मस्वभावावस्थितिरूपमुक्तिवादेऽपि न द्वैतप्रसङ्गो भवि
ष्यतीति सन्तोष्टव्यम्, अन्यतामिति (१०४–२–१४) योगधर्ममहिम्ना जातस्य सर्वविषयकज्ञानस्य नाशकाभावेनाकालमनुवर्त्ते-
रित्यर्थः । न च तपोविशेषफलं सार्वज्ञ्यं शापानुग्रहादिसामर्थ्यवत् कस्यचिदेव, मुक्तिस्तु सर्वस्य नित्यसत्यचिदानन्दस्वरूपत्वे
स्यापि मर्त्तु युक्तम् । सार्वज्ञस्यात्मस्वभावताया व्यवस्थापितत्वात्तत्प्रतिबन्धककर्मक्षयस्य सर्वमुक्तसाधारणत्वात्तपोविशेषस्यापि
प्रत्याससर्विना सार्वज्ञ्यसिद्धये क्रियमाणत्वाच्चेति दिक् । सौगतमतमुपन्यस्य दूषयति येऽपीत्यादिना ( १०४–२–१४ )
' प्रदीपेत्यादि ' ( १०५–१–१ ) प्रदीपनिर्वाणोपमं शान्तस्य निर्वाणमित्येतन्मतं यथा पुरुषार्थ्युपायेन च साध्यते पूर्व-
पस्थाव उत्कृष्टमात्मप्राप्तेस्तदर्थिप्रवृत्त्यौपयिकयुक्तिबाधाभावस्य निर्हेतुकत्वाभ्युपगमेन कारणबाधात् तथा "निराश्रयचित्तसन्ता
नोत्पत्तिर्मुक्तिः" इति मतमपि आश्रयानाश्रयचित्तानां सन्तमोक्षसामानाधिकरण्यानुरोधार्थमेकत्र्यान्वयाश्रयत्वावश्यकत्वे केवल
पर्यायोरेकत्वपक्षप्रत्यनुकूलयुक्तिबाधाश्रयचित्तध्वंसरूपायास्तस्या निर्हेतुकत्वेनाभ्युपायबाधात्, तथा च मोक्षः पुरुषार्थो न स्यात्
अनाश्रयचित्तवन्मेयं मातिमङ्गीकृत्य तदवच्छिन्ने परमाश्रयचित्तक्षणस्य हेतुत्वे स्वैकक्षणस्य कार्यकारणकोटिमप्रवेशे
विनिगमनाभावस्तत्क्षणस पूर्वदृष्टानिमये प्रत्यक्षाभावम् तात्त्विकोऽयं कार्यकारणभावो व्यावहारिकस्त्वन्य एवेति न मोक्षार्थ
माघास्त्रमवीयमाशसिद्धदीक्षादिप्रत्यानुपपत्तिरिति चेत्, न । चिदात्मनः परिणामित्वमविद्यादिसम्बन्धाच्यमर्यान्तरं योग-
सामर्थ्येनाप्यं तन्मुक्तियोग्यता च व्यवहारतो मोक्षार्थिप्रवृत्तेः कथमप्यघटनात्वमितयोपगमे च स्याद्वादिमतस्यैव साम्रा

हेतुत्वात्तद्विरोधित्वज्ञानस्यैवोक्तसमाधिद्वारामुक्तिहेतुत्वमिति वाच्यम् । उक्तसमाधिरपि मुक्तिहेतुत्वकालान्तरभावित्वेन तत्रापि कर्मनिर्जराद्वारा ज्ञानस्य हेतुत्वं कल्पनीये तुल्यत्वेन ज्ञानकर्मणोस्तुल्यवत् समुच्चयपक्षोपगमेन ज्ञानवच्चारित्रस्यापि हेतुताया अपर्वनीयत्वात् । न च "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन" इति वचनात् सञ्चितकर्मनाशे ज्ञानमेव कारणं प्रारब्धनाशस्तु भोगादेव, क्रियमाणं तु योगिकर्ममिथ्याज्ञानवासनाभावाभावादनुत्पादकमिति न क्वापि चारित्रोपयोग इति वक्तनीयम्, ज्ञानाग्निरित्यादेर्ज्ञानस्तुतिमात्रपरत्वात्, सद्योपायस्यस्ये ज्ञानचारित्रयोः स्वस्वजन्यकर्मनाशे पृथग्धेतुत्वावश्यकत्वाद्विना चारित्र व्यापारमौपक्रमिककर्मोपभोगस्य कथमप्यनुपपत्तेः, सम्मतमाप्यमर्थः, "तमुक्तस्य यथा धर्मं यथा शास्त्रस्य कालिका । नश्यति क्रियया पुंसः पुद्गलस्य तथा मलम्" ॥१॥ इत्यादि वाशिष्ठग्रन्थादिनापि, नयवादास्तु तपःसंयमज्ञानानां मुक्तिहेतुत्वे भिन्नभिन्नरूपतयैव व्यवतिष्ठन्ते, तथा च पारमर्षम् । "तपसंजमो अणुमओ निग्गंथं पवयणं च ववहारे । सद्दुज्जुसुयाणं पुण निव्वाणं संजमो चेव" ॥१॥ अलमतिविस्तरेण, गुणानां (१०५–२–७) महदादिपरिणामानाम्, संसारोपपत्तेः (१०५–२–७) संसारसम्भवदर्शनात्, परेषां (१०५–२–८) सांख्यानाम् संवृत्त्या (१०५–२–८)उपचारमात्रेण, तत्कारणः (१०५–२–८) तन्मात्रकारणकः, तेन नोपक्रमोपसंहारविरोधः, कारणं चात्रोपादानरूपं ग्राह्यं तेन न वस्त्वभावव्याप्त्यनुपपत्तिः, सिद्धान्ते मिथ्यात्वाद्यविरत्यादिनानार्थसारोपादानाम्युपगमेऽपि तदविशिष्टात्मनः कारणस्यैकस्याभ्युपगमाद्, पर्यायार्थतया नानोपादानत्वस्य द्रव्यार्थतयैकोपादानत्वस्य चाविरोधादिति द्रष्टव्यम् । भाष्ये कैमर्थक्येति (१०६–१–२) मत्वर्थीयाया किमर्थेऽस्यर्थः । विशेषैर्विशेषणमेव द्रष्टव्यम् । तत्र सुमतादौ, साङ्कर्यम् (१०६–१–४) अन्यत्र परिदृष्टवार्तीयत्वम्, विविधाभिसन्निपाताद्

'अप्रतिसंविदिताकारेत्यादि' (१०७-१-३) इच्छायाः स्वसमानाधिकरणज्ञानविषयत्वनियमेनाज्ञातत्वसम्भव इत्यर्थः। नियमो तदनियम एवेति (१०७-१-११) वामादिप्रवृत्तेरिच्छापूर्वकत्वानियम एवेत्यर्थः। ननु वचनमात्रे विवक्षाया हेतुत्वाद्यभिप्रायो मविष्यतीत्यत आह, 'ततश्चैतन्येत्यादि' (१०७-१-१२) चैतन्यकरणपाटवे वाग्वचने प्रतिनियतो हेतुः, विवक्षा तु कण्ठाद्य मिघातजनकप्रवृत्तिजनकेच्छाजनकेष्टसाधनताज्ञानविषयस्येष्टतासम्भावनार्थं क्वचिदुपयुज्यमाना न नियतहेतुर्वचनहेतोः कण्ठा घमिघातस्य विनापीच्छां गोत्रस्खलनादावदृष्टविशेषादुपपत्तेस्तद्वदेव वीतरागस्याप्यनाकूतभावस्तीर्थकरनामकर्मोदयसामर्थ्या दुपपत्तेरिति निगर्वः। ननु शुभभावनाकृतवाग्दोषमहिम्नैव दर्शनादोषमावेऽभिप्रेतत्वं साधना च न निर्दोषस्य सर्वस्य तदुपपत्ति रित्याशङ्क्याह भाष्यकृद्, 'नचेत्यादि' (१०७-२-४) वाक्प्रकर्षापकर्षयोर्दोषजातिप्रकर्षापकर्षानुविधायित्वाभ तस्यास्त हेतुत्वमिति भावः। वाञ्छन्तो वेति (१०७-२-८) वा शब्दोऽप्यर्थः, वक्तुमित्यध्याहार्यम्। तथा च वक्तुं वाञ्छन्तोऽपि मन्दबुद्धयः शास्त्राणां वक्तारो न भवन्तीति विवक्षावचनेन नियतहेतुरिति निर्व्यूढं भाष्ये, वाचनमिति (१०७-२-१०) करणे नट् वाचकमित्यर्थः। परमतापेक्षमिति (१०७-२-१०) परमतत्वस्य वस्तुतः प्रसिद्धत्वाभावादित्यर्थः। परमतप्रसिद्धेनैका न्तनित्यत्वादिना स्याद्दृष्टमनेकान्ततत्त्वं न बाध्यते तत्प्रसिद्धेरप्रामाण्यशङ्काकलङ्कितत्वात्, स्वदिष्टतत्त्वे च विपर्यये व्याघात दण्डभयेनैव विरोधिशङ्कानुत्थानादिति निर्गलितोऽर्थः, 'तद्व्यवच्छेदनार्थमपीति' (१०७-२-१४) अयमर्थः हि सल क्षणविषयत्वेन प्रमाण्यम्, अनुमानं तु समारोपव्यवच्छेदकत्वेन च योगिप्रत्यक्षस्यानुमानमूलव्याप्तिग्राहकत्वाभ्युपगमे तत एव समारोपनिवृत्तौ क्वचिदनुमानप्रमाणप्रवर्तेतेत्यपेरर्थः, 'पूर्वापरेति (१०८-१-१) पूर्वं कारणमपरं कार्यं तयोः परामर्शस्तज्ज्ञान

मेव न पुनरेकात्मकं, सुखवेदनाद्याकारमाकारान्तरमेवबोधनाकारस्य विज्ञानसाम्यत्वात् चित्ररूपधर्माध्यासस्यान्यत्वसाधनत्वात् अन्यथा चित्रस्यैकत्वमसङ्गात् इति चेत्, चित्रज्ञानस्याप्येकात्मकत्वाभावप्रसङ्गात् पीताकारसंवेदनस्य नीलाद्याकारसंवेदनादन्यत्वात् यद् विरुद्धधर्माध्यासात्। यदि पुनरशक्यविवेचनत्वात्पीताद्याकारसंवेदनमेकात्मकमुररीक्रियते तदा सुखादिसंवेदनेन कोऽपराधः कृतः ? तस्याप्यशक्यविवेचनत्वादेकात्मकत्वोपपत्तेः पीताद्याकाराणामिव सुखाद्याकाराणां चैतन्यान्तरं नेतुमशक्यविवेचनत्वसद्भावात्। तदे-कात्मकमेव सुखादिचैतन्यं न पुनरसंकीर्णविक्षेपात्मकमित्यपि न मन्तव्यम् चित्रज्ञानस्याप्यसंकीर्णविक्षेपात्मकत्वाभावप्रसङ्गात्। तथा च सति न तच्चित्रमेकज्ञानवत्। चित्रज्ञाने पीताद्याकारप्रतिभासस्याविरोधोपकल्पितत्वादेकात्मकत्वमेव वास्तवमिति चेत्, कथमेकाने-काकारयोः प्रतिभासाविशेषेऽपि वास्तवेतरत्वमविवेकः ? एकाकारस्यानेकाकारेण विरोधात्तस्यावास्तवत्वे कथमेकाकारस्यैवावास्तवत्वं न स्यात् ? स्वप्नज्ञानेऽनेकाकारस्यावास्तवस्य प्रसिद्धेश्चित्रज्ञानेऽपि तस्यावास्तवत्वं युक्तं कल्पयितुमिति चेत्, केशाद्येकाकारस्याप्यवास्तवत्वसि-द्धेस्तत्रावास्तवत्वं कथमयुक्तम् ? पीताद्याकारस्य संवेदनाद्भेदेनैकत्वविरोधाद्भेदे प्रतिभासासम्भवात्, प्रतिभासे वा संवेदनान्तरस्यापत्ते-रवास्तवत्वमेवेति चेत् तत एकाकारस्यावास्तवत्वमस्तु तस्यापि पीताद्याकारप्रतिभासेभ्योऽनर्थान्तरतायामेकत्वविरोधादर्थान्तरतायां संविद्रूपाभावात् संविदो वा ज्ञानान्तरत्वमसंकीर्णविक्षेपाभावात्। ततो न चित्रज्ञानेऽनेकाकारप्रतिभासस्यैव भेदापत्तेरवास्तवत्वं शक्यं कल्पयितुम्, येनेदमेवाभिधीयमानं शोभेत ‘किं स्यात्सा चित्रतैकस्यां न स्यात्तस्यां मतावपि। यदीदं स्वयमर्थेभ्यो रोचते तत्र के वयम्” ॥१॥ इति। पुनरिदमपि, “किं नु स्यादेकता न स्यात्तस्यां चित्रमतावपि। यदीदं रोचते बुद्ध्यै चित्रायै तत्र के वयम्” ॥२॥ इति। ननु चैकस्यां मतौ चित्रतापायेऽपि संवेदनमात्रस्य भावात् स्वरूपस्य स्वतो गतिर्विरुद्ध्यते। संवेदनमात्रस्य त्वपाये सा विरुद्ध्येतेति चेत्, न,

सिद्धमिति चेत् न, तस्य प्रत्यक्षप्रसिद्धत्वात् । तथात्मा चेतनः, प्रमातृत्वात्, यस्त्वचेतनः स न प्रमाता, यथा घटादिः, प्रमाता चात्मा, तस्माच्चेतन इत्यनुमानाच्च तत्सिद्धम् । प्रमितिसमवायाच्चेतनासमवायाद्वात्मनि चेतनत्वसाधने सिद्धसाध्यतेति चेत्, न स्वयं सामान्यतश्चेतनत्वसाधनात् तदभावे चेतनाविशेषप्रमितिसमवायायोगात्पटादिवत् कथञ्चित्तादात्म्यस्यैव समवायस्य साधनात् । चेतनाद्यात्मनः कथमभिन्नाः सुखादयो भिन्नप्रतिभासविरोधादिति चेत्, न तत्र सर्वथा भिन्नप्रतिभासस्यासिद्धत्वात्, कथञ्चिद्भिन्नप्रतिभासस्य कथञ्चिदभेदेनाविरोधात्, चित्रज्ञानवदेव सुखाद्यात्मनः पुरुषस्यैकस्य घटनात्, सर्वेषामेकानेकात्मकाभिन्नज्ञानस्येष्टत्वात् । तत्सिद्धं चित्रज्ञानवत्कथञ्चित्सङ्कीर्णविशेषैकात्मनः सुखादिचैतन्यस्य प्रेक्षणं तथा धर्मसंस्थानाद्यात्मनः स्कन्धस्य च । न हि वर्णादीनामेव प्रेक्षणं प्रत्यक्षबुद्धौ, न पुनः स्कन्धस्यैकस्येति वक्तुमुपपन्नं सर्वाभावप्रसङ्गात्, स्कन्धव्यतिरेकेण वर्णादीनामनुपलम्भात् स्कन्धस्यैवासत्त्वात् । अथ 'प्रत्यासन्नासंसृष्टा रूपादिपरमाणवः प्रत्यक्षाः, तेषां स्वकारणसामग्रीवशात्प्रत्यक्षसविकल्पसमर्थानामेवोत्पत्तेः, स्कन्धस्यापि तत एव परेषां प्रत्यक्षतोपपत्तेरन्यथा सर्वस्कन्धानां प्रत्यक्षत्वप्रसङ्गात् स्कन्धत्वाविशेषात् । तदविशेषेऽपि केषाञ्चित्प्रत्यक्षत्वे परेषामप्रत्यक्षत्वमात्वे पिशाचशरीरादीनां तथा स्वकारणादुत्पत्तेः परमाणूनामपि केषाञ्चित्प्रत्यक्षत्वमन्येषामप्रत्यक्षत्वं तत एवास्तु, किमवयविपरिकल्पनया ? तस्याऽमूल्यदानक्रयित्वात् । स हि प्रत्यक्षे स्वात्मानं न समर्पयति प्रत्यक्षतां च स्वीकर्तुमिच्छतीत्यमूल्यदानक्रयी, विकल्पबुद्धावेव तस्य प्रतिभासनादिभावेमानस्य सर्वथानुपपन्नत्वात् इति मतं तदप्यसंगतमेव, प्रत्यासन्नासंसृष्टपरमाणूनां तथात्वेन कस्यचित्कदाचिदप्रतिभासनात् प्रत्यक्षतानुपपत्तेः स्कन्धस्यैव स्फुटमध्यक्षे प्रभासनात् तथा निश्चयनाच्च प्रत्यक्षत्वघटनात् । न च परमाणुवत्सर्वे स्कन्धाः समपरिमाणा एव, येन केषाञ्चित्प्रत्यक्षत्वे सर्वेषां प्रत्यक्षत्वसमापत्तिः स्यात् अणुमहत्त्वादिपरिणामभेदेन तेषामदृश्येतरस्वभावभेदप्रसिद्धेः । न

नायममूर्त्तस्थानकथी प्रत्यक्षे स्वसमर्थनेन प्रत्यक्षतास्वीकरणात्, सर्वथा विचार्यमाणस्यापि घटनात् । विचारयिष्यते चैतदुत्तरत्र ।

अपरः प्राह, स्कन्ध एव न वर्णादयस्ततोऽन्ये सन्ति, तस्यैव चक्षुरादिकरणभेदाद्वर्णादिभेदप्रतिभासनात्, किञ्चिदङ्गुलिपिहित नयनभेदाद्दीपकलिकाभेदप्रतिभासनवदिति तदप्यसम्यक्, सर्वथाप्यद्वैतप्रसङ्गात् । स्कन्धो हि वस्तु सत्येकः, न प्रत्यासत्यस्ततोऽर्थान्तरभूताः सन्ति, कल्पनाभेदादनेकप्रतिभासनादिति । न चैतद्युक्तमिति निवेदयिष्यते । तदभिन्नज्ञानवच्च केवलं सुखाद्याकारसमन्वितस्य प्रेक्षणं सिद्धम् । किं तर्हि ? वर्णसंस्थानाद्यात्मनः स्कन्धस्यापि । ततः सूक्तं न हि किञ्चिद्रूपान्तरविकलं सर्वैकान्तरूपमसर्वैकान्तरूपं वा, नित्यैकान्तरूपमनित्यैकान्तरूपं वा, अद्वैतैकान्तरूपं द्वैतैकान्तरूपं वा, संवेदनमन्यदन्यस्मिन्नयुक्तिमत्त्व संपश्यामो, यथा प्रतिज्ञायते सर्वथैकान्तवादिभिरिति । सामान्यविशेषैकात्मनः संवित्तिरेकान्तस्यानुपलब्धिर्वा सर्वतः सिद्धा चक्षुरादिमतामनादिवासनाद्वयकल्पनामस्तक्रम प्रतीति किं नः प्रमाणान्तरेण । न तावत्सामान्यैकान्तस्योपलब्धिर्विशेषस्याप्युपलब्धेः । नापि विशेषैकान्तस्य, सामान्यस्यापीक्षणात् । न सामान्यविशेषैकान्तयोरेव परस्परनिरपेक्षयोः, एकात्मनोऽप्युपलक्षणात् । न चैकात्मन एव सामान्यविशेषैकात्मनः, ततो व्यात्मन्तरस्य संवित्तेः । सर्वं हि वस्तु सामान्यं विशेषापेक्षया विशेषः सामान्यापेक्षया वाऽपोद्धारकल्पनायां, स्वरूपेण तु सामान्यविशेषात्मकमेकम् । तस्य संवित्तिश्चक्षुरादिमतामनादिवासनास्वक्रमपवि, चक्षुरादिविकल्पनामेव तत्संभवात् । एकान्तस्यानुपलब्धिर्वा तामसत्वमपवि नन एव । तथा हि । नास्ति सर्वथैकान्तः, सपक्षानेकान्तोपलब्धेरिति स्वभावविरुद्धोपलब्धिः, नास्ति सर्वथैकान्तोऽनुपलब्धेरिति स्वभावानुपलब्धिर्वा सर्वतमधुरादेः संवेदनासिद्धाऽप्यवसीयते । ननु च 'सर्वथैकान्तस्य कस्यचित्कदाचिदुपलब्धौ न सर्वत्र सर्वदा प्रतिषेधः सिद्ध्येत् । तस्यानुपलब्धौ नानेकान्तेन विरोधः, सत एव कस्यचित्केनचिद्विरोधप्रतीतेः । प्रतिषेधश्च न स्यात्, तत एव ।' इति कश्चि

प्रतिज्ञादिप्रयोगो न स्यात् इति विशेषाभावादेव तावती वादे च प्रतिज्ञादेरभिधानमनभिधानं चाभ्युपगन्तव्यमविशेषेणैव । ननु च प्रतिज्ञायाः प्रयोगेऽपि हेत्वादिवचनमन्तरेण साध्याप्रसिद्धेर्व्यर्था प्रतिज्ञा हेत्वादिवचनादेव च साध्यप्रसिद्धेर्निगमनादिवदकिञ्चित्कर मेवेति कश्चित् सोऽपि यत्सत्तत्सर्वं क्षणिकं, यथा घटः, संश्च शब्द इति त्रिलक्षणं हेतुमभिधाय यदि समर्थयते, कथमिव सन्धानविरोधे ?, स्वहेतुसमर्थनमन्तरेण तदभिधानेऽपि तदर्थाप्रतिपत्तेः । तदर्थप्रतिपत्तौ समर्थनं वा निगमनादिकं कथमतिरिच्येत ?, अकिञ्चित्करत्वा- विशेषात् यतः पराजयो न भवेत्, तावतागतस्य हेत्वाद्यभिधाने तत्समर्थनाभिधाने वा । हेत्वाद्यनभिधाने कस्य समर्थनमिति चेत्, तथा सन्धाया अनभिधाने क्व हेत्वादि प्रवर्तताम् ? गम्यमाने प्रतिज्ञाविषये प्रवर्तत इति चेत्, गम्यमानस्य हेत्वादेः समर्थनमस्तु । गम्यमानस्यापि हेत्वादेर्मन्दप्रतिपत्त्यर्थं वचनमिति चेत्, तथा सन्धावचने कोऽपरितोषः ?, स्यान्मतं, समर्थनं नाम हेतोः साध्येन व्याप्तिं प्रसाध्य धर्मिणि भावसाधनम् । यथा यत्सत् कृतकं वा तत्सर्वमनित्यं यथा घटादिः, सन् कृतको वा शब्द इति । सन् कृतको वा शब्दः, यश्चैवं स सर्वो नश्वरो यथा घटादिरिति वा, प्रयोगक्रमनियमाभावादिष्टार्थसिद्धेरन्यथाविशेषात्, प्राक् तस्य धर्मिणि प्रसाध्य साध- नस्य पश्चादपि साध्येन व्याप्तिप्रसाधनस्याविरोधात् । व्याप्तिप्रसाधनं पुनर्विपर्यये बाधकप्रमाणोपदर्शनम् । यदि पुनः सर्वं सत्कृतकं वा प्रतिक्षणविनाशि न स्यादित्येवं क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् । अर्थक्रियासामर्थ्यं सत्त्वलक्षणमतो व्यावृत्तमित्यसत्त्वमेव तस्मात् । सर्वसामर्थ्योपाख्याविरहलक्षणं हि निरूपाख्यमिति । एवं साधनस्य साध्यविपर्यये बाधकप्रमाणमुपदर्शने विरोधाभावात्तस्य विपक्षे भिन्ने दृष्टान्तदर्शनेऽपि सन् कृतको वा स्यादित्यस्याऽस्य विनिवृत्तिरेव शङ्कयाः । ततो व्यतिरेकस्य सन्देहादनैकान्तिको हेत्वाभासः स्यात् । न चार्थ- प्रमाणाद् व्यावृत्तिः, विप्रकृष्टेष्वर्थेष्वदर्शनस्याभावासाधनात्, अर्थान्तरेणैव सतामपि केषाञ्चिदनुपलम्भसम्भवात् । साध्ये पुनः

स्वप्रसक्तेः। प्रतिपाद्यानुरोधतः पक्षधर्मत्वादिवचनाम निग्रहप्राप्तिरिति चेत्, तथा निगमनादिवचनमात्रपि सा मा भूत्, सर्वथातिव्यास
स्यात्। यदि पुनरयं निर्बन्धः प्रतिपाद्यानुरोधतोऽप्यतिरिक्तवचनमसाधनाङ्गवचनं निग्रहस्थानमिति तदा सत्त्वमात्रेण नश्वरत्वसिद्ध्यनुरू
तिमत्त्वकृतकत्वादिवचनमतिरिक्तविशेषणोपादानात् कृतकत्वप्रयत्नानन्तरीयकत्वादिषु च कस्यचिदेकस्यासाधनाङ्गवचनं पराजयाय
प्रभवेत्। कश्चित्पक्षधर्मत्वप्रदर्शनं, सन्न शब्द इत्यविगानात्। यस्य निरुपाधि सत्त्वं प्रसिद्धं तं प्रति शुद्धः स्वभावहेतुः प्रयुज्यते,
यथा नश्वरः शब्दः सत्त्वादिति। यस्य समर्थोऽन्तरभूतविशेषणं सत्त्वं प्रसिद्धं तं प्रति सोऽन्तर्योऽन्तरभूतविशेषण एवोत्पत्तिमत्त्वादिति। यस्य
पुनरर्थान्तरभूतविशेषणं सत्त्वं संप्रसिद्धं तं प्रत्यर्थान्तरभूतविशेषण एव कृतकत्वादिति, "अपेक्षितपरव्यापारो हि भावः कृतक" इति
वचनात्। तथा कृतकत्वप्रयत्नानन्तरीयकत्वादित्यादिषु च स्वार्थिकस्य कमलकस्याभिधानमपि तादृशस्यमसिद्धत्वानुसारिणं प्रति नाति-
रिक्तमुच्यते, अन्यथाप्रयोगे तदपरितोषात्। तथा च यत्सत्तत्सर्वं क्षणिकं यथा घट इतीयता शब्देऽप्यविगानेन सत्त्वप्रतिपत्तावपि संश्च
शब्द इति पक्षधर्मप्रदर्शनं नातिरिक्तवचनं, तदन्तरेण तत्प्रतिपत्तुमशक्यं प्रति तद्वचनाद्वक्तव्यं प्रति तद्वचनात्, "विदुषां वाच्यो
हेतुरेव हि केवलः" इति वचनात्त पराजयाय कस्यचिदभवेत्, इति यदन्यः सौगताः प्रतिपाद्यानुरोधस्य साधर्म्यवचनेऽपि वैधर्म्य-
वचनं तद्वचनेऽपि च साधर्म्यवचनं पक्षादिवचनं वा नेच्छन्तीति किमपि महत्सुखम्। तथा तदिष्टौ वा तद्वचनं निग्रहाधिकरणमित्य
युक्तमेव व्यवतिष्ठते। किञ्च कश्चित्पक्षधर्मत्वप्रदर्शनं संश्च शब्द इत्यविगानात्, त्रिलक्षणवचनसमर्थनं च असाधनाङ्गवचनमपजय-
प्राप्तिरिति व्याहतं, संश्च शब्द इति वचनमन्तरेणापि शब्दे सत्त्वप्रतीतेस्तस्य निग्रहस्थानत्वप्रसङ्गात्। प्रतिज्ञावचनवत्साधनाङ्गत्वात्
स्थानिग्रहस्थानत्वे वा संगरवचनादेरप्यपजयप्राप्तिविरोधात्पक्षधर्मप्रदर्शनमसाध

(११७-१-१२) किं पुनरर्थ इत्यपेक्षायां । यदीदं भेदेनैकस्यां व्यक्तौ किं स्यात् । फलितमाह, न स्यात् तस्यां मतावपि (११७-१-१२) किं पुनरर्थ इत्यपेक्षायां । यदीदं नानाकारभ्रमजनकत्वं स्वयमनाद्यविद्योपकल्पितेभ्योऽर्थेभ्यो रोचते तत्र के वयं विचारका भवामः । न केवलाविद्यावि- तासनिबन्धो विचारस्यावसरत्वादिति भावः । 'किञ्चिदिति' तस्यां चित्रमतावपि (११७-१-१४) नु इति वितर्के एकत्वा कि स्यात्, फलितमाह, न स्यादनेकाकारविरोधादिति भावः । यदीदमनेकाकारविरुद्धैकत्वभ्रमजनकत्वं चित्रार्थे बुद्धये रोचते तत्र के वयं विचारका न केवल पर्यायार्थविरोधिद्रव्यार्थविद्यैकान्तस्य संवृत्युपकल्पितस्य विचारापरावर्तनीयत्वादिति भावः । कथितैकधेयनेति (११७-२ ३) नानेकत्वविषयकापेक्षाबुद्धयेवानेकत्वस्योत्पत्तेरभिव्यक्तेर्वा एतत्पक्षद्वयविचारोऽस्मत्कृ तनयामृततरङ्गिणीतोऽवसेयः । 'तथा सतीति' (११७-२ ५) अनेकत्वप्रयोजकापेक्षाबुद्धिहेतुत्वे नैकत्वसाधने संविदाकारवत् पीताद्याकारे प्रत्येकमेकत्वसिद्धौ तत्समूहाश्रयानेकचैतन्यदृष्टान्तेनैकत्राप्यनेकाकारसिद्धेरित्यर्थः । अन्तरिति (११७-२ ६) पञ्चम- समन्वय अन्वयस्तस्येत्यर्थः । नन्वनेकचैतन्यव्यापानेकाकारस्य चित्रज्ञानस्य दृष्टान्तत्वोक्तिरसङ्गतानेकाकाराणां स्वाश्रयाश्रित स्वरूपसंवलना(क्रिया)या एव चित्रत्वव्यवहारप्रयोजकत्वादिति चेत्, न, अत्र व्यवहारस्यासाध्यत्वात्कथञ्चिदेकानेकात्मकत्वस्यैव तत्त्वात्, हेतोश्च तत्र तथाबुद्धेरेवोपन्यासात्, सा च यथापेक्षया तथा साध्यमपीत्यदोषात्, नानाश्रयेषु नानाकारकचित्रत्व व्यवहारोऽपि सामान्यविषयोपपद्यत एवेत्यमेव पृथिव्यादौ नानारूपवत्त्वस्य धान्यराशौ च नानाधान्यत्वस्य व्यवहारो नानु पपन्न इति दिग् । चित्राद्वैतवादी संवेदनाद्वैतवादिनं प्रत्याह-'स्यान्मतमिति' (११७-२-७) 'तथानेकेनेति'(११७-२-९) एकदेशवचनादेवानेकत्वआशीयत्वस्य च सिद्धेरित्यर्थः । चित्रज्ञानप्रतिबन्ध्येवैतत् समाधत्ते, तदेतदित्यादि (११७-२ १०) अथ

न्छिभपीतायानेकाकारस्वभावमिवानवच्छिन्नसुखाकारस्वभावं ज्ञानमनुभूयमानं तयवाकाराणां व्याप्यवृत्तित्वमव्याप्यवृत्तित्वं च गृहय केनापि निषेद्धुं शक्यमिति भावः । अस्वसंवेद्यस्याप्रतीतेरिति (११८-१-१) सुखादीनामिति सम्बन्धः । 'चैतन्यविशेषेणेति' (११८-१-२) अनुभवेनेत्यर्थः । तस्योत्पत्तिमत्त्वाच्चैतन्यज्ञयमत्वाच, चैतन्यजीवद्रव्यार्थविशाविति (११८-१-२) चैतन्याभिन्नजीवद्रव्याभिन्नत्वेनार्पणादित्यर्थः । न चैवं ज्ञानमात्मैवात्मा तु ज्ञानद्वारा ज्ञानमन्यद्वारा त्वन्यदिति वचनात्, ज्ञानभिन्नसुखादिभिन्नजीवद्रव्याभिन्नत्वेनार्पणात् ज्ञानमप्यज्ञानं स्यादिति प्रष्टुनीयम् । ज्ञानभिन्नत्वेनार्पितस्य परम्परयापि ज्ञानेऽभेदार्पणानौचित्यात् परमभावग्राहकनयेन ज्ञानाभिन्नत्वस्यैवात्मनि प्रसिद्धेश्च, अतद्रूपाणा-(११८-१-९) मित्याद्यभिधानं सुखादीनां विज्ञानाभिन्नहेतुकत्वं मनुष्यते सौगतेन तत्किमुपादानापेक्षयोत सहकार्यपेक्षयेति विकल्पद्वय मनसि कृत्येति मन्तव्यम् । एवं सर्वथा कथञ्चित्पक्षाभ्यां यद्यपसम्पत्यापि तस्यैवं विचरणमिति न पौनरुक्त्यम्, व्यभिचारादिति (११८-१-१२) द्रव्येन्द्रियानिन्द्रियोपादेयपरिणाम एवेत्यर्थः । प्रत्येतव्या इति (११८-१-१४) नैयायिकादय इति शेषः । अनुमानं च तेषां सुखादयोऽचेतना ज्ञानभिन्नत्वात् घटवदिति द्रष्टव्यम् । अत्राचेतनत्वं यदि ज्ञानभिन्नत्वं तदा हेतुसाध्ययोरविशेषः । यदि च चैतन्यात् प्रविभक्तप्रदेशत्वरूपं तदा कठास्यपापसिद्धो हेतुरिति सुखस्य ज्ञानादन्यस्वरूपो भेदः प्रविभक्तप्रदेशस्वरूपमेवाभावभेदस्यनेकान्त एव श्रेयान् । अथ सुखस्य ज्ञानभिन्नत्व एव चन्दनादिविषयकत्वं युक्तं सुखोत्पत्त्यनन्तरं चन्दनादिज्ञानं कल्पयित्वा तदुपनीतमानात्मकसुखानुभवाभ्युपगमस्य मानससामग्रीविच्छेदेन निर्युक्तिकत्वात् । न च चन्दनसुखमनुभवामीत्यत्र चन्दनादिमत्ताविच्छेदको जातिविशेष एव सुखस्योपरि भासते । न तु चन्दनमिति वाच्यम् । तस्य सुखना-

दिजन्यतावच्छेदकतया तदुभयजन्ये शाब्दपादुभयजन्यतावच्छेदकात्मान्तराभ्युपगमे च तदवच्छिन्नोत्पत्तिकाले प्रत्येकजन्यकार्ये प्रसङ्गात् तत्कार्ये तदितरसन्निधानस्य प्रतिबन्धकत्वादिकल्पने च महागौरवादिति चेत्, न, एवं सति सुखस्य सविषयकत्वसिद्धावपीच्छाद्वेषयोरिव ज्ञानाभिन्नत्वे मानाभावात्, न च सुखस्य सविषयकत्वे विषयता द्विविधा प्रतिपत्त्यनुबन्धिनी व्यापारानुबन्धिनी च, प्रतिपत्तिस्वनिरूपकत्वं प्रतिपत्त्यनुबन्धिनीत्वम्, स्वजन्यप्रवृत्तिविषयिनिरूपितत्वं व्यापारानुबन्धिनीत्वम्, आद्या ज्ञाने द्वितीया च इच्छादाविति विभागव्याघातप्रसङ्ग इति वाच्यम्, प्राचीनैरेवैतस्य निर्युक्तिकविभागस्याभ्युपगमात्प्राचीनैरिच्छाद्वेषादेरपि सविषयकत्वस्वीकारेण तथानभ्युपगमात्, युक्तं चैतत् विशिष्टबुद्धौ विषयितया विशेषणवत्त्वेन विशिष्टवैशिष्ट्यबुद्धौ च विशेषणतावच्छेदकमावाप्रकारकत्वे सति प्रकारितया विशेषणतावच्छेदकवत्त्वेन हेतुत्वौचित्यात्, न चैवं संशयेऽप्यनुभवपूर्वसंस्कारादिशिष्टवैशिष्ट्यबुद्ध्यापत्तिः संस्कारजन्यतत्तद्विशिष्टवैशिष्ट्यप्रत्यक्षे उद्बोधकस्य हेतुत्वात्, न चैवमपि सामान्यकार्यापत्तिः संस्कारासन्नतत्तद्विशिष्टवैशिष्ट्यबोधेऽपि तत्तद्विशेषणज्ञानादीनां विशिष्यहेतुत्वात्, न चैवं सामान्यहेतुत्वं विफलम्, यत्रात्मनि शरीरे वा तादृशानुभवपूर्वसंस्कारस्तत्र तत्साफल्यात्, एतेन दण्डो रक्तो नवेति संशयाद्दण्डो रक्तो भवत्वितीच्छास्वीकारे रक्तदण्डवान् चैत्र इत्यादेरापत्तिरित्यप्यपास्तम् । स्वविशिष्टविशिष्यकारणतायाः कल्पनात् सामान्यहेतुतायामुक्तरीत्यैव साफल्यात् एवं च चन्दनादिविषयकसुखादेव तद्ज्ञाने चन्दनादिभानं सुघटम्, वैषयिकं च सुखं विषयावच्छिन्नाह्लादनत्वाख्यविषयताकं विषयातीतं च निरवच्छिन्नाह्लादनत्वाख्यविषयताकमित्यनयोः परिमितापरिमितत्वाभ्यां भेदः । अथ सुखस्य भिन्नज्ञानमात्रत्वकल्पने गौरवात् स्वप्रकाशत्वमेव युक्तम्, तथ [illegible]मिति चेत्, न । स्वप्रकाशत्वं विनापि तस्य

अप्यारोप्यमाणस्येति) (११०–२–१)
बोधयारमकत्वयोभयदोषापहारितया वा भावनीयम् । तस्यमशश्यमस्मत्कृतनयरहस्ये, अ
न नाप्रसिद्धस्यारोपोऽप्ययुक्तः कश्चित् प्रसिद्धस्यैव कश्चिदारोपादिति चेत्, न । सर्वथात्वेनैकान्तस्य प्रसिद्धस्यैवारोपात्तया
निषेधस्य युक्तिसिद्धत्वात्, व्युत्पादयिष्यते च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाऽदिरभाव उपरिष्टादिति मा त्वरिष्ठाः, अति
रिक्ताभावमनङ्गीकृत्याह, अथवेति (२) प्रयासमन्तरेणेति (३) अनेकान्तविधिनैव प्रत्यक्षसिद्धेन सर्वथैकान्तनिषेधव्यवहार
सिद्धेर्नाप्रसिद्धनिषेधोपपादनार्थं कश्चिदस्माकं प्रयास इति भावः । एवं चोक्तविधिनिषेधव्यवहारजनकत्वेन वस्तुन एव भावाभावो
भयरूपत्वादभावव्यवहारस्यैव सप्रतियोगिकत्वादभावप्रतियोगित्वस्याप्रसिद्धस्थले वक्तुमशक्यत्वेऽपि न कोऽपि दोष इति मन्त
व्यम् । ननु प्रत्यक्षादनुमानादेर्बलवत्त्वात्तदपेक्षा भविष्यतीत्यत आह भाष्यकृत्, 'नचेति' (११९–२–३) दृष्टमनुमानादिप्र
माणम्, दृष्टात् प्रत्यक्षात्, ज्येष्ठमुपजीव्यत्वेनोत्थम्, गरिष्ठं च समारोपविक्षेपव्यवच्छेदकत्वेन बलवत्, तदभावे (४) प्रत्यक्षा
भावे, प्रमाणान्तरस्यानुमानादेरप्रवृत्तेरप्रसरो, समारोपविच्छेदस्य च विक्षेपादपुनरुत्थानरूपविशेषदर्शनात् । कश्चिद-
नुमानानुत्तरकालमिति (११९–२–५) पर्वतो वह्निमानित्यनुमित्यनन्तरं पर्वतवह्न्योश्चक्षुःसन्निधाने यथा प्रत्यक्षस्यानु
त्पत्तेस्तत्र च विशेषज्ञानतयोक्तानुमितेरुपयोगादिति भावः । 'प्रत्यक्षस्येत्यादि' (८) तथा चानुमानत्वावच्छेदेन प्रत्यक्षोप
जीवकत्वादनुमानादेः सकाशात् प्रत्यक्षस्य ज्येष्ठत्वम्, प्रत्यक्षत्वावच्छेदेन चानुमानाद्यनुपजीवकत्वादनुमानादेः प्रत्यक्षात् कनि
ष्ठत्वमिति भावः । नन्वनुमानत्वावच्छेदेनापि न प्रत्यक्षोपजीवकत्वमस्ति स्मरणानुमानादिना व्याप्तिस्मृतिलिङ्गज्ञानाद्यो
प्रत्यक्षव्यापाराद्दर्शनादिति चेत्, न, । तत्रापि परम्परयाऽनुभवपदज्ञानाद्यपेक्षायां प्रत्यक्षानुसरणावश्यकत्वात्, ज्ञानकारणकप्रत्य

धमात्रे स्वार्थप्रत्यक्षोपजीवकत्वाभ्युपगमिधाराप, न चाप्यर्थप्रवृत्तिजनकानुमानस्याप्यद्वारा प्रत्यक्षमात्रे हेतुत्वादविशेषोऽव्याहार त्वविशेषणनिवेशनेन तद्दोषनिरासादिति बोध्यम्। 'नहि यादृशा इति' (११९-२-९) अनुमानादेः सामान्यविषय त्वात् सामान्यविषयकसमारोपनिरासनापि पुनस्तावर्तिवातीविविशेषविषयः स सम्यक् निरोद्धुं शक्यते, प्रत्यक्षस्य तु विशे षविषयत्वात् तत्समारोपोऽपि संभव इत्येवं समारोपविच्छेदविशेष्यहेतुत्वेन प्रत्यक्षस्येतरप्रमाणेभ्यो गरिष्ठत्वं भावनीयम्। स्वरूपतः समारोपविच्छेदविशेषेण तस्य गरिष्ठत्वं भावयित्वा व्यवहारतस्तेन तद्दर्शयितुमाह, 'दृष्टस्येत्यादि' (११९ २ १०) यदि स्मोति, प्रत्यक्षमेव हीत्यादि (११), 'स्वभावेति' (१२) स्वभावमेवप्रवर्धनमेव प्रयोजनं यस्य तथा, न चानेकान्ताय त्तसाधनमार्हतानां नोपपद्यतेत्यपि कथोपमाशङ्कनीयम्, अनेकान्तविषयप्रत्यक्षप्रामाण्य एव विप्रतिपन्नान् प्रति हेतुवादर मिकन् प्रत्येव वा हेतुवादेन तत्साधनस्य तत्र तत्रोपपादितत्वादिति दिग्, 'दोषाभावादिति (१२०-१-४) न धैकमविरोधेच्छेद् एव स्यादिति शङ्कनीयम्, स्वसाध्यसिद्धिप्रतिकूलस्वसाध्यसाधकातिरिक्तवचनस्यैवाधिकलक्षणत्वात्, 'परे गेति' (५) प्रतिवादिकृतस्वपक्षनिराकरणस्य परपराजयाप्रयोजकत्वात्परपक्षमात्रनिराकरणे चाधिक्यस्यापक्षपातित्वादुभय पक्षनिराकरणे च तुल्यवदुभयोः पराजयप्रसङ्गादित्यर्थः। एतदेवाह-' यदि पुनरित्यादिना (९)। साधनवचनसा मप्याज्ञानमिति (९) अन्यतरवचनसामर्थ्याज्ञाने उभयप्रयोगानुसरणासम्भवादर्थान्तरज्ञानसिद्धेरित्यर्थः। तदुक्तम् यतो वादिनः (१०) साधनवचनासामर्थ्याज्ञाने प्रकटयतः, तज्ज्ञाने (१०) वादिनिष्ठाज्ञानाविच्छेदकोक्तसामर्थ्यज्ञानम्

एकस्येति (१२०–१–१२) तथा च साध्यविपयविशिष्टज्ञानाज्ञानाभ्यामेव जयपराजयसिद्धेः किं साधनसामर्थ्यज्ञानाज्ञानाभ्याम्, नचायं समीचीनसाधनज्ञानवानयं चासम्यग्ज्ञानवानित्येतावत्तस्योपयोगेन भ्रमप्रमादिरूपा जयपराजयव्यक्तिर्न भवतीति, न च तदुपकल्पितं ज्ञानसिद्धेरेव जयपराजयप्रयोजकम्, अननुगतत्वसाहेतुत्वात्, पक्षसिद्ध्यसिद्ध्योरनुगतयोरेव तयोर्भवत्यादिति भावः। तदोपकल्पितं ज्ञानसिद्धेरिति (१४) जयः पराजयो वा स्यादित्यनेन योगः, वादिनः पक्षसिद्ध्या जयो वचनाधिक्यप्रयुक्तसाध माग्रे ज्ञानसिद्धेरिति (१४) जयः पराजयो वा स्यादित्यनेन योगः, वादिनः पक्षसिद्ध्या जयो वचनाधिक्यप्रयुक्तसाध नसामर्थ्याज्ञानात्पराजयः, प्रतिवादिनश्च दोषज्ञानाज्जयो गुणाज्ञानाच्च पराजयः स्यादित्यर्थः। न जयः पराजयो वा स्यादिति (१२०–२–१) परस्परविप्रतिषेधादित्यर्थः। समयबन्धाविघटकत्वादधिकं पराजयाधिकरणमित्याशङ्कते स्यान्मत मित्यादिना (२), समयबन्धेऽपि साधनदूषणाभिमाने एवोपक्रान्ते न स्वाधिकानधिकोद्भावने इति नायं पन्थाः प्रामाणिक इत्याशयवान् समाधत्ते तदप्यपेशलमित्यादिना (३), साधयेदिति साधनस्वरूपाज्ञानमिति (४) शेषः। तद्दूषण (५) इति, वचनाधिक्यं वचनेयत्ताव्याप्यमिति तज्ज्ञानात्सैव सिद्ध्यतु न तु साधनस्वरूपाज्ञानं तस्य तद्व्याप्यत्वादिति भावः। क्लिष्टमित्यनन्तरं यतस्त्वयाभ्युपगतं तत इति शेषः। अनर्थकस्यापीति (१०) अनिष्टसाधकत्वेन द्वेषविषयस्यापीत्यर्थः, वचनाधिक्यमात्रमिति (१०) मात्रपदेनोद्भावननिरासः, क्लिष्यत इति (१०) तथा च क्लिष्टोद्भावनेन पराजयः साध्य त इत्यर्थः। अपोद्भावनमिति (११) एकसाधनस्य साधनान्तरादुपकत्वादिति भावः। भवान् सौगतः, पक्षधर्मेव विति (१४) भावप्रधाननिर्देशात्पक्षधर्मत्ववदित्यर्थः। तदुभयस्यापीति (१४), सपक्षसत्त्वविपक्षव्यावृत्तिरूपसाधर्म्यवैधर्म्योभ यस्यापीत्यर्थः। त्रिरूपत्वप्रतिज्ञानादिति (१४) अबाधितविषयत्वासत्प्रतिपक्षत्वयोः प्रामाण्यमात्रसाधारण्येन हेतुरूपत्वा

नभ्युपगमादित्यर्थः । 'सुस्थिताविति' (१२१-१-२) बहुव्रीहिणा सुस्थितायामित्यर्थः । प्रसक्तेरिति (२) वादुकोक्तौ विरुद्धत्वाद्युद्भावन एव कृतार्थत्वाभिमाने सतो जयः स्वपरिगृहीतपक्षासिद्धौ च पराजय इत्येतदुभयं स्यादित्यर्थः । प्रतिपत्ति-विशेषप्रयोजनभेदात् पक्षप्रतिपक्षपरिग्रहवैयर्थ्यं व्यतिरेकेण प्ररूपयितुमाह 'नहीत्यादि(३)' तद्विघातहेतुत्वात् (४) स्वपक्ष-सिद्धिप्रतिपक्षसिद्ध्यननुकूलत्वात् 'प्रतिपाद्येत्यादि' (४) व्याप्त्यभिधानमात्राद् यस्य न साध्यसिद्धिस्तं प्रति प्रतिज्ञादिवचन-मप्यदुष्टं पुरुषविशेषं प्रत्यसिद्धस्येव ततः सिद्धेरित्थमेव प्रतिपाद्याद्याशयानुरूपप्रतिपत्तिविशेषसिद्धये पक्षप्रतिपक्षपरिग्रहः कथाया-मदुष्ट इति भावः । अत एव पञ्चावयवप्रयोगेऽपि यस्य न कण्टकोद्धारं विना साध्यप्रतिपत्तिस्तं प्रति दशावयवप्रयोगोऽपि कीर्ण नैयायिकैः स्वीक्रियत इति मन्तव्यम् । तत्रापि (११) वादेऽपि, तेषां वादकथानाम्, तादृशत्वात् प्रतिपाद्यविबोधनार्थं व्याप्तत्वात्, तत्र (१२) शास्त्रादौ, जिगीषवो न हि न प्रतिपाद्या (१२) न बोधनीयाः किन्तु प्रतिपाद्या एव, शास्त्रारूप-व्याख्यानमेव तत्र शिष्याणां विजिगीषुतया अपि सम्भवात्, यथा यथा वादं वादेन वर्धे तथा तथा पक्षमर्थं तदुभयं वा क्षमे इत्यादेः केशिमपेशिसम्बन्धे प्रसिद्धत्वादिति भावः । जिगीषुमात्रप्रतिपाद्यत्वे प्रतिज्ञाया अप्रयोगः स्यादित्यत्राह, 'शास्त्रा-दावित्यादि' (११) न स्यादिति (१२१-२-१) इत्यनन्तरं विभाव्यते तदेतद्विशेषा, कथमिवेति (१) किंरूपो, इत्यस्य प्रयोगः सम्यगुदाहरणोद्धृतया "आवर्जिता किञ्चिदिव स्तनाभ्याम्" इत्यत्र, कथं स यामतिपोते (२), न युक्तमेवेत्यर्थः । तावतार्थप्रतिपत्तावित्यादि(४), यथाऽस्माकं प्रतिज्ञानियमनाद्विवचनमधिकवचनस्याभिग्रहस्थाने स्वयं प्रतिपाद्यते तथा तथापि हेतोः समर्थनमधिकवचनस्याभिग्रहस्थानमापाति, साध्यसिद्धेर्विपक्षव्यावृत्तिलक्षणहेतोरेव भावादित्यर्थः । गम्यमान

इति (६) हेत्व नयित्वेन तात्पर्यविषयो गम्यमानः प्रतिज्ञार्थ एव हेत्वर्थेनान्वयीभविष्यतीति किं प्रतिज्ञावच्नोपन्यासेनेत्यर्थः। तथास धायघन इति (७) प्राञ्ची दीधितिन्यायादित्यर्थः। 'समर्थन नामेत्यादि (७)' ततो निगमनादीनतिरोल गय समर्थनमिति शेषेणान्वयः। 'साध्येनेत्यादि(७)' साध्येन सह व्याप्तिमत्तया प्रदर्शितस्यहेतोः, धर्मिणी भावसा धन (८) धार्मिणि साधितस्य हेतोः साध्येन सह व्याप्तिमत्ताप्रदर्शनमित्यत्र विना पौर्वापर्यं न कश्चिद्विशेषः, सः (९) क्रमयौग पद्यासत्वः, तावता (१२२-१-२) विपर्यये बाधकप्रमाणोपदर्शनेन, साधनधर्ममात्रान्वयः (२) बाधस्साधनाभयाभित्वं, अदर्शनमप्रमाणम् (३), अदर्शनमात्र क्षणिकत्वाभावस्य न साधकमित्यर्थः। अस्यैवायोगस्यैव, तेनेति (७) तेन कार मेन, अर्थस्य क्रमयौगपद्यलक्षणव्यापकधर्मानुपलम्भो नित्ये सत्त्वं बाधत इति सम्बन्धेन क्रमयौगपद्याभावस्य व्याप्तिः सिद्ध्यति बाधकप्रमाणेन च स्यात्सुपपन्नबाधाविना न विपर्ययपक्षेति नानुमानान्तरापेक्षयानवस्थेति भावः। प्रमाणाभ्यां (९) प्रत्यक्षानुपलम्भाभ्याम्, तद्धेतुष्विति (९)। ननु प्रकृतहेतुत्वग्राहे स्वहेतुत्वग्राहकापेक्षायामात्माश्रयोऽन्यहेतुत्वग्राहकापेक्षायाम न्योन्याश्रयादिकमिति। तद्धेतुष्वित्ययुक्तमभिधानमिति चेत्, न। समूहान्वयव्यतिरेकाभ्यां समूहे कारणत्वग्राहे तदितरगृहीत तत्कार्यकारणताकसमूहसत्त्वे यद्व्यतिरेकेऽवश्यं कार्यव्यतिरेकस्तावत्समूहसत्त्वे तत्सत्त्वे चावश्यं तत्कार्यसत्त्वमित्यन्वयव्य तिरेकयोर्ग्रहस्य विशिष्य तत्कारणत्वग्राहकत्वे दोषाभावात्। यत्तु, तत्तव्याप्याभिमाता यावतीषु व्यक्तिषु सतीषु तव्यापार यदवच्छिन्नाधिकरणक्षणोत्तर क्षणे यदवच्छिन्नाधिकरणत्वं तदवच्छिन्नं प्रति तदेव जनकत्वम्, आकाशाभावकाले रासभादेर्घटादावुभयसत्त्वात् सतीष्वेवेत्य-

विवेकेनेति(१२९-२ २)नास्त्यासरूपं प्रतिभासो यत्र तद्विवेकेनेति व्युत्पत्त्याऽयोग्यभेदेनेत्यर्थः। तेन प्रतियोगिप्रतियोगिभ्याम्वे तरयावत्प्रतियोग्युपलम्भकसमवधानरूपकारणान्तरसाकल्यरूपायां योग्यतायां प्राचीनाभिमतायामपरितुष्यन्नवीनसौगतः प्रति-योगिनः स्वरूपयोग्यतामविशेषयन् योग्यताया अननुगतत्वमाह, यत्परस्यापि व्यवस्थापकत्वसम्भवात्, तथा चात्र विचारयन्ति नैयायिकाः। केय योग्यानुपलब्धिरिन्द्रियसम्बद्धविशेषणताया अभावग्रहे सहकारिणी, न तावद् योग्यस्य प्रतियोगिनोऽनुप लब्धिर्जलपरमाणौ पृथिवीत्वाभावप्रहापत्तेः स्तम्भे पिशाचभेदग्रहानापत्तेश्च, नापि योग्येऽधिकरणे प्रतियोगिनोऽनुपलब्धिः सा, भूतले पिशाचात्यन्ताभावग्रहापत्तेः, परमाणौ महत्त्वाभावग्रहानापत्तेश्च, न चात्यन्ताभावग्रहे योग्यप्रतियोग्यनुपलब्धिरन्योन्या भावग्रहे च योग्येऽधिकरणे प्रतियोगितादात्म्यानुपलब्धिः सहकारिणीत्यपि साम्प्रतम्, जलपरमाणौ पृथिवीत्वात्यन्ताभावग्रहा पत्तेः, परमाणौ महत्त्वभेदग्रहस्य चाचाक्षुषत्वरूपभेदग्रहस्यानापत्तेश्चेष्टापत्तेश्चानुभवविरोधेन कर्तुमशक्यत्वादिति चेत्, योग्य सहकारिसम्पन्नानुपलब्धिः कारणम्, अत एवान्धकारे न घटाभावग्रहश्चक्षुषः तत्रालोकादिकरणसन्निकर्षस्य हेतुत्वात् न च जलपरमाणौ पृथिवीत्वाभावग्रहः योग्यसन्निकर्षाभावात्, इन्द्रियसन्निकृष्टमहत्त्वोद्भूतरूपवद्विशेषणताया एव पृथिवीत्वाभावग्रहे योग्यसन्निकर्षत्वात्, उद्भूतरूपाभावग्रहे त्विन्द्रियसन्निकृष्टमहत्त्ववद्विशेषणता योग्यः सन्निकर्षोऽतो मनसि न तद्ग्रहो भवति, भवति च महति वायौ, एवमन्यत्रापि सन्निकर्षयोग्यता कार्यवशादुन्नेया, पिशाचात्यन्ताभावस्त्वयोग्यत्वादेव न गृह्यते, का पुन-रत्यन्ताभावस्य योग्यता योग्यमात्रप्रतियोगिके योग्यधर्मावच्छिन्नप्रतियोगिताकत्वम्, एष च घटत्वाभावो न घटत्वत्वेन न वा जातित्वादीना प्रत्यक्षो घटत्वत्वजातित्वादेरतीन्द्रियघटितत्वादिति सर्वथैवाप्रत्यक्ष इति दीधितिकृतः। तच्चक्राक्रिरत्वेन घटत्वाद

तस्यापि स्वरूपयोगेन (४) स्वरूपेण सत्त्वे पररूपेण चाऽसत्त्वेऽनुभव एव साक्षीति भावः । न च प्रसिद्धेन पररूपेणासत्त्वमनु भूयतां न तु वन्ध्यापुत्रादिवदप्रसिद्धेनेति न यथिकल्पकान्तस्य स्वरूपेण सत्त्वे पररूपेणानेकान्तेनासत्त्वानुरोधादनेकान्ताभ्युपग मापत्तिरिति शङ्कनीयम् । स्थिरपक्षे च पर्यायमित्यादौ क्षणिकपक्षेऽपि चित्रज्ञानादौ भेदाभेदाद्यनेकान्तस्यानुभवसिद्धत्वेनासत्त्वा रोपविषयतयाऽपि तदुनिवारत्वस्यात्र तात्पर्यात्,एतेनासत्त्वस्यातिसिद्धेनानेकान्तरूपेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिकत्वादिना आरोपेऽपि न वस्तुसिद्धिरित्यपास्तम् । अनाश्रय (५) एकान्ताश्रयनिरासात् , तत (५) एकान्तनिरासात्, अनुष्ठान तपश्च र्यादि, एकान्तवादिनामिति शेषः । अभिमतरूपाघातकृत् स्वर्गापवर्गफलनिराकरिष्णुः स्यात्, सर्वेकान्ते दोषं दर्शयन्नसदे कान्तस्य व्याप्यतामाविष्कर्तुं पूर्वपक्षी ननु चेत्यादिना(९), क्रमेण इत्यादि पञ्चान्तग्रन्थस्य माभूत् (७) इत्यनेनान्वयः, सर्वथा सतस्तथघटनादिति (७) हेतुः । तथघटनाज्जन्माघटनात्, सर्वथासत्त्वं चाक्षणावस्थानुत्पत्त्यभावव्याप्यत्वेन दृष्टम् , ततस्तथात्वे उत्पत्तिर्न घटत इति भावः, कर्मविपाकात् (७) अपत्याभर्तृवित्तपशुस्वर्गादिकर्मणः, तत्त्वज्ञानाद्वेः (७) आत्मसाक्षात्कारादेः, आदिनामिथ्याज्ञाननिरासपरिग्रहः, तत्त्वज्ञानमपादिः कारणं यस्मादिति वा, वाक्ये मतद्वयाभिप्रायस्सर्वः, केचित् स्वाङ्ग कर्मण एव मुक्तिमिच्छन्ति, अपरे च तत्त्वज्ञानादेवेति । तस्य (८) कर्मादेः, ततः (८) कायादिव्यापारादेः, प्रागसत (८) इति, कार णादि (८) । उभयत्र भवसंस्कृत्ययोः । प्रतीत्यप्रतिभासानुपरमप्रसङ्गादिति, (९), असतो निरुपाख्येन पदार्थत्वभाव मतयोरसत्त्वानुत्पन्नत्वप्रभोग्यादिति भावः । तेषां (१२) प्रतीत्यविभासानाम्, अभावैकान्ते (११-१-१) माध्यमिकमते

दर्त एव योगाचारसौत्रान्तिकमतयोरप्यतिदिशति भाष्यकृत्—न केवलमित्यादि । न केवलं स्वभावनैरात्म्ये तस्योप-
दर्शितः योगाचारस्यान्वयादि माध्यमिकमते (२) स्वभावशून्यस्य पदार्थस्य घटनान्तरोक्तो दोषः । किन्त्वन्यतत्त्ववादिनो योगाचारस्यान्वयादि-
त्वानादिनः सौत्रान्तिकस्य च मते, निरन्वयसत्त्वेऽपि क्षणस्थितिमात्रनिरन्वयसत्त्वाङ्गीकारेऽप्ययं दोषस्तदवस्थ एवेत्य
र्थः । 'कार्यकालमिति' (५) कारणस्य कार्यसद्भावव्याप्यतायाः सामग्र्याश्च स्वकाले कार्योत्पत्तिव्याप्यतायाः न्या
यत्वात् व्यवहितोत्तरक्षणप्रवेशे गौरवादिति भावः । प्रसङ्गादिति (६) न चेष्टापत्तिः, सव्येतरगोविषाणयोः कार्यकारणभा
वस्य सर्वैरनभ्युपगमादिति भावः । तत्कारणत्वसाधनात्तत्र (७) कार्येऽकारणत्वसाधनात्, अन्यकार्यवदन्यकार्य इव,
सत्य वा प्रकृतकार्यस्य, तत्कार्यत्वसिद्धेः प्रकृतकारणाकार्यत्वसिद्धेः । तद्वत्( ) अन्यकार्यस्येव, तदनन्तरं सामग्रीप्रविष्टस्य
व्यवहितोत्तरक्षणे, सम्भवति समीचीनतया घटते, एककारणस्य कार्योत्पत्त्यव्याप्यत्वादिति द्रष्टव्यम् । अत्राप्यव्यवहितत्वम
नतिप्रयोजनमित्यभिप्रेत्याह भाष्यकृत्, 'कालान्तरेऽपीति' (८) त्वन्यतो यदव्यवहितस्वभावः पूर्वमासीत्पश्चादुत्पत्तौ तु
कारणकार्यशरीरघटकत्वमयं वाच्ये, अन्यथा समानक्षणवर्तिनां सर्वेषां कार्यकारणत्वप्रसङ्गादित्याशयवानाह, 'कालान्तरेऽ
पीति (८),' इत्युपलक्षणं स्वभावस्यापि कालान्तरीयत्वाव्यवधाने हेतुतायाः प्रकारेणाभ्युपगमादिति द्रष्टव्यम्। एवमभ्युपगमे
क्षणिकत्वसाधकयुक्तिर्विरुध्यत इति दूषणमाह, समर्थे सत्य भवत इत्यादि (९),कालनियमकल्पनायामिति(११)यत्काले
यज्जननसमर्थं यदस्काले तत्सदुत्पत्तिरिति स्वभावकल्पनायां बौद्धेन क्रियमाणायामित्यर्थः । समानः परिहार इति (११)
स्थिरपक्षेऽपि कारणान्तरसाहित्येनैव कार्योत्पादकत्वस्वभावस्य कारणे कल्पनेन समर्थासमर्थत्वाभ्यां भेदाभावादित्यर्थः । न

नस्य प्रत्यक्षेणाभावस्याधिकरणरूपस्याविषयीकृते संविद्रूपतयेति(१०), उपपत्ति 'तथेत्यादि'(११), तथा ग्राह्यग्राहकाकार
विविक्तक्षणिकज्ञानस्येन, सकृदप्येकवारमपि, अप्रतिभासनात् प्रमाणीतयत् वेदान्त्यभिमतसकलप्रपञ्चविनिर्मुक्तपरब्रह्मवत्,
तेऽपि हि प्रपञ्चरहितब्रह्मविषयं विचारसाध्यं महावाक्यजन्यं प्रत्यक्षं स्वीकुर्वत एव धर्मोऽत्युत्कर्षपरमकाष्ठाप्राप्ते शून्यप्रत्यक्षमिति
माया। अद्वैतप्रत्यक्षं मिथ्या क्षणिकज्ञानाद्वैतप्रत्यक्षं सत्यमिति तु स्ववासनामात्रम्, कुतस्यानतिशायित्वमिति(१२२ १-२)
य एव नित्यैकान्तपक्षे दोषास्त एव क्षणिकपक्षेऽपीति भावः। किञ्च करणाक्रमयोस्तज्जातीयस्य सतः सहकारिलाभालाभौ तन्त्रमि
त्यभ्युपगमे क्षणिकत्वं सिध्येत्, स चेत्कार्यव्यापिरूपस्तद्यं तावनादृश्य कारणगतपेक्षास्यकल्पनमप्रामाणिकमन्यथा कार
मयस्कार्येऽपि किञ्चिद्वैलक्षण्यं स्यात्, यद्वा कारणापेक्षा स्यात्तु दृष्टमात्रीयस्येति यद्वा न नियतप्रत्यक्षसिद्धिरेव चाक्षुषेरपि
धूमसम्भावनया गतं कार्यलिङ्गकेन सङ्कीर्यते च कारणगता कुर्वद्रूपत्वाख्या विधिरूपा व्यावृत्तिरूपा वा जातिर्दुर्ज्ञत्वाद्विना
परस्परपरिहारस्थयोश्च समावेशे मोत्ताश्वत्वयोरपि तथाभावप्रसङ्ग इति गतमनुपलम्भलिङ्गकेनापि क्वचिदपि विरोधासिद्धेस्ततो
विषये चाक्षुमाभावात् स्वभावहेतुरप्यपास्तः। अथास्ति तथा हि वृक्षजनकपत्रकाम्पाद्यन्तर्भूता शिंशपासामग्री सा वृक्षत्वस-
विषस्य भवन्ती स्वकारणमेवातिपत्तेदिति चेत्, तर्हि शिंशपासामग्र्यन्तर्भूता चलत्वादिसामग्री शाखातिपत्य चलरूपता भवन्ती
स्वकारणमेवातिपत्तेदिति तुल्यम्, नोदनाद्यागन्तुकनिबन्धन चलत्वं न तद्विशेषमात्राधीनमिति चेत्, यदि नोदनादयः स्वभा
प्रभूतास्तदा तद्विशेषा एव, अथास्वभावभूतास्ततः सहकारिण एव, तथा च तास्तानासाद्य निर्विशेषैव शिंशपा चलस्वभावस्य
मारमत इति कुतः क्षणिकत्वसिद्धिः, स्वभावभूता एवागन्तुकसहकार्यनुप्रवेशाक्षपन्तीति चेत्, तर्हि वृक्षसामग्र्यामागन्तुकसह

पर्यनुप्रवेशादेव शिंशपापि जायत इति न कश्चिद्विशेषः । एवमेतत्, किन्तु शिंशपाजनकास्तरुसामग्रीमुपादायैव चलनखन कास्तु न तामेव किन्तु मूर्छमात्रं समादर्शनाविति चेत्, तर्हि शिंशपाया वृक्षविशेषत्वाविशेषे कौतस्कुतोऽयं फल प्रत्येकान्वाने-कान्तविशेषः । तत्तत्सहकारिमायाभावकृतः स इति चेत्, तर्वासामितसहकारिमोऽसहरूपा अपि केचित्सहकारिणोऽनी दृशास्तु न तथेति तथा तादृग्वेति न कश्चिद्विशेष इति स्यादिति कृत्वा क्षणिकत्वं चैतन्यात्म्युगमे च कुतोऽनुमानवार्ता माभू दनुमानमिति चेत्, तर्हि तेन विना कुतस्तत्सिद्धयेत्, न हि क्षणिकत्वे प्रत्यक्षमस्ति तथानिश्चयाभावात्, गृहीतनिश्चित एवार्थे तस्य प्रामाण्यात्, अन्यथातिप्रसङ्गादिति कृत्वा चोक्तमुक्तिस्तवादुदयनाचार्यैः—" न चैतात्म्यं विना तत्स्याच्च तत्सिद्धनु मा भवेत् ॥ न विना तेन तत्सिद्धिर्नाध्यक्षं निश्चयं विनेति ॥ १ ॥ " ॥ ८ ॥

**भावैकान्ते पदार्थानामभावानामपह्नवात् । सर्वात्मकमनाद्यन्तमस्वरूपमतावकम् ॥ ९ ॥**

पदार्थाः प्रकृत्यादीनि पञ्चविंशतितत्त्वानि । "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥१॥" इति वचनात् । तेषामस्तित्वमेवेति निश्चयो भावैकान्तः । तस्मिन्नभ्युपगम्यमाने सर्वेषामितरेतराभावादीनामभावानामपह्नवः स्यात् । तथा सर्वात्मकत्वादिप्रसङ्गः । तत्र व्यक्ताव्यक्तयोरन्योन्याभावस्यापह्नवे व्यक्ताव्यक्तयोरपि सर्वात्मकत्वम् । तथा च । "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम् ॥१॥" इति व्यक्ताव्यक्तलक्षणभेदकथनविरोधः । प्रकृतिपुरुषयोरन्योन्याभावनिह्नवे प्रकृतेः पुरुषात्मकत्वे सर्वात्मकत्वमेव । तथा च "त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि । व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान् ॥१॥" इति तद्भेदकथनमव्याघातः । प्रागभावस्यापह्नवे महदहङ्कारादे

विकारस्यानादित्वप्रसङ्गात्। तथा च "प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः। तस्मादपि षोडशकात् पञ्चभ्यः पञ्च भूतानि ॥१॥" इति
सृष्टिक्रमकथनं विप्रतिषिध्यते। प्रध्वंसाभावस्यापह्नवे तस्यानन्तत्वप्रसङ्गात्, पृथिव्यादीनि पञ्च महाभूतानि पञ्चसु तन्मात्रेषु लीयन्ते—
पृथिव्या गन्धरूपरसस्पर्शशब्दतन्मात्रेषु प्रवेशात्, सलिलस्य रसादिषु, तेजसो रूपादिषु, वायोः स्पर्शशब्दतन्मात्रयोः, आकाशस्य शब्द-
तन्मात्रेऽनुप्रवेशात् तन्मात्राणां च पञ्चानां बुद्धीन्द्रियाणां कर्मेन्द्रियाणां च मनसा सह षोडशकस्य गणस्याहङ्कारेऽन्तर्भावस्तस्य च महति
महतः प्रकृताविति संहारनिवेदनमतिव्याकुलं स्यात्। ततः सर्वमसद्रूपं, स्वेनासाधारणेन रूपेण कस्यचित्तत्त्वस्य व्यवस्थानाघटनात्।
तत्र 'सर्वस्योभयरूपत्वे तद्विशेषनिराकृतेः। चोदितो दधि खादेति किमुष्ट्रं नाभिधावति ॥१॥" इति दूषणासञ्जनमबाधकं मतम्, न तत्र भग-
वतोक्तः कथञ्चिद्भावापह्नवाभावात्। ननु च व्यक्ताव्यक्तयोरितरेतराभावस्य तत्त्वभावस्य प्रकृतिपुरुषयोरत्यन्ताभावस्य च तद्रूपस्य
महदहङ्कारादीनां प्रागभावस्य च स्वकारणत्वभावस्य महाभूतादीनां प्रध्वंसाभावस्य च स्वान्तर्भावाभावस्वरूपस्य सांख्यैरभ्युपगमाद्भावाभा-
वात्मप्रसिद्धेः कथं सर्वात्मकत्वादिदोष इति चेत्, न, तथा भावैकान्तविरोधात् सर्वस्य भावाभावात्मकत्वप्रसक्तेः। न हि वयमपि भावा-
दर्थान्तरमेवाभावं संगिरामहे, तस्य नीरूपत्वप्रसङ्गात्, नास्तीति प्रत्ययजनकस्वरूपसद्भावाद्भावस्य नीरूपत्वाभावोपगमे तस्य भावस्वभा-
वत्वसिद्धेः प्रत्ययाभिधानविषयस्यार्थक्रियाकारिणः पदार्थस्य भावस्वभावत्वप्रतिज्ञानात्, नास्तित्वस्य वस्तुधर्मत्वादस्तित्ववत्। वस्तुनोऽ-
स्तीति प्रत्ययविषयो हि पर्यायोऽस्तित्वं, नास्तीति प्रत्ययविषयस्तु नास्तित्वम्। भिन्नयोः सद्द्रव्यैकान्तपक्षे सर्वात्मकत्वादिदोषानुषङ्गः कथं
परिहर्तुं शक्यः ?, सर्वविवर्तात्मकस्यैकस्यानाद्यनन्तस्य प्रधानस्येष्टत्वात् तद्व्यतिरेकेण सकलविशेषाणां तत्त्वतोऽसम्भवादसिद्धसाधनमिति
चेत् न, प्रकृतिपुरुषयोरपि विशेषाभावप्रसङ्गात्, सत्ताव्यतिरेकेण तयोरप्रतिभासनात्सत्ताद्वैतप्रसङ्गात्। तथैवास्तु, चेतनेतरविशेषाणाम

गृहामीति प्रत्यवासिति चेत्, न तस्य भूतकालिभावविषयत्वात्। अभावदृष्टौ हि तदवसायकारणाभावादभावदर्शनमनवसरं प्राप्नोति कथमो-
न्यपररूपाभावप्रतिपत्तावेवोपक्षीणशक्तिकत्वप्रसङ्गात्। प्रत्यक्षस्य कचिदभावविषया स्मर्यमाणस्य घटस्याभावप्रतिपत्तौ तदपररूपस्यान्य
स्यात्सर्वमात्मत्वं भावदर्शनावसरकारणमिति चेत्, न, प्रत्यक्षस्य स्मरणानपेक्षत्वात्, तस्य स्मृत्यपेक्षायामपूर्वार्थसाक्षात्कारित्वविरोधात्।
प्रत्यक्षं किन्तु स्मरणनिरपेक्षं योगिप्रत्यक्षवत्। किन्तु स्मरणापेक्षं सुरासिसाधसमार्थव्यवसायवत्। कचिदभावप्रत्यक्षं स्मरणमिर
पेक्षं, योगिनोऽभावप्रत्यक्षं यथा। कचिदभावप्रत्यक्षं पुनः प्रतिषेध्यस्मरणापेक्षमेव, तथाप्रतीतेः इति चेत्, न, स्मरणापेक्षस्य विकल्प
ज्ञानस्य प्रत्यक्षत्वविरोधादनुमानादिवत्। प्रत्यक्षस्य सकलकल्पनाविषयत्वात्स्मृत्यपेक्षायामनवस्थाप्रसङ्गात्, स्मृतेः पूर्वानुभवापेक्षत्वात्
योऽनुभवस्याप्यपरस्मृत्यपेक्षत्वात्, सुदूरमपि गत्वा कस्यचिदनुभवस्य स्मृतिनिरपेक्षत्वे प्रकृतानुभवस्यापि स्मृतिसापेक्षत्वकल्पनावैय-
र्थ्यात्। न च स्मृतिः पूर्वानुभूतार्थविषया कथञ्चिदप्यपूर्वार्थे ज्ञानमुपजनयितुमलम्, तस्यास्तत्समत्वमिज्ञानमात्रजननसामर्थ्यप्रतीतेरस्ति
सजातीयार्थेऽपि स्मृतेः सादृश्यप्रत्यभिज्ञानजनकत्वसिद्धेः। पूर्वानुभूते घटे स्मृतिस्ततो विजातीयेऽर्थान्तरे तदभावे विज्ञानमुपजनयतीति
शिलाप्लवं च प्रतीतम्पर जडात्मनः। ततः स्मृतिनिरपेक्षमेव सर्वं प्रत्यक्षम्। तच यथाभावविषयं स्यात्तथा भावदर्शनमनवसरमेव,
तत्कारणाभावात्। "प्रतिपत्तुर्भोक्तृरिच्छा भावदर्शनकारणम्" इत्यपि न सम्यक्, पुरुषेच्छामपेक्षस्याप्रत्यक्षस्य, सत्यामपि घटस्थित्या
तद्विकल्पे प्रदेशे दर्शनाभावात्तस्यामपि सति घटे दर्शनसद्भावात्। इति न प्रत्यक्षमभावं प्रत्येति, तस्य सन्मात्रविषयत्वात्तत्रैव प्रमाणत्वो-
पपत्तेरप्यभिधानात्। सकलशक्तिविरहलक्षणस्य निरुपाख्यस्य स्वभावकार्ययोरभावात्कुतस्तत्प्रमितिः स्याद्नुमानिकी ? न हि निरुपा
ख्यस्य स्वभावः कश्चिदस्ति भवति, भावस्वभावत्वप्रसङ्गात्। नापि कार्यं, तत एव। इति कुतः स्वभावात्कार्याद्वा हेतोस्तत्प्रमितिः ? अनुप-

साधनव्यभिचारात्, सोऽपि प्रतिभासकार्याद्यभेदेऽपि कस्यचिदेकत्वं साधयतीति साध्यसाधनयोरभेदे किं केन कृतं स्यात्?, पक्षविप-
क्षादेरभावात्। कस्यचिद्धि सम्भाव्यतेऽस्य परमाणुस्वभावी एकत्वं प्रतिभासमानात्कार्यात्स्वभावाद्वा साधयेदन्यतो वा?, तत्र साधनं
साध्यादभिन्नमेव अन्यथा द्वैतप्रसङ्गात्। साध्यसाधनयोरभेदे च किमेकत्वं केन प्रतिभासकारिणा निर्णीतं स्यात्, पक्षस्य विपक्षस्य
सपक्षस्य चाभावात्। साध्यधर्माधारतया हि प्रसिद्धो धर्मी पक्षः। स च सर्वेषामर्थानां धर्मिणामप्रसिद्धौ कुतोऽन्यस्तेन साध्यधर्मस्य
धर्मान्तरस्यासंभवे कथं प्रसिध्येताम्? विपक्षश्च तद्विलक्षणस्ततोऽन्यो वा नाद्वैतवादिनोऽस्ति। तथा सपक्षश्च साध्यधर्माविनाभूतसाधन-
प्रतानच्छसम्य दूरोत्सारित एव। तत्सिद्धौ वा भेदवादप्रसिद्धिः। पराभ्युपगमात्पक्षादिप्रसिद्धेरदोष इति चेत्, न, स्वपरविभागासिद्धौ
पराभ्युपगमस्याप्यसिद्धेः। एतेन यदुक्तं, सर्वेऽर्थाः प्रतिभासान्तःप्रविष्टाः प्रतिभाससमानाधिकरणतयाऽवभासमानत्वात् प्रतिभासस्व-
रूपवदिति प्रमाणं तस्य साधनं तदपि प्रत्याख्यातम्। आम्नायात्तत्सिद्धिरित्यप्यसम्भाव्यम्, तस्यापि साध्यादभेदे साधनत्वायोगात्।
ततः साध्यसाधनयोरभेदे किं सर्वाद्वैतं केनानुमानेनागमेन प्रत्यक्षेण वा प्रमाणेन साधितं स्यात्, पक्षसपक्षविपक्षाणामभावस्येन्द्रि-
यार्थानुमानागमप्रत्यक्षप्रमाणात्मकप्रमाणकारणस्याभावाभेदेव तत्कथं स्यात्। न क्वचित्साधना साध्यसिद्धिः, अतिप्रसङ्गात्। साधनं
हि प्रमाणं साध्यते निश्चीयतेऽनेनेति। तद्रहिता न साध्यस्य प्रमेयस्य सिद्धिः, शून्यवादिसिद्धिप्रसङ्गात्। स्वरूपस्य स्वतो गतिरिति तु
संविदद्वैतवादिनोऽपि समानम्। किं बहुना, सर्वस्य स्वेष्टतत्त्वं प्रत्यक्षादिप्रमाणाभावेऽपि व्यवतिष्ठेत, स्वरूपस्य स्वतो गतेः। इत्यपि
प्रसक्त एव, पुरुषाद्वैतवदनेकान्तवादस्यापि सिद्धेः, संविदद्वैतवदनेकसंवेदनस्यापि सिद्धेः। इति न सर्वाद्वैत निष्पर्यायं शक्यमभ्युप-
गन्तुम्। विचारयिष्यते चैतत् प्रपञ्चतोऽग्रे। तदलमतिप्रसङ्गेन। ततो भावा एव नानात्मान इति भावैकान्तोऽभ्युपगन्तव्यः। तत्र

घन (९) संविन्मिर्मासमेदरूपं, साधनाय मेदसाधनाय, तथैकं यथाऽज्ञानसत्वायां प्रमाणमावाच्चक्षुरादिसामप्रतिभासस्य यो मेदस्तद्वशात्सदेवो, रूपादिव्यपदेशभाग् भवति, यथा मेदवादिन एकमेव ज्ञानं प्राह्यप्राहकाकारं मनिसामकमात्र तथ रूपादिसद्धीपीनोऽविद्याविलास इत्यर्थः। 'योऽपीत्यादि' (११) एकमेव यथाऽभ्युपगच्छतोऽद्वैतवादिनो यथा घटादिविकल्पोऽसत्यस्वभेदरेखाभावप्रत्ययोऽपीति न ततो भावस्वभावभेदसिद्धिरित्यर्थः। अभेदेऽपि (१२) अभेदस्य प्रामाणिकत्वेऽपि, भूतलादिभावविषयत्वाच्च भूतलादिभावविषयत्वादित्यर्थः। कीदृशं तर्हि भूतलमिति चेत्, यादृशं तव घटाभावाधिकरणम्, उभयमपि पृच्छाम इति चेत्, पृच्छन्तु तावदेतत्स्वमनुभवं भवन्तः। भूतलस्वरूपत्वे घटाभावस्य घटागमनकालेऽपि तदपरावृत्ते स्तदुपलम्भप्रसङ्ग इति चेत्, न। तदा तव कालघटितस्येव मम देशघटितस्याभावसम्बन्धस्यापगमकल्पने दोषाभावात्, एवं सति कालविशेषघटितस्य चेव भूतादेरेव घटादिव्यवहारोपपत्तौ गतं घटादिनाऽपीति चेत्, नैवं प्रत्यार्थे इष्टत्वात्, पर्यायनये च घटादेरभावादेभावेरभ्युपगमस्य दोषानावहत्वादिति। क्रमतोऽनन्तरूपा भावप्रतिपत्ताद्येवेति (१२६-१-१) क्रमेणानन्त्यसंख्यघटपटाद्यभावग्रहण एवेत्यर्थः। यद्यप्यनन्तानामभावानां प्रत्यासत्यविशेषादेकदैव ग्रहणोपपत्तेः क्रमत इत्ययुक्तम्, तथाऽप्यभावग्रहसामग्र्यविच्छेदाधारादिकग्रहसोलम्यापेक्षयेत्यदुक्तिरिति सर्वम्यम्। ननु केवलाभावप्रत्यक्षाभ्युपगमे स्यादयं दोषः सावकाशः, स एव चास्माकं नास्ति, अभावज्ञाने प्रतियोगिज्ञानस्य हेतुत्वस्वीकारात्स्यदापित्वे न चाभावग्रहस्यापित्त्वमिति, यदैव न प्रतियोगिज्ञानं तदाऽभावग्रहान्वर्भावग्रहस्यालम्यापसरत्वमित्याशङ्क्याभावग्रहे प्रतियोगिग्रहहेतुत्वं खण्डयमाह यथचिरप्रतिपक्षेत्यादिना (२), ततः स्मृतिनिरपेक्षमेव सर्वं प्रत्यक्षमिति, (१२६-१-१०)

किकप्रत्यक्षापत्तेर्दुर्वारत्वात्, न च पटत्वविषयकघटज्ञानत्वेन तादृशहेतुत्वानुपपत्तिः, घटपटत्वनिर्विकल्पकोत्तरं तत्समूहा-
लम्बनोत्तरं च तथाविधाभावलौकिकप्रत्यक्षापत्तेर्दुर्वारत्वात्, किन्तु घटत्वावच्छिन्नविषयताशालिज्ञानत्वं कारणतावच्छेदकम्,
पटत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षत्वं कार्यतावच्छेदकमिति बोध्यम्। नन्वेवमपि घटत्वेन पटभ्रमदशायां घट
त्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षापत्तिर्दुर्वारा, न चेष्टापत्तिः, तथाविधाभावप्रत्यक्षस्य प्रतियोग्यंशे पटत्ववैशिष्ट्य-
भ्रमजनकीभूतदोषस्य तदाऽसत्त्वेन घटत्वेन पटाविषयकतया घटत्वेन घटज्ञानासत्त्वेन तद्विषयकत्वाच्च नेत्याकारकप्रत्यक्षप
र्यवसन्नत्वेनेष्टापत्त्यसम्भवात्। न च तथाविधप्रत्यक्षं प्रति घटत्वावच्छिन्नघटविषयताशालिज्ञानत्वेन हेतुत्वाभोक्तापत्तिः, तथा
विधदोषदशायां घटत्वेन घटज्ञानसत्त्वे तादृशाभावांशे घटत्वेन पटावगाहिनो भ्रमात्मकप्रत्यक्षस्यानुपपत्तेः, न च तादृशफलोप
धाये घटत्वेन पटज्ञानस्यापि पृथग्घेतुत्वं कल्पनीयम्, तादृशज्ञानेन फलजनने तथाविधदोषस्य सहकारित्वकल्पनाच्च न पूर्व-
प्रदर्शितापत्तिरिति वाच्यम्, अनन्तकार्यकारणभावकल्पनापत्तिदोषानुद्धारादिति चेत्, न। प्रामाणिकगौरवस्यादोषत्वात्।
यत्तु घटत्वेन पटादिज्ञानस्थले घटाभावांशे घटत्वेन पटमानजनकीभूतदोषस्य तादात्म्यसम्बन्धरूपस्य नियमतः सत्त्वाच्च ताद
शज्ञानदशायां नैत्याकारकप्रत्यक्षापत्तिरिति तमानन्तवत्वसम्बन्धादीनां दोषत्वे प्रमाणाभावात्कल्पने गौरवाच्च, अथ त-
थापि तद्धर्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षं प्रति तद्धर्मावच्छिन्नविषयताशालिज्ञानत्वेन न हेतुहेतुमद्भावः, समनिय
तसंख्यापरिमाणाद्यभावानामैक्येन संख्यादिज्ञानोत्तरोत्पन्नसंख्यात्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षस्य परिमाण
त्वावच्छिन्नप्रतियोगिताकाभावविषयतया परिमाणत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षे परिमाणत्वावच्छिन्नवि-

चयवाघातिप्रज्ञानहेतुतायां व्यभिचारात्, परिमाणत्वावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नपरिमाणनिष्ठविषयतानिरूपितामाव विषयतालौकिकप्रत्यक्ष एव तद्धेतुत्वकल्पने तु धीधितिकृदुक्तरीत्याऽभावबुद्धेर्विशिष्टवैशिष्ट्यमर्यादयैव गतार्थत्वेन प्रतियोगि ज्ञानस्य स्वातन्त्र्येण हेतुत्वमप्रसक्तमिति चेत्, न। समनियताभावानां भिन्नत्वाभ्युपगमे दोषाभावात्परिमाणत्वावच्छिन्नप्रति- योगिताकत्वेऽरूपत्वाभिन्नावच्छिन्नज्ञानत्वेन हेतुत्वाच दोषः, अत एव प्राचां घटत्वत्वाभावादेर्घटादित्वागमावत्वस्य ध्वंस प्रतियोगित्वेऽप्येकत्वे मत्समत्वमित्यपरे, वस्तुतो घटत्वेन घटपटज्ञानयोर्दोषान्वयीयानन्वयिताभ्यां पृथक्कारणत्वस्य प्रागुक्त त्वात्सर्वपदावच्छेदकत्वेनरूपविशेषपरत्वादानावश्यकत्वात्समनियताभावमत्यक्षस्थले न व्यभिचारः। इत्थमेव लघुधर्मेऽभा- वस्य प्रतियोगितावच्छेदकत्वसम्भवे गुरौ तदभावेन कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिज्ञानोत्तरं घटत्वावच्छिन्नप्रतियो गितासम्बन्धेन कम्बुग्रीवादिमत्त्वावच्छिन्नप्रकारतानिरूपिताभावविषयताशालिनः कम्बुग्रीवादिमानास्तीत्याकारकस्य प्रत्यक्ष- स्योपपत्तिः, घटत्वावच्छिन्नाभावप्रत्यक्षे घटत्वावच्छिन्नविषयताशालिन इव कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिनोऽपि ज्ञानस्य हेतुत्वात्कार्ये स्वान्यवतिरेकरस्यैव च व्यभिचारवारकत्वात्, कम्बुग्रीवादिमभिन्नकम्बुग्रीवादिमत्त्वावच्छिन्नप्रति योगिताकमावेनैव च तत्र प्रामाण्याप्रामाण्योभयव्यवस्था भवेत्, अन्ये तु कम्बुग्रीवादिमत्त्वावच्छिन्नविषयताशालिज्ञानस्थले कम्बुत्वावच्छिन्नविषयताशालिज्ञानस्यावश्यकत्वात् तदुत्तरं कम्बुत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षाभ्युपगमेन तदभा वांशेन तेन सम्बन्धेन कम्बुग्रीवादिमदभावात्वात् कम्बुग्रीवादिमानास्तीति प्रमत्स्वीकाराभावानुपपत्तिरित्याहुः। न च तथापि तेनरूपप्रकारकज्ञाने विना जायमाने द्रव्यत्वादिना तेनःसामान्याभावरूपतमःप्रत्यक्षे तथाविधाभावलौकिकप्रत्यक्षं प्रति तेज

त्वावच्छिन्नप्रकारताशालिज्ञानहेतुतायां व्यभिचार इति वाच्यम्, तेजस्त्वावच्छिन्नप्रतियोगिताकाभावनिष्ठाभावत्वावच्छिन्नतो क्तिमविषयताशालिमत्यक्षत्वस्य तेजस्त्वप्रकारकज्ञानकार्यतावच्छेदकत्वोपगमात्, अथायं कार्यकारणभावप्रपञ्चः प्रतियोगिज्ञान शून्यकाले नेत्याकारकप्रतियोग्यमिभिन्नाभावप्रत्यक्षापत्तिवारणाय, सैव च कुत्रचाभावप्रत्यक्षप्रसिद्धा तदापत्तेरयोगादिति चेत्, न, इन्द्रियसम्बद्धविशेषणतावलात्प्रतियोगिज्ञानशून्यकाले घटाभावादावभावलौकिकप्रत्यक्षत्वावच्छिन्नापत्तौ क्रियमाणायां फलतः प्रतियोग्यमिभिन्ननेत्याकारकाभावलौकिकप्रत्यक्षापत्तिसम्भवात्। अथ तद्धर्मावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षे तादृशज्ञानत्वेन प्रतियोगिज्ञानहेतुत्वकल्पनेऽपि प्रतियोगितासम्बन्धेनाभावो न घटीय इत्याकारकाभावबुद्धिवशायां घटज्ञान काले घटत्वावच्छिन्नप्रतियोगिताकाभावलौकिकप्रत्यक्षत्वावच्छिन्ने आपाद्यमाने फलतो नेत्याकारकापत्तिसम्भवः, तदा प्रतियो गितासंसर्गेण घटमानप्रतियन्धकस्य तथाविधबाधज्ञानस्य सत्त्वेनाभावांशे तत्संसर्गकघटादिविषयकप्रत्यक्षोत्पत्त्यसम्भवादिति, तन्न, तदानीमप्येकत्र द्वयमिति रीत्या घटाभावत्वोभयमभावांशे विषयीकुर्वाणस्य घटो नास्तीति प्रत्यक्षस्य सम्भवेन प्रति योग्यमिभिन्नाभावप्रत्यक्षस्यासम्भवात्। यदि बाधबुद्धिज्ञानकाले निर्धर्मितावच्छेदकज्ञानस्याप्यनुत्पत्त्या प्रतियोगितास म्बन्धेन घटो नाभाववृत्तिरित्यबुद्धित्वज्ञानकाले घटादिरूपप्रतियोगिज्ञानबलात्कार्यतावच्छेदकावच्छिन्नस्यापत्तौ क्रियमाणायां फलतो नेत्याकारकापत्तिः सम्भवतीति मन्यते, तदा दोषबलात् घटत्वावच्छिन्नप्रतियोगितया स्वरूपनिरूपकत्वसम्बन्धेन घटविशि ष्टाभावप्रत्यक्षाभ्युपगमाभावानुपपत्तिः। यत्त्वभावो न घटीय इति बाधबुद्धेरेवासम्भवोऽत्राभावे प्रतियोगितया घटवैशिष्ट्या वगाहित्वेन प्रतिबध्यतावच्छेदकाक्रान्तत्वादिति, तन्न, प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नाधारतासंसर्गकबुद्धेरेव प्रतिबध्य

स्यात् प्रतियोगितया घटबुद्धेः साम्राज्यात्, न हि संयोगसम्बन्धावच्छिन्नाधारतया गगनाद्यभाववत्तानिर्णयेऽपि संयोगमात्रेण गगनादिमत्ताबुद्धिरनुदय इति। यद्यपि एके धर्मधर्मितावच्छेदकीकृत्य विरुद्धभावोभयप्रकारकनिर्णयानभ्युपगमात् शुद्धप्रतियोगितासम्बन्धावच्छिन्नप्रतियोगिताकघटाभाववत्तारूपबाधस्यैव प्रकृते शरणीकरणीयत्वेन संयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नयत्प्रतियोगिनिष्ठप्रतियोगिताकाभावनिर्णयेऽपि शुद्धप्रतियोगितासम्बन्धेनाभावांशे घटविषयकस्य घटो नास्तीत्याकारकस्याभावप्रत्ययस्योत्पत्तौ बाधकाभावेन प्रतियोग्यमिश्रिताभावलौकिकप्रत्यक्षापत्त्यसम्भवः, तदुक्तं—'पदार्थमात्राणां तद्वत्तामपि सामान्यतः प्रतियोगिवैशिष्ट्यधीसम्भवादिति', सामान्यत इत्यस्य शुद्धप्रतियोगितासम्बन्धेनेत्यर्थ इति, तदपि न क्षोदक्षमम्, तादृशनिर्णयासम्भवेऽपि प्रतियोगितासम्बन्धेन घटोऽस्तीति ज्ञानस्य प्रतिबन्धकस्य जागरूकतया तथाविधज्ञानकाले नेत्याकारकघटाभावलौकिकप्रत्यक्षापत्तेर्विनोपदर्शितप्रकारं मन्मतेऽपि दुर्वारत्वादिति ध्येयम्। अथ भूतलादौ संयोगसमवायघटप्रकारकनिर्धर्मितावच्छेदकज्ञानदशायां तत्र संयोगसमवायादियावत्सम्बन्धावच्छिन्नप्रतियोगिताकघटाभावलौकिकप्रत्यक्षापत्तिवारणाय समानविशेष्यतया तत्सम्बन्धावच्छिन्नतदभावलौकिकप्रत्यक्षं प्रति तेन सम्बन्धेन प्रतियोग्यारोपस्य हेतुत्वं कल्प्यत इति तत एव प्रतियोग्यमिश्रिताभावलौकिकप्रत्यक्षवारणात् किं तत्र प्रतियोगिज्ञानहेतुतयेति चेत्, न, तस्य येन तदारोपनियामकत्वेनाभावबुद्धौ सम्बन्धनियमोपपत्त्यारोपहेतुतायां मानाभावात्, अस्तु वा तत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षे तत्सम्बन्धवत्ताज्ञानं हेतुः, न तु तेन सम्बन्धेन तदारोपोऽपि, गौरवात्, तथा च प्रतियोग्यमिश्रिताभावलौकिकप्रत्यक्षापत्तिवारणाय प्रतियोगिज्ञानहेतुताऽऽवश्यकीति। अस्तु वाऽभावप्रत्यक्षे प्रतियोग्यारोपहेतुता तथापि तत्र

कारणतावच्छेदककोटौ प्रतियोगितावच्छेदकविषयतानिवेशे मानाभावाद्द्रव्यत्वेन घटस्य संयोगेनारोपस्थले घटत्वावच्छिन्न प्रतियोगिताकाभावांशे द्रव्यत्वेन घटप्रतियोगिकत्वभ्रमजनकदोषाभावे नेत्याकारकप्रत्यक्षापत्तिवारणाय प्रतियोगितावच्छेदक प्रकारकज्ञानस्य पृथग्घेतुत्वमावश्यकम्, प्रतियोग्यारोपजनकतावच्छेदककोटौ प्रतियोगितावच्छेदकविषयतानिवेशे सम्बन्धभेदे नानन्तकारणतावच्छेदकगौरवप्रसंगात्, दीधितिकृतस्तु प्रतियोग्यंशे विशिष्टवैशिष्ट्यविषयताशून्यस्य विशेष्ये विशेषणं तत्र च विशेषणान्तरमिति विषयताशालिनोऽभावप्रत्ययस्यानभ्युपगमेनेन्द्रियसम्बन्धविशेषणतायाः फलजनने घटत्वादिविशिष्टवैशिष्ट्य बुद्धिं प्रति हेतुत्वेन तत्त्वस्य घटत्वादिप्रकारकज्ञानस्य सहकारित्वस्वीकारेणैव नेत्याकारकप्रत्यक्षवारणस्य सम्भवतयाऽभावबुद्धिं प्रति प्रतियोगिज्ञानस्य हेतुत्वकल्पन निरर्थकमेवेत्याहुः ॥ तत्रेदं चिन्त्यते ॥ अभावप्रत्यक्षे जननीये इन्द्रियसम्बद्धविशेषणतायां घटत्वावच्छि- घटत्वप्रकारकज्ञानस्येव पटत्वप्रकारकज्ञानस्यापि सहकारित्वं स्वीकरणीयम्, अन्यथेन्द्रियसम्बद्धविशेषणताबलात्पटत्वावच्छि- भावाभावप्रत्यक्षस्य पटत्वप्रकारकज्ञानशून्यकालेऽप्युत्पत्त्यापत्तेः, तथा च पटत्वप्रकारज्ञानसत्त्वे इन्द्रियसम्बद्धविशेषणतारूपका रणबलात् घटाभावप्रत्यक्षापत्तिः, न चेष्टापत्तिः, तदा घटाभावांशे पटभ्रमजनकदोषाभावेन पटस्य घटज्ञानासत्त्वे च घटत्वाभावेन नेत्याकारकप्रत्यक्षपर्यवसानात्, न च घटाभावादिनिष्ठेन्द्रियसम्बद्धविशेषणताया घटत्वाद्यवच्छिन्नविषयतानि रूपिताऽभावनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षहेतुत्वे तस्यां घटत्वप्रकारकज्ञानस्य सहकारित्वान्नोपदर्शितापत्तिः, न च पटत्व प्रकारकपटज्ञानकाले घटाभावांशे तज्ज्ञानजनकीभूतदोषसत्त्वे घटत्वावच्छिन्नप्रतियोगिताकाभावप्रत्यक्षानुपपत्तिर्घटाभावनिष्ठ विशेषणतायाः फलजनने घटत्वप्रकारकज्ञानतत्प्रतिबन्धदोषादीनामपि सहकारित्वादिति वाच्यम्, विषयभेदेनेन्द्रियसम्बद्धविशेष-

वतायाः कारणताधिक्यप्रसङ्गात् । न च प्रतियोगिज्ञानहेतुतामतेऽपि विषयभेदेनेन्द्रियसम्बद्धविशेषणतायाः कारणतावैजात्यं विना न निस्तारः, पूर्वोपदर्शितापत्तेस्तन्मतेऽपि सम्भवादिति वाच्यम् । तन्मते लौकिकविषयतासम्बन्धेनाभावप्रत्यक्षं प्रति स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन ज्ञानत्वेन हेतुत्वकल्पनेनानुपपत्तेरभावात् उक्तसम्बन्धघटितसामानाधिकरण्येन ज्ञानविशिष्टाया एकस्या अपरस्याश्च तथादोषविशिष्टाया इन्द्रियसम्बद्धविशेषणताया अभावलौकिकप्रत्यक्षनियामकत्वे घटत्वप्रकारकज्ञानसत्त्वे घटाभावसन्निकर्षे आद्यायाः । घटत्वप्रकारकज्ञानसत्त्वे घटाभावांशे घटभ्रमजनकदोषसत्त्वे च द्वितीयायाः सम्पत्त्या अभावलौकिकप्रत्यक्षोत्पत्तेस्तदसत्त्वे च तदनुत्पत्तेरिति । स्यादेतत्, नव्यमतेऽपि विषयभेदेनेन्द्रियसम्बद्धविशेषणताया न कारणताभिन्ना तद्धर्मावच्छिन्नप्रतियोगिताकाभावसन्निकर्षे तदन्यधर्मप्रकारकज्ञानस्यैव तदभावांशे तत्प्रकारकभ्रमजनकत्वोपपत्त्याभ्युपगमेन घटत्वप्रकारकज्ञानकाले इन्द्रियसम्बद्धविशेषणतारूपकारणसत्त्वेऽभावभ्रमस्य घटाभावे आपत्तेरिष्टापत्तिपरिहरणीयत्वात्, तदा दोषधौव्येण घटाभावांशे घटभ्रमासम्भवस्यैव तस्य स्वीकारादिति, मैवम्, तथापि नव्यैरिन्द्रियसम्बद्धविशेषणतायाः तत्प्रकारिताघटत्वप्रकारकज्ञानत्वादिना नानाविधा स्वीकार्या, प्राचीनैस्तूपदर्शितसम्बन्धेन ज्ञानत्वेनैवेति प्राचीनमत एव लाघवात्, एवं चाभावलौकिकप्रत्यक्षजनकसामग्र्यामिन्द्रियसम्बद्धविशेषणतायामेकज्ञानघटितस्वोपदर्शितसम्बन्धघटितस्वसामानाधिकरण्योभयसम्बन्धेन ज्ञानत्वेनैव घटत्वप्रकारकज्ञानादीनां निवेशः कर्तव्यो न तु प्रातिस्विकरूपेणेत्यपि प्राचीनमते लाघवं द्रष्टव्यम् । वस्तुतो नव्यमते विशेषणतावच्छेदकप्रकारकज्ञानस्यात्मनिष्ठसमवायप्रत्यासत्त्येन्द्रियसम्बद्धविशेषणतायाश्च विषयनिष्ठप्रतियोगितासम्बन्धेन हेतुत्वं कल्प्यत इति तयोः कारणतावच्छेदकसम्बन्धयोर्वैयधिकरण्येनैकदा सत्त्वे घटत्वप्रकारकज्ञानकाले

पुरुषान्तरीयेन्द्रियसम्बद्धविशेषणतासत्त्वे पुरुषान्तरीयाभावलौकिकप्रत्यक्षापत्तिरिति, तच्च, एतदात्मसमवेतज्ञानादिप्रत्यक्षेतरात्मा-
न्तरे आपत्तिवारणाय तदात्मसमवेतत्वावच्छिन्नं प्रति तदात्मत्वेन तादात्म्येन हेतुत्वकल्पनात् तादात्म्यसमवायघटितसामानाधि-
करण्येन एतदात्मविशिष्टं यद् घटत्वप्रकारकज्ञानम्, एककालीनत्वसम्बन्धेन तद्विशिष्टा यैतत्पुरुषीयेन्द्रियसम्बद्धविशेषणता तैतै-
तत्पुरुषीयाभावलौकिकप्रत्यक्षनियामिकेति सामग्र्यास्त्वभ्युपगमे दोषाभावात्। इदन्तु स्यात्, नव्यमते घटत्वप्रकारकज्ञान-
काले घटाभावेन्द्रियसम्बद्धविशेषणतासत्त्वे भिन्नविषयकानुमितिसामग्रीविरहबलादात्मनि घटत्वावच्छिन्नविषयतानिरूपिताभा-
वनिष्ठविषयताशालिप्रत्यक्षापत्तिर्दुर्वारा घटाभावलौकिकसन्निकर्षशून्यकाले तथाविधसामग्र्यभावरूपकारणबलात् तत्प्रत्यक्षोत्पत्ति-
वारणाय तादृशसामग्र्यभावेन फले जननीये तथाविधसन्निकर्षस्य सहकारित्वकल्पनात् तदानीमेककालीनत्वसम्बन्धेन तादृश-
सन्निकर्षादिविशिष्टविरोधिसामग्र्यभावरूपायाः सामग्र्या असत्त्वात्, तथा च घटाभावज्ञप्तिविषयतासम्बन्धेन प्रत्यक्षं प्रति
तादात्म्येन घटाभावहेतुतामनायत्या कल्पयित्वा तादात्म्यप्रतियोगिताघटितसामानाधिकरण्यसम्बन्धेन घटाभावविशिष्टा येन्द्रि-
यसम्बद्धविशेषणता तद्विशिष्टतथाविधविरोधिसामग्र्यभावरूपायाः सामग्र्या एवात्मनि घटाभावप्रत्यक्षोत्पत्तौ नियामकत्वमभ्यु-
पगन्तव्यमिति महागौरवम्। प्रतियोगिज्ञानहेतुतामते तु लौकिकविषयतयाऽभावप्रत्यक्षं स्वप्रकारीभूतधर्मावच्छिन्नप्रतियोगि-
ताकत्वसम्बन्धेन ज्ञानत्वेनैव हेतुत्वादुक्तसम्बन्धप्रतियोगिताघटितसामानाधिकरण्येन ज्ञानविशिष्टेन्द्रियसम्बद्धविशेषणताभावा-
देवोक्तस्थले नाभावप्रत्यक्षं घटाभावे, तथा च विषयतासम्बन्धेनाभावप्रत्यक्षोत्पादकसामग्रीसहकारेणैव समवायेन तदुत्पादक-
सामग्र्याः कार्योत्पत्तिव्याप्यत्वान्नोक्तापत्तिरिति घटाभावादिप्रत्यक्षोत्पादकसामग्र्यामिन्द्रियसम्बद्धविशेषणतायां विशिष्यानन्त

विषयतेषित्वानियमाच्चाभावसमिति । अत्र ब्रूमः । एवं सति घटत्वेन घटज्ञानात्घटाभावसन्निकर्षे घटत्वेन घटाभावज्ञानं न स्यादिति घटत्वावच्छिन्नप्रकारतानिरूपिताभावविषयताशालिप्रत्यक्षमेव घटज्ञानकार्यतावच्छेदकं वाच्यमिति तज्ज्ञानात्केवलाभावप्रत्यक्षापत्तिर्दुर्निवारैव, न च घटत्वाद्यवच्छिन्नप्रकारत्वान्यप्रकारत्वानिरूपिताभावविषयताकप्रत्यक्षे घटादिविषयो हेतुस्तथाभावांशे निर्विकल्पकमभाव इत्याकारकप्रत्यक्षं च जायते निखिलप्रतियोगिज्ञानकार्यतावच्छेदकाक्रान्तत्वेऽस्य प्रत्यक्षस्य यत्किञ्चित्प्रतियोगिज्ञानेऽसम्भवात्, भावप्रतियोगिज्ञानस्य चासम्भवादभावत्वांशे निर्विकल्पकं स्वभावांशे यत्किञ्चित्प्रतियोगिवैशिष्ट्यविषयकत्वात् यत्किञ्चित्प्रतियोगिमीसाम्यमेवेति नानुपपत्तिः, इदंत्वेन तमः प्रत्यक्षं त्वनुपपन्नमभावांशे निर्विकल्पकमत् भावत्प्रतियोगिमीकार्यतावच्छेदकाक्रान्तत्वादिति वाच्यम् । केवलाभावत्वनिर्विकल्पकापत्तेरभावाद्भावांशेऽपि निर्विकल्पकस्याभाव इत्याकारकप्रत्यक्षस्य चोच्छेदापत्तेः, निखिलविशेषणज्ञानकार्यतावच्छेदकाक्रान्तस्य यत्किञ्चिद्विशेषणज्ञानेऽसम्भवात् । किञ्चैवं घटपटोभयाभावप्रत्यक्षे मतिरिति लाघवात् घटादिविषयो घटत्वाद्यवच्छिन्नप्रकारत्वनिरूपिताभावविषयत्वस्यैव कार्यतावच्छेदकत्वात्केवलस्य भावप्रत्यक्षस्येवाभावप्रत्यक्षस्य नानुपपत्तिः । एतेनाभावलौकिकप्रत्यक्षस्य घटत्वाद्यन्यतमविशिष्टविषयकत्वनियमाद्विशेषणसामग्री विना सामान्यसामग्रीमात्रात्कार्यानुत्पत्तेर्नाभावनिर्विकल्पकं नेत्याकारकप्रत्यक्षं चेत्यप्यपास्तम् । भावलौकिकप्रत्यक्षेऽपि तथा नियमापत्तेः, केवलभावप्रत्यक्षानुभवानुरोधात् प्रत्यक्षे तथा नियमानाभ्युपगमे च केवलाभावप्रत्यक्षानुभवाद्भावप्रत्यक्षेऽपि तथा नियमो न भवेदयः । सप्तास्तयोः केवलसमप्रतियोगिकं नियमानुरोधेन सविकल्पकनिर्विकल्पकोभयसाधारणत्वस्य व्यापकत्वं तु प्रभुत्वादितमधस्त्वादिति नैकतरपक्षपातो युक्तः ॥ भत्वभावलौकिकप्रत्यक्षं प्रति प्रतियो-

गिज्ञानस्य हेतुत्वकल्पने इन्द्रियसम्बद्धविशेषणतया फले जननीये घटत्वप्रकारकज्ञानस्य सहकारित्वमसम्भवि, ययोः कार्य तावच्छेदकयोः परस्परं व्याप्यव्यापकभावस्तयोरेव परस्परं सहकारित्वस्वीकारात्, अभावलौकिकप्रत्यक्षं प्रति प्रतियोगि-ज्ञानस्य हेतुत्वकल्पनपक्षे तु घटादिनिष्ठप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपिताभावनिष्ठाभावत्वावच्छिन्नविषयताशालि प्रत्यक्षत्वावच्छिन्नं प्रति घटमात्रनिष्ठधर्मावच्छिन्नप्रकारताशालिज्ञानत्वेन हेतुत्वं कल्प्यते तथा च घटत्वादिप्रकारकज्ञानेन्द्रियसम्बद्धविशेषणतयोः कार्यतावच्छेदकयोः परस्परव्याप्यव्यापकभावेन ताभ्यां फले जननीये परस्परसहकारित्वस्य यौक्तिकत्वादिति, तदसत्, ययोः कार्यतावच्छेदकयोः परस्परं व्याप्यव्यापकभावस्तयोरेकेन फलेन जननीयेऽन्यस्य सहकारित्वं कल्प्यत इत्यत्र मानाभावात्, ययोः कार्यतावच्छेदकयोः सामानाधिकरण्यं तयोरेकेन फले जननीयेऽन्यस्य सहकारित्वमित्यस्यैव स्वीकारादुक्तयुक्त्या प्रतियोगिज्ञानहेतुत्वासिद्धेः, तथाया असधारणाया केवलाया धर्मिमात्रसामग्र्यैव भावात्, घटाद्युपरक्ततद्व्यवहार एव घटादिज्ञानस्य हेतुत्वेन व्यवहारस्यैव सप्रतियोगिकत्वसिद्धिरिति दिग्। "भवर्दितोऽप्य प्रतियोग्यभावधीहेतुकार्यस्वविचारभूमा॥ अस्मिन्ननेकान्तमतिप्रवेशात् पक्षेऽबाधका कापि न पक्षपातः ॥१॥ अथ प्रकृतम्, अभाव भावभिन्नमनुपारमम्। अनुपलब्धेः (१२६ १ १४) अभावानुपलब्धेः, व्यवस्थापयेत् (१२६-२ १) प्रतिपद्येति शेषः। अथ भासनादिति (२) तद्भूतलमेव घटाभाव इत्येवं सार्वजनीनानुभवाद्धर्मिकल्पनात इत्यादिन्यायाबाधेति भावः। 'वस्त्वन्तररूपस्यैवेति' (४) अन्यवस्तुनिज्ञानस्यान्यवस्तुविषयत्वादिति भावः। नन्वेवं घटवदन्यभूतलं घटाभाव इति प्राप्तं तथा चान्यतान्योन्याभावस्य भिन्नतायामतिरिक्ताभावसिद्धिरिति चेत्, न, कालभेदेन वस्तुतो घटवदन्यस्य भूतलस्य तत्कालावच्छिन्नतादा

स्यमनम्य येन यद्यमाबम्यवहारहेतुत्वाभ्युपगमे तदसिद्धेः, अस्तु वा भावत्वसम्भावस्वमसम्भोपाधिर्घटादिनिरूपिताभावत्वेन भूतलादेरपि च योग्यानुपलम्भिसहकृतचक्षुरादिप्रतियोगिज्ञानादि च हेतुः, तथाज्ञानाच्च तथाव्यवहारः, इत्थं च विक्षेपकता विमत्यासपक्ष्यनाक्षापनमपीत्यस्मदेकपरिशीलितः पन्थाः। ततः (१२७-२-६) प्रत्यक्षतोऽन्यतो वा प्रमाणात्, अपरः (७) सत्याद्वैतवादी, व्यभिचारेण (७) सन्दिग्धव्यभिचारेण, विपक्षेऽपि (७) वस्तुनः एकत्वेऽपि, मायाकुम्भादिकार्यनानात्वस्येति योगः। विविधकर्मेति ( ८ ) पटुमीपुतरस्तत्, विविधकार्यकारित्वेस्यर्थः। भाष्ये शक्तिनानात्व ( ९ ) एकस्यापि नर्तक्यादिजनस्य शक्तिभेदोऽस्ति, कुतः, प्रसवविशेषात् (१०) नानाकुम्भादिकार्यदर्शनात्, तत्र सत्याद्वैतवादाह—स (१०) प्रसवविशेषो वस्तुनानात्वेन व्यभिचारी नेव (१०), कुतस्तद्गतिः (१०) शक्तिनानात्वसिद्धिस्ततो यत्किञ्चिदेतदित्यर्थः। वृत्तौ, तस्यापि (११) एकनर्तकीक्षणस्यापि, प्रसवविशेषो (१०) कुम्भादिकार्यविक्षेपोऽव्यभिचारीत्यध्याहारप्रक्षेपेण व्याख्येयम्। 'नर्तक्यादीति' (११) कार्यभेदनियतकारणतामेदस्य शक्तिभेदप्रयुक्तत्वाभ्युपगमे समनियतशक्तीनां प्रत्येकमपि कुम्भादिनानाकार्यकारित्वस्य यत्नादापातादेकैकशक्तावपि कार्यान्तरापत्तौ तत्रापि तत्स्वीकारे दुस्तरानवस्थानदीति भावः। वस्तुनानात्वाभावे कुतस्तद्व्यवहार इत्यत्राह सत्याद्वैतवादी 'केवलमिति' ( १२ ) सत्याद्वैतवादेऽप्यविद्याकल्पितैर्हि शक्तिभेदैर्वस्तुनानात्वं व्यवह्रियताम्, न तु वास्तवं तत्, अत एव सौगतसांख्यादिकल्पितस्कन्धपञ्चकप्रकृतिप्रभृतितत्त्वाविविक्त्या अपि तदुपवर्णनवासनाजनकाविद्यामूला नाद्वैततत्त्वं बाधन्त इति हृदयम्। साधनव्यभिचारात् (१२७-१-१) इतिविशेषादेर्वस्तुनः कूटस्थत्वेऽप्यविद्यामहिम्ना सम्भवात् सर्वविक्षेपसाधनानां सन्दिग्धव्यभिचारित्वादिति भावः। सत्याद्वैत

वादिनं दूषयति भाष्यकृत्–'सोऽपि हीत्यादि' (१३७–१–१) एतद्विवृणोति वृत्तिकृत् कस्यचिदित्यादि, ( २ ) अद्वैते साध्यसाधनयोरविशेषाच्च इत्थमित्थं किञ्चित् सिध्येत् व्यवहाराद्भेदमुपगम्य सम्प्रतिभासनाद्विना मध्येकत्वसाधने च व्याव हारिकमेवैकत्वं सिध्येत्, न तु तात्त्विकं तत्प्रतिपत्तिलिङ्गाभावात्, अपेक्षाकल्पितत्वस्य च भेदवदभेदेऽपि व्यावहारिकत्वपर्यव सायकत्वादिति तात्पर्यार्थः। एतेन यदुच्यते प्रत्यक्षेणानुभूयमानस्य प्रतिभासस्य प्रागभावप्रध्वंसनानात्वादिकल्पने गौरवात्तत्प्र माभिरस्यसत्यैकत्वसिद्धिरिति तन्निरस्तम्। प्रमाणं विना लाघवमात्रेणार्थासिद्धेः अन्यथा सच्चिदानन्दब्रह्मणोऽपि कल्पने गौरवा च्छून्यज्ञानकल्पने लाघवदृष्टिं वदन् माध्यमिक एव विजयेत, अनुभवश्च प्रतिभासस्य वैलक्षण्य एव साक्षी चित्रज्ञानदृष्टान्तेन नानात्वे चेति नानैकान्तं विहायाद्वैतपक्षः श्रेयान्। नन्वेकत्वे तत्त्वमसीत्यादिवेदवाक्यस्य प्रमाणराजस्य सत्त्वादत्र लाघवतर्कः सहायो भविष्यतीत्याशङ्कायामाह–' आम्नायादित्यादि '( ८ ) आम्नायात् वेदात्, नैवं तत्कृतं स्यात् (१०) प्रमाण पक्षत्वं निर्णीतं न स्यात्। प्रत्यक्षादिप्रमाणबाधिते ब्रह्मैकत्वे वेदोऽपि न यद्भाषते इत्यर्थवादरूपतां स्वीकुर्वन्त्यो माध्यस्थ मेवालम्बत इत्यर्थः। एतेन तत्त्वमस्यादिवाक्यजन्योऽनुभवः शुद्धसत्त्वं ब्रह्माहमस्मीति प्रत्यक्षस्य क्षणिकत्वेऽपि प्रमाण बाधकेरितिदिक्। तदेवं वेदान्तिनोऽद्वैतपक्षदूषणेन नानाभावैकान्तं स्वीकारयित्वा तत्रोक्तं दूषणमनुपसंहरति, ततो भावा एवेत्यादि ' (१३७–१–१४) ॥ ९ ॥

संप्रति पराभेव प्रसङ्गेन प्रागभावप्रध्वंसाभावनिह्नववादिनं प्रति दूषणमुपदर्शयन्तः कारिकामाहुः।—

कार्यद्रव्यमनादि स्यात् प्रागभावस्य निह्नवे। प्रध्वंसस्य च धर्मस्य प्रच्यवेऽनन्ततां व्रजेत् ॥ १० ॥

कार्यस्यात्मलाभात्प्रागभवनं प्रागभावः । स च तस्य प्रागनन्तरपरिणाम एवेत्येके तेषां तत्पूर्वानादिपरिणामसन्ततौ कार्यसद्भाव-
प्रसङ्गः । तदितरेतराभावरूपस्य तदभावस्योपगमाददोष इति चेत्, तदनन्तरपरिणामेपि तत एव कार्यस्याभावसिद्धेः किमर्थः प्राग-
भावः परिकल्प्यते ? कार्यस्य प्रागभावाभावस्वभावत्वाद्धि कार्यमिति चेत्, कथमेवं कार्योत्पूर्वपर्यायेषु एकैकेषु तत्पूर्वोत्तरासिद्धपरिणामेषु
कार्यस्वभावत्वं न प्रसज्येत ? प्रागभावाभावस्वभावत्वाविशेषेपि कश्चिदेवेष्टः पर्यायः कार्यं न पुनरितरे परिणामा इत्यभिनि-
वेशमात्रम् । स्याद्वादिनां 'अव्यवहितप्रागनन्तरपर्यायस्तस्य प्रागभावः । तस्यैव प्रध्वंसः कार्यं व्यवस्थितम् । न पुनरितरेतराभावो येन तत्पूर्वो-
त्तरसमस्तपर्यायाणां घटत्वं प्रसज्येत । न च तेषां प्रागभावप्रध्वंसरूपतास्ति तदितरेतराभावरूपतोपगमात्' इति, तदेतदपि सुगतमता-
नुसरणम् स्याद्वादिनामायातम्, स्वमतविरोधात् । प्रागभावो ह्यनादिरिति स्वमतम् । तत्र घटस्य पूर्वानन्तरपर्यायमात्रप्रागभावस्यो-
पगमे विरुध्यते । द्रव्यार्थादेशादनादिः प्रागभावोभिमत इति चेत्, किमिदानीं मृदादिद्रव्यं प्रागभावः ?, तथोपगमे कथं प्रागभावाभाव-
स्वभावता घटस्य घटेत ? द्रव्यस्याभावासंभवात् । तत एव न कदाचिद् घटस्योत्पत्तिः स्यात् । यदि पुनः पूर्वपर्यायाः सर्वेप्यनादि-
सन्ततयो घटस्य प्रागभावोऽनादिरिति मतम्, तदापि प्रागनन्तरपर्यायनिवृत्ताविव तत्पूर्वपर्यायनिवृत्तावपि घटस्योत्पत्तिप्रसङ्गः । तथा सति
घटस्यानादित्वं पूर्वपर्यायनिवृत्तिसन्ततेरप्यनादित्वात् । ननु च न प्रागनन्तरपर्यायः प्रागभावो घटस्य, नापि मृदादिद्रव्यमात्रम्, न च
तत्पूर्वसमस्तपर्यायसन्ततिः । किं तर्हि ? द्रव्यपर्यायात्मा प्रागभावः । स च स्यादनादिः स्यात्सादिरिति स्याद्वादिदर्शनं निराकुलमेवेति
चेत्, न पक्षद्वयभाविदोषोपनिपातोपपत्तेः । द्रव्यरूपतया तावदनादित्वे प्रागभावस्यानन्तत्वप्रसक्तेः सर्वदा कार्यानुत्पत्तिः स्यात् । पर्या-
यरूपतया च सादित्वे प्रागभावात्पूर्वमप्युत्पत्तिः पश्चादिव कथं निवार्येत ? न च गत्यन्तरमस्ति । ततो न भावस्वभावः प्रागभावः, तस्य

भावत्रित्वमत्यन्ताभावविशेषप्रसिद्धेः' इत्याहे । तेऽपि न समीचीनवाचः, सर्वथा भावविलक्षणस्याभावस्य ग्राहकप्रमाणाभावात् । स्यात् च
प्रागासीद् घट इति प्रत्ययोऽसद्विषयः, सत्प्रत्ययविलक्षणत्वात् । यत्तु सद्विषयः, स न सत्प्रत्ययविलक्षणो, यथा सद्द्रव्यमित्यादिप्रत्ययः,
सत्प्रत्ययविलक्षणश्चायं, तस्मादसद्विषयः' इत्यनुमानं प्रागभावस्य ग्राहकमिति चेत्, न, प्रागभावादौ नास्ति ,प्रध्वंसाभावादिरिति प्रत्ययेन
व्यभिचारात् । तस्याप्यसद्विषयत्वान्न दोष इति चेत्, न, अभावान्तराभावप्रसङ्गात् । स्यान्मतम्, भावे भूभागादौ नास्ति कुम्भादिरिति प्रत्ययो
मुख्याभावविषयः, प्रागभावादौ नास्ति प्रध्वंसादिरित्युपचरिताभावविषयः । ततो नाभावानवस्थेति, तदप्ययुक्तम्, परमार्थेन प्रागभावा
दीनां साङ्कर्यप्रसङ्गात् । न गुणपरिच्छेनाभावेन परस्परमभावानां व्यतिरेकः सिध्येत्, सर्वत्र मुख्याभावपरिकल्पनावैयर्थ्यप्रसङ्गात् । यद
प्युक्तम्, न भावस्वभावाः प्रागभावादिः, सर्वथा भावविशेषणत्वादिति, तदपि न सम्यगनुमानम्, हेतोः पक्षाव्यापकत्वात्, न प्रागभावः
प्रध्वंसादिविशेषेणभावविशेषणस्य प्रागभावस्य प्रसिद्धेः, गुणादिना व्यभिचाराच्च, तस्य सर्वथा भावविशेषणत्वेऽपि भावस्वभावत्वात् ।
रूपं पटस्येत्यादिव्यवहारेण गुणस्य स्वतन्त्रस्यापि प्रतीतेर्न सर्वथा भावविशेषणत्वमस्येति चेत्, तर्ह्यभावस्य स्वतन्त्रस्यापि स्वरूप-
प्रतीतेः स्वभावविशेषणत्वं मा सिधत् । सामर्थ्यात्तद्विशेष्यस्य इत्यादेः, संप्रत्ययात्सदा भावविशेषणमेवाभाव इति चेत्, तथैव गुणादेः
सन्ततं भावविशेषणमस्तु, तद्विशेष्यस्य द्रव्यस्य सामर्थ्याद्गम्यमानत्वात् । किञ्च प्रागभावः सादिः सान्तः परिकल्प्यते सादिरनन्तो
वाऽनादिरनन्तो वाऽनादिः सान्तो वा ? प्रथमे विकल्पे प्रागभावात्पूर्वं घटस्योपलब्धिप्रसङ्गः, तद्विरोधिनः प्रागभावस्याभावात् । द्वितीये
प्रागभावकाले घटस्यानुपलब्धिप्रसक्तिः, तस्यानन्तत्वात् । तृतीये तु सदानुपलब्धिः । चतुर्थे पुनर्घटोत्पत्तौ प्रागभावस्याभावे घटोपल-
ब्धिवत्सर्वकार्योपलब्धिः स्यात्, सर्वकार्याणामुत्पत्स्यमानानां प्रागभावस्यैकत्वात् । यावन्ति कार्याणि तावन्तस्तत्प्रागभावाः । तत्रैकस्य प्राग-

भावस्य विनाशेऽपि घटोत्पत्त्यसमानकालीनप्रागभावानामविनाशात् घटोपलम्भः सर्वकार्योपलब्धिरिति चेत्, तर्हि अन्त्याः प्रागभावास्ते स्वतन्त्रा भावतन्त्रा वा ?, स्वतन्त्राश्चेत्कथं न भावस्वभावाः काभरिचन्, भावतन्त्राश्चेत्किमुत्पन्नभावतन्त्रा उत्पत्स्यमानभावतन्त्रा वा ?, न तावदादि-विकल्पः समुत्पन्नभावकाले तत्प्रागभावविनाशात् । द्वितीयविकल्पोऽपि न श्रेयान्, प्रागभावकाले स्वयमलब्धमुत्पत्स्यमानभावानां तदा तन्त्रताऽयोगात्, अन्यथा प्रध्वंसाभावस्यापि प्रध्वस्तपदार्थतन्त्रत्वापत्तेः । न चानुत्पन्नः प्रध्वस्तो वाऽर्थः कस्यचिदाश्रयो नाम, अतिप्रसङ्गात् । यदि पुनरेक एव प्रागभावो विशेषणभेदाद्भिन्न उपचर्यते घटस्य प्रागभावः पटादेर्वेति । तयोरुत्पन्नपदार्थविशेषणतया तस्य विनाशेऽनुत्पत्स्यमानार्थविशेषणत्वेनाविनाशादित्यत्वमपीति मतम्, तदा प्रागभावादिचतुष्टयकल्पनापि मा भूत्, सर्वत्रैकस्यैवाभावस्य वि-शेषणभेदादवस्थाभेदस्य चोपपत्तेः । कार्यस्यैव पूर्वेण कालेन विशिष्टोऽर्थः प्रागभावः, परेण विशिष्टः प्रध्वंसाभावः, नान्यार्थविशिष्टः स एव चेतरेतराभावः, कालत्रयेऽप्यसम्भवनानारूपभावविशेषणोऽत्यन्ताभावः स्यात्, प्रत्ययभेदस्यापि तथोपपत्तेः । सर्वथैकत्वेऽपि द्रव्यादिवि-शेषणभेदादनेकसम्प्रत्ययवत् । यथैव हि सत्त्वस्यापि विशेषाद्विशेषणभिन्नाभावादेकत्वं सत्तायामिष्टं भवद्भिस्तथैवासत्त्वस्यापि विशेषाद्विशेषणभिन्नाभावादसत्तायामप्येकत्वमस्तु । अथ प्रागासीदित्यादिप्रत्ययविशेषात्सत्ता चतुर्भेदेष्यते, तर्हि प्रागासीत्प्रागुत्पत्स्यति सम्प्रत्यस्तीति काल-भेदेन, पाटलिपुत्रेऽस्ति चित्रकूटेऽस्तीति देशभेदेन, घटोऽस्ति पटोऽस्तीति द्रव्यभेदेन, रूपमस्ति रसोऽस्तीति गुणभेदेन, प्रसारणमस्ति गम-नमस्तीति कर्मभेदेन च प्रत्ययविशेषसद्भावात् प्राक्सत्तादयः सत्ताभेदाः किन्न नेष्यन्ते ? । अथ प्रत्ययविशेषाद्विशेषणान्येव भिद्यन्ते, तस्य तन्निमित्तत्वात्, न तु सत्ता । ततः सैवैकेति मतम्, तर्हि तत एवाभावभेदोऽपि मा भूत्, सर्वथा विशेषाभावात् । न चैकोऽप्यभाव-श्चित्रादिविषयपटसम्पादिव्यतिरेकेण प्रत्यक्षतः प्रतिभासते । केवलं यथा गुणविकल्पतया लोकः रुपिन्यादिभूतलगुणपरिचयमेव प्रागभावा-

पात्मनि, पूर्वसमयवर्तिनि सति प्रध्वंसस्य कार्यात्मना स्वरूपलाभोपपत्तेस्तयोरुपादानोपादेयभावोऽस्तु, तुच्छयोरेवाभावयोस्तद्भावविरोधात्।
तथा, स्वपदार्थनप्रवेशान्तरादिद्रव्यं घटोत्तरकालवर्ति घटाकारविकलं घटप्रध्वंसः। स चानन्तः समवतिष्ठते। तेन घटात् पूर्वकालवर्ति मृदा-
दिद्रव्यं घटस्य प्रागभाव एव, न पुनः प्रध्वंसः, तथा घटाकारमपि तत्तस्य प्रध्वंसो मा भूत्, घटाकारविकलमिति विशेषणात्। नन्वेवं घटो-
त्तरकालवर्तिघटाकारविकलसन्तानान्तरमृदादिकमपि तद्घटप्रध्वंसः स्यादिति चेत्, न, द्रव्यग्रहणात्। वर्तमानपर्यायात्मकरूपमेव हि मृदा
दिकं तद्द्रव्यमन्वयीष्यते, न पुनः सन्तानान्तरं, तस्य स्वपर्यायमेवातीतमनागतं वा प्रत्यन्वयिनस्तद्द्रव्यत्वविरोधात्। तदेवं प्रसिद्धः प्रध्वंसो
घटधर्मः। तस्य प्रध्वंसोऽनन्त एव चार्वाकस्य। तस्मिंश्च कार्यद्रव्यं पृथिव्यादिकमनन्ततां प्रत्येतीति समन्तभद्रस्वामिनामभिप्रायः। इति
प्रागभावस्वरूपेण चापाद्यते, कपिलमतानुसारिणां प्रागभावानभ्युपगमे पटादेरनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यं स्यात्। न च पुरुष-
व्यापारमन्तरेण घटादि समवुपलभ्यते जातुचित्, इति कार्यद्रव्यं तदापादनीयम्। तत्र प्रागभावस्य निह्नवेऽनादि स्यादिति सूक्तं दूषणम्,
व्यापारस्यानुपलम्भवत्प्रसङ्गोपपत्तेः। एतेन मीमांसकानां शब्दस्य प्रागभावानभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यं स्यादित्युक्तं
प्रतिपत्तव्यम्। शब्दस्याभिव्यक्तौ पुरुषव्यापारस्योपयोगान्नानर्थक्यमिति चेत्, न, तत प्राक् सदावेदकप्रमाणाभावादभिव्यक्तिकल्पनानुपपत्तेः।
कण्ठादेर्हि समभ्यकारणध्वनेः प्रदीपव्यापारात्पूर्वं सद्भावावेदकप्रमाणस्य स्पर्शनप्रत्यक्षादेः संभवादुपपन्ना प्रदीपेनाभिव्यक्तिकल्पना, न
पुनः शब्दस्य, तदभावात्। प्रत्यभिज्ञानादेस्तद्भावावेदकस्य प्रमाणस्य भावात्तदोष इति चेत्, न, तस्य विरुद्धत्वात्, शब्दस्याभिव्यक्तेः पूर्वं
सर्वथा सत्त्वात्साध्याविपरीतेन कथञ्चित्सत्त्वेन व्याप्तत्वादन्यथा प्रत्यभिज्ञायमानत्वानुपपत्तेः। ततोऽभिव्यक्त्यपरिकल्पनात् शब्दस्या-
भिव्यक्तिकल्पना युक्ता। एतेन कुम्भकारादिव्यापारात् घटाद्यभिव्यक्तिकल्पना प्रत्युक्ता। कल्पयित्वापि तदभिव्यक्तिं तस्याः प्रागभावोऽपी

कर्तव्या । तथा हि । यथा शब्दस्य वाय्वादिभिरभिव्यक्तिः प्रागसती क्रियते, न पुनः शब्द एवेति स्वरुचिविरचितदर्शनप्रदर्शनमात्रम् । ननु च मीमांसकैः शब्दस्यापौरुषेयत्वप्रदर्शनायासौ प्रागसन् क्रियते । तदभिव्यक्तिस्तु पौरुषेयी । सा प्रागसती क्रियते इति कथं स्वरुचिविरचितस्य दर्शनस्य प्रदर्शनमात्रम्, प्रमाणशक्तिविरचितस्य तथादर्शनस्य प्रदर्शनादिति चेत्, न, शब्दवदभिप्रायस्तदभिव्यक्तेरप्यपौरुषेयत्वात् । तस्याः पौरुषेयत्वात्प्रागसत्त्वे तदभिन्नस्य शब्दस्यापि तत एव प्रागसत्त्वमनुमन्यताम्, विशेषाभावात् । शब्दाद्भिन्नैवाभिव्यक्तिरिति चेत्, सा यदि श्रवणज्ञानोत्पत्तिः सैव कथं प्रागसती यत्नतः कर्तव्या ? तस्याः प्रागसत्त्वे शब्दस्याश्रावणत्वापत्तेर्नित्यत्वविरोधः, प्रागश्रावणत्वस्वभा-वत्यागेनोत्तरश्रावणत्वस्वभावोत्पत्तेः कथञ्चिदनित्यत्वमन्तरेणानुपपत्तेः । अथ श्रवणज्ञानोत्पत्तेरभावेऽपि पूर्वं शब्दस्य श्रावणत्वमेवेष्टम्, किमनया श्रवणज्ञानोत्पत्त्याभिव्यक्त्या ? स्यान्मतम्, न शब्दधर्मः श्रवणज्ञानोत्पत्तिः, तस्याः कर्मत्वक्रियात्वाभावात् । किं तर्हि ? पुरुष-स्वभावः, कर्तृत्वक्रियात्वादिति, तदप्ययुक्तम्, कर्तृत्वतस्याः प्राक्सत्त्वापत्तेरविशेषात्तद्व्यापारानर्थक्यात् । श्रवणज्ञानोत्पत्तियोग्यता शब्दस्या-भिव्यक्तिरिति चेत्, तर्हि योग्यताया समानधर्मः । योग्यतापि हि यदि शब्दधर्मत्वाच्छब्दादभिन्ना, तदा कथं तत्संती पुरुषप्रयत्नेन क्रियेत ? अथ शब्दाद्भिन्ना श्रोत्रस्वभावत्वात्तस्या इति मतिः, तथापि न सा प्रागसती श्रोत्रस्य प्रमोदेशस्थस्य सर्वदा सत्त्वात् तत्स्वभावभूताया योग्यतायाः प्रागपि सत्त्वात् । एतेनात्मधर्मो योग्यता शब्दाद्भिन्नेति निरस्तम्, नित्यत्वादात्मनः प्रागसत्त्वासम्भवात् । अथ भिन्नाभिन्ना श्र-वणज्ञानोत्पत्तियोग्यता चाभिव्यक्तिः शब्दादिति मतम्, तदप्यसत्यम्, पक्षद्वयोक्तदोषानुषङ्गात्, सर्वदा तस्याः प्रागभावायोगात्, तद्योगे वा शब्दवदेव श्रोत्रप्रमात्रोरपि प्रागसत्त्वोः प्रयत्नेन करणप्रसङ्गात्, अन्यथा स्वरुचिविरचितदर्शनप्रदर्शनमात्रप्रसक्तेः । आवरणविगमोऽभिव्यक्ति-रिति चेत्, तदावरणविगमः प्रागभिन्नभूत् ?, भूतो वा किं यत्नेन ?, विशेषस्याधानमभिव्यक्तिरिति चेत्, ननु विशेषाधानमपि तादात्म्य कर्मेत-

व्यापाराद्युपलम्भ इति चेत्, स तर्हि प्रागसन् कारकैः क्रियते न पुनर्घटादिरिति वचनविभवमात्रम्। अथ तस्यापि प्राग्विरोहितस्य सत एव कारकैराविर्भावमात्रमिष्यते, तर्हि तस्याप्यन्यस्तस्याप्यन्यत्राविर्भावनिमित्तमनवस्थानान्न कदाचित् घटादेराविर्भावः स्यात्। अथाविर्भावस्योपलम्भरूपस्य तद्रूपाविर्भावान्तरानपेक्षत्वात् प्रकाशस्य प्रकाशान्तरानपेक्षस्वभावस्येति चेत्, तर्हि तस्य कारकाद्य-समसमोऽभ्युपगन्तव्यः, ततः कार्यमाविर्भाव इति। तावद्घटादिकमपि, अपेक्षितपरव्यापारत्वाविशेषापातासमञ्जसे। न तदभ्यासमनाम-स्योपलम्भः शक्यः कर्तुम्, सर्वथातिप्रसङ्गात्। तदेवं प्रधानपरिणामतयापीष्टं घटादिकं कार्यद्रव्यमापाद्यते। यस्य च प्रागभावापह्नवेऽनादित्वमसङ्गात्कारकव्यापारानर्थक्यं स्यादिति सूक्तं दूषणम्। प्राग्विरोभावस्योपगमे वा स एव प्रागभावः सिद्धः, तस्य तिरोभाव इति नामान्तरकरणे दोषाभावादुत्पादस्याविर्भाव इति नामान्तरकरणवत्। ततो न मीमांसकस्य सांख्यमतानुसरणं युक्तम्, सर्वथा शब्दस्य प्रागभावानभ्युपगमेऽनादित्वप्रसङ्गात् पुरुषव्यापारानर्थक्यस्य समर्थनात्। तथा विनाशानभ्युपगमे तस्य किं दूषणम्? स्यावरणत्वमिति चेत्, नैतत्सारम्, तदात्मानमखण्डयतः कस्यचिदावरणत्वायोगात्। तिरोधायकस्य कस्यचिद्वायुविशेषस्य शब्दात्मानं खण्डयत एवावरणत्वे स्वभावभेदप्रसङ्गः, आवृतानावृतस्वभावयोरभेदानुपपत्तेः। तयोरभेदे वा शब्दस्य श्रुतिरश्रुतिर्वैकान्ततः प्रसज्येत, पुरुषव्यापारात्पूर्वमश्रुतिस्तदनन्तरं श्रुतिरिति विभागानुपपत्तेः। स्यान्मतम्, यथा घटादेरात्मानमखण्डयतामन्धकारस्यावरणं तथा शब्दस्यापीति, तदसत्, तस्यापि तेनात्मखण्डनोपगमात्, दृश्यस्वभावस्य खण्डनाद्भस्मसदावरणत्वसिद्धेः, सर्वस्य परिणामित्वसाधनात्। तमसापि घटादेरखण्डने पूर्ववदुपलब्धिः किं न भवितुमर्हति, तस्य तेनोपलम्भयताप्यखण्डनात्। ननु च पुरुषव्यापारात्प्राक् पश्चाच्च शब्दस्याखण्डितस्वभावत्वेपि नैकान्ततः श्रुतिः, सहकारिकारणापेक्षत्वात्, स्वविज्ञानोत्पादने तच्छ्रुतेरपि तदेकत्वे संभवादिति चेत्, तर्हि किमयं शब्दः स्वविषयसंवि-

असिमभ्युपगमे जैन्याः प्रक्रियाया विरोधः स्यादिति दूषणमाह, ' तदेतदपीत्यादि ' (६) 'द्रव्यार्थादेशादिति' (८) सौगतैश्च पर्यायार्थमात्रादेशः स्वीक्रियत इति न तत्प्रक्रियानुसरणेनोभयनयवादिनो जैनस्य सिद्धान्तव्याकोप इति भावः। प्रागभावाभावस्य भावता (८) घटप्रागभावध्वंसरूपता, तद्द्रव्यस्य (९) मृद्द्रव्यस्य, अभावासम्भवात् (९) घटोत्पत्तिक्षणे ध्वंसासम्भवात्, तत एव (९) घटस्य मृद्द्रव्यरूपघटप्रागभावध्वंसत्वाभावादेव, न जातुचिदिति (९) घटोत्पत्तेर्घटप्रागभावध्वंसोत्पत्तिनियतत्वादिति भावः। यदि पुनरिति (९) क्षणेषु पूर्वपर्यायेषु घटप्रागभावस्वभावकल्पने लाघवात्तद्व्यक्तित्वादिना तेषां सादित्वेऽपि घटप्रागभावत्वेनानादित्वेऽपि विरोधाभावादेवेति भावः। 'तथापीति' (१०) न च घटप्रागभावत्वावच्छिन्नप्रतियोगिताकध्वंसस्य घटोत्पत्तिव्याप्यत्वादयं दोष इति शङ्कनीयम्। ध्वंसस्य सामान्यावच्छिन्नप्रतियोगिताकत्वे मानाभावात्, एकघटवति घटान्तरप्रागभावसत्त्वेन तदसम्भवाच्च, एतेन यावद्घटप्रागभावध्वंसवत्त्वं घटोत्पत्तिव्याप्यमित्यपि निरस्तम्, असम्भवात्। न च यावत्तद्घटप्रागभावध्वंसवत्त्वं तद्घटोत्पत्तिव्याप्यमित्यपि वक्तुं युक्तम्, गौरवात्, तत्त्वविशेषे व्याप्तिविरहाभावाच्च ॥ द्रव्यपर्याययोरिति ( १२ ) प्राक्तनपर्यायेषु मृद्द्रव्ये च घटप्रागभावत्वं व्यासज्यवृत्तीत्यर्थः, प्रत्येकमवृत्तेः समुदायावृत्तित्वनियमात् प्रागभावत्वस्य प्रत्येकवृत्तित्वध्रौव्ये तदादाय दूषणमाह ' नैवमप्युभयेत्यादि '( १२ )॥ न च पर्याप्तिसम्बन्धावच्छिन्नावच्छेदकताकतद्घटप्रागभावत्वावच्छिन्नप्रतियोगिताकतद्घटप्रागभावाभावस्य तद्घटोत्पत्तिव्याप्यत्वादयं दोष इति वाच्यम्। एवं सति घटप्रागभावत्ववत् घटत्वघटध्वंसत्वादेरपि द्रव्यपर्यायोभयपर्याप्तत्वापत्तेरतीन्द्रियवृत्तित्वेनाप्रत्यक्षत्वापत्तेश्च, एतेन विशिष्टद्रव्यप्रागभाववादोऽपि निरस्तः।

ग्धुत्पत्तिकत्वं वर्तमानकालोत्तरकालोत्पत्तिकत्वं वा, न चेदमप्यप्रयुत्पत्तेरतीन्द्रियत्वादित्यादिना," इत्यनुमानमिति। (२) यद्यपि प्रागभावप्राहकं प्राग् नासीत् घट इति प्रत्यक्षमेव पक्षीकर्तुमुपपद्यते तथापि तस्य भावाभावविषयत्वसंशये उक्तानुमानाभ्यवप्रामाण्यमिति तात्पर्यम्। चरमसामग्र्या हेतुना प्रागभावोऽनुमीयत एवेति केचित्, तदसत्, अनुयोगितावच्छेदकरूपप्रागभावत्वादेः स्वपितद्प्रतीतौ ताद्रूप्येणानुमानासम्भवादिति दीधितिकारः, प्राग् नासीदिति प्रत्यक्षमुत्पद्यमानघटाकारपरिणतमृद्द्रव्यविषयमेव, प्रागभावादेरभावस्याधिकरणस्वरूपस्यैव स्वीकारात्मकास्तीतिप्रत्ययबलेनातिरिक्ताभावस्वीकारेऽभावेऽप्यभावान्तरापत्तावनिष्टप्रसङ्गादित्याशयवानाहेति चेत्, नेत्यादि। उपचरिताभावविषय (५) इत्यभावप्रतियोगिकाभावाधिकरणकाभावस्याधिकरणातिरेकादित्यर्थः। ननूपचरितेनाभावेनेत्यादि (६) त्वन्मत इति शेषः। अस्मन्मते त्वधिकरणात्मकाभावेनैव सर्वत्रोपपत्तेर्नानाधिकरणस्वरूपत्वेऽपि गौरवाभावादतिरिक्ताभावकल्पनानर्थक्यमिष्टमेव, त्वया नानाधिकरणेष्वभावस्य तादात्म्यातिरिक्तः सम्बन्धः कल्पनीयः, मया तु तादात्म्यमिति तवैव गौरवात्। हेत्वन्तरबीजमुपन्यस्य दूषयति—यदप्युक्तमित्यादिना (६)॥ सामर्थ्यादिति (१०) अभिलापाभावेऽपि विशिष्टज्ञानसामग्रीबललभ्यत्वादित्यर्थः। एतद् गुणादावपि तुल्यमित्याह—'तद्विरोध्यस्येति' (१०) सविकल्पकनिर्विकल्पकस्यानेकान्तस्तु भावित एव प्राक्। अतिरिक्तोऽपि प्रागभावो लाघवादेक एव कल्पनीयः प्रतियोगिभेदेनाभावभेदे मानाभावादिति पक्षं परिगृह्य तस्यानादिसान्तत्वं दूषयितुमुपक्रमते—किञ्च प्रागभाव (११) इत्यादिना, अनन्ताः प्रागभावा इति पक्षमुपन्यस्य दूषयति—'यावन्तीत्यादि' (१४) स्वतन्त्रा (१७५-२-१) अन्यानाश्रिताः, भावतत्त्वा (२) भावाश्रिताः, कालादिवदिति कालाकाशदिगादीनां हि स्वतन्त्राणां भावत्वं

तद्वत् स्वकप्रत्ते प्रागभावस्य भावत्वं स्यादिति भावः । न चानुत्पन्न इत्यादि ( ४ ) ॥ अत्रेदं चिन्त्यम्, अनुत्पन्नः प्रध्वस्तो वा प्रागभावस्य ध्वंसस्य च नाश्रयोऽभ्युपगम्यते, किन्तु प्रतियोग्यपेक्षयानभ्युपगतोपालम्भोऽयम्, प्रतियोगित्वं च तयोः स्वरूपसम्बन्धविशेषरूपं ज्ञानविषयतावदेवोपपद्यत इति । 'यदि पुनरेक एवेति' (५) देशकालयोर्विशेष्यहेतुत्वेनानतिप्रसङ्गात् तत्कार्यनियमाय तयस्त्राभावो न कल्पनीयः, किन्तु व्यवहारार्थम्, स चैकत्वेऽपि विशेषणभेदात्कृमत्त्वोपचारेण निर्वहतीत्यर्थः । कार्यस्यैवेति ( ७ ) पूर्वकालावच्छिन्नप्रतियोगितया घटविशिष्टोऽभावो घटप्रागभावः १ । उत्तरकालावच्छिन्नप्रतियोगितया तादृशः स घटध्वंसः २ । तादात्म्यावच्छिन्नप्रतियोगितया तादृशः स इतरेतराभावः ३ । तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगितया तादृशः सोऽत्यन्ताभाव इत्यर्थः ४ । प्रत्ययभेदस्यापि तथोपपत्तेरिति ( ८ ) न चैवं स्नेहप्रतियोगिकाभावस्यैव गन्धप्रतियोगिकत्वात् पृथिव्यां न स्नेह इति वत् न गन्ध इति व्यवहारापत्तिरिति वाच्यम् । विशिष्टाधारताभेदस्वीकारेणोपपत्तेः, तत्र स्नेहप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारतासत्त्वेऽपि गन्धप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारताभावात्, समवायैकत्ववादेऽपि रूपवद्रूपत्वादिविविक्तव्यवहारस्येत्थमेवोपपत्तेः, सर्वैकत्वप्रतिबन्ध्याऽभावैकत्वं सिध्यतीति दृष्टान्तद्वारेणाह—सत्तैकत्वेऽपीत्यादिना (८) ॥ न तु सत्तेति (१२) विशेषणभेदेन विशिष्टसत्ताभेदवदाधारताभेदाद्वा प्रतिनियतभेद व्यवहारोपपत्तेरित्यर्थः । इयमेव रीतिरभावेऽप्यनुसर्तव्येत्याह तर्हि तत एवेति (१२) अस्त्वेवमेक एवाभावस्तत्राह—न चैकोऽप्यभाव इत्यादि(१३) ॥ द्रव्यादीत्यादि (१४१–१–१) यथा वैशेषिको लोको द्रव्यादिषट्पदार्थविकल्पमात्रा द्रव्यादिव्यवहारं प्रवर्तयति, यथा वा प्रमाणादिषोडशपदार्थवादी नैयायिकः, प्रकृतिमहदादिपञ्चविंशतिपदार्थवादी साङ्ख्यः,

रूपादिस्कन्धपञ्चकवादी सौगतश्च तथाविकल्पात् तद्व्यवहारं प्रवर्त्तयति–यथा गतानुगतिको लोको विषयनिरपेक्षमेव विकल्प
मात्रात् प्रागभावादिव्यवहारमित्यर्थः । ततो नेत्यादि (१४१–१–२) प्रमाणेन न प्रतीयत इत्यर्थः । असत्स्वभावात्मा प्रती
यमानस्त्वयं शशविषाणवत् प्रेक्षावतामुपालम्भपात्रतामनुभवतीति हृदयम् । न पुनः साङ्ख्योऽन्यो वेति (२) साङ्ख्यः कापिलो,
योगादिरन्यः, साङ्ख्यस्यानुपालम्भपात्रत्वे हेतुमाह–तस्येति, उपचरितकार्यद्रव्याभ्युपगममभिप्रेत्याह–' तिरोभावे
त्यादि (२) भावस्य भावेत्यादि' (२) तथा च न, साङ्ख्यस्य सर्वथा प्रागभावपक्षयोऽसत्स्वभावातिविषयतोपगमस्यैव तदर्थ
त्वादिति भावः । अन्यस्य योगादेरनुपालम्भपात्रत्वे तु व्यक्त्या प्रागभावस्वीकार एव हेतुर्द्रष्टव्यः, तैरपीति (७) न्यायवादि
भिरपीत्यर्थः । अपिना नैयायिकैकदेशिभिरपि तन्निराकरणं सूच्यते, तथा च दीधितिकृन्मतानुसारिणः, ननु प्रागभावे किं
मानं ? न तावत् प्रत्यक्षम्, असिद्धेः । घटो भविष्यतीत्यादिप्रत्ययस्य वर्तमानकालानन्तरकालोत्पत्तिकत्वविषयत्वात्, नाप्यनु
मानम्, अप्रयोजकत्वात्, न च घटादिकार्यधारावारणाय प्रागभावसिद्धिः, कार्यद्रव्यत्वावच्छिन्ने समवायेन द्रव्यत्वावच्छिन्नाभावस्य
हेतुत्वेनैव तद्वारणात्, न चाव्याप्यवृत्तेः कार्यस्य द्वितीयक्षणे उत्पत्त्यापत्तिः, समानावच्छेदकतया तत्र भावस्य हेतुत्वात्, न
च संयोगादेः प्रदेशनियमः स्वसमवायीनाधारप्रागभावप्रादेशिकत्वादिति प्रागभावसिद्धिः, तद्देशावच्छेदेन हेतुत्वेनैव तन्नियमात्,
न च तथापि निर्विकल्पकस्य चतुर्थक्षणे उत्पत्तिवारणाय तत्रोत्तरज्ञानाभावस्य कारणत्वं वक्तव्यम्, तथा च लाघवात्प्रागभा
वस्य तत्त्वमुचितमिति वाच्यम्, तन्निर्विकल्पककालोत्पत्तिकव्यक्त्यादेरेव तत्र प्रतिबन्धकत्वात्तत्सम्बन्धतदभावस्य च तद्धेतु
त्वात्तत्तो निर्विकल्पकत्वस्य कार्यतानवच्छेदकत्वात् तादृशप्रत्यक्षसामग्रीसत्त्वे तादृशप्रत्यक्षोत्पादनियमान्निर्विकल्पकापत्तिरेव

तदा तत्क्षणे प्रागभावस्य नाशत्वं स्यादिति भावः । न चानुत्पन्न इत्यादि ( ४ ) ॥ अत्रेदं चिन्त्यम्, अनुत्पन्नः प्रध्वस्तो वा प्रागभावस्य ध्वंसस्य च नाशयोऽभ्युपगम्यते, किन्तु प्रतियोग्येवेत्यनभ्युपगतोपालम्भोऽयम्, प्रतियोगित्वं च तयोः स्वरूपसम्बन्धविशेषरूपं ज्ञानविषयतापदेशोपपद्यत इति । 'यदि पुनरेक एवेति' (५) देशकालयोर्विशेष्याद्युत्वेनानतिप्रसङ्गात् तस्यर्धनियमाय तत्तप्रागभावो न कल्पनीयः, किन्तु व्यवहारार्थम्, स चैकत्वेऽपि विशेषणभेदाद्भिन्नस्योपचारेण निर्वहतीत्यर्थः । व्याचष्टेयति ( ७ ) पूर्वकालावच्छिन्नप्रतियोगितया घटविशिष्टोऽभावो घटप्रागभावः १ । उत्तरकालावच्छिन्नप्रतियोगितया तादृशः स घटध्वंसः २ । तादात्म्यावच्छिन्नप्रतियोगितया तादृशः स इतरेतराभावः ३ । तादात्म्येतरसंसर्गावच्छिन्नप्रतियोगितया तादृशः सोऽत्यन्ताभाव इत्यर्थः ४ । प्रत्ययभेदस्यापि तथोपपत्तेरिति ( ८ ) न चैव स्नेहप्रतियोगिकाभावस्यैव च जलप्रतियोगिकत्वात् पृथिव्यां न स्नेह इति वत् गन्ध इति व्यवहारापत्तिरिति वाच्यम् । विशिष्टाधारतामेवस्वीकारे दोषाभावः, तत्र स्नेहप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारताविरहेऽपि गन्धप्रतियोगिकत्वविशिष्टाभावत्वावच्छिन्नाधारताभावात्, समवायैकत्ववादेऽपि रूपसमीरूपत्वादिविशिष्टव्यवहारस्येत्थमेवोपपत्तः, सर्वैकस्यप्रतिपन्नाभावैकत्वं सिद्धमिति दृष्टान्तयतोऽपाह—सत्तैकत्वेऽपीत्यादिना (८) ॥ ननु सत्तेति (१२) विशेषणभेदेन विशिष्टसत्ताभेदाश्च तदाधारताभेदाश्च प्रतिनियतभेद व्यवहारोपपत्तेरित्यर्थः । इयमेव रीतिरभावेऽप्यनुसर्तव्येत्याह तर्हि तत एवेति (१३) प्रत्येकमेक एवाभावस्तत्राह—न चैकोऽभाव इत्यादि(१३) ॥ द्रव्यादीत्यादि (१५६-१-१) यथा वैशेषिको लोकः द्रव्यादिषट्पदार्थविकल्पनाभावादित्यव्यवहारं मन्यते, यथा वा प्रमाणादिषोडशपदार्थवादी नैयायिकः, प्रकृतिमहदादिपञ्चविंशतिपदार्थवादी सांख्यः,

दुर्घटा, सामग्र्याः कार्यतावच्छेदकावच्छिन्नव्याप्यतया एव स्वीकारात् । अथ तथापि स्वतन्तुषु भाविनः पटस्य द्वित्
रादितन्तुषु संयुक्तेषूत्पत्तिः स्यात्, सामग्रीसत्त्वात्, न च प्रागभावस्यापि सत्त्वात्तथापि तदनुत्पत्तिर्दुर्घटा, तत्प्रागभाव
व्याप्यचरमसंयोगत्वेन हेतुत्वादिति चेत्, न, कतिपयसंयोगेष्वतीतेष्वनागतेषु वा तत्पटानुत्पत्तिप्रसङ्गात्तत्पटव्याप्यचरम
संयोगत्वेनैव हेतुत्वसम्भवाच्च, वस्तुतः सामग्र्याः कार्यतावच्छेदकावच्छिन्नोत्पत्तिव्याप्यतया एवोपगमात्तदा द्वित्रादि
तन्तुकपटस्यैवोत्पत्तेः स्वतन्तुकपटस्यापादकाभावो व्यक्तिस्थानीयापत्तिविरहात्, तर्हि तत्पटत्वावच्छिन्ने किं नियाम
कम्, सामान्यतः तत्तत्कारणतावच्छेदकतन्तुतत्संयोगादितादृशनियामकत्वमेव हेतुत्वमिति चेत्, तर्हि प्रागभावस्वीकारेऽपि
तत्त्वं दुर्वारम्, तद्रूपेण तदान्यथासिद्धत्वमिति चेत्, तदेति किंफलम्, तर्हि जन्यसत्त्वेन सत्त्वेन हेतुहेतुमद्भावेनैव निर्वाहोऽ-
स्त्विति चेत्, न । तन्तुत्वादिना कारणत्वबुद्धिव्यपदेशयोरप्रामाण्यापत्तेश्च, किञ्चाकस्मिकत्वं तदवच्छिन्नसामग्र्यनिश्चये यदा
तत्सत्त्वेऽवश्यं पटोत्पत्तिरित्यनिश्चयः, इत्थं च प्रवृत्तिरपि दुर्घटा । तादृशनिश्चय एव कृतिसाध्यताधीसम्भवात्, तत्पटत्वाव
च्छिन्नस्याकस्मिकत्वं स्थितम्, तद्धर्मावच्छिन्नसामग्रीसत्त्वेऽपि तथानियमायोगात् तद्धर्मावच्छिन्ने प्रवृत्त्यभावाच्च, किञ्च विशे
षान्वयव्यतिरेकाभ्यां सामान्यव्यभिचारानिर्णयात्तु तन्तुविशेषान्तरानुपस्थितिदशायामप्रतिसन्धानदशायां सामान्यत एव
हेतुहेतुमद्भावग्रहात् प्रागभावादेव न विशेषकार्यकारणभावसिद्धिः । व्यक्तिस्थानीयापत्तिसत्त्वेऽपि च तदा स्वतन्तुकमुत्प
त्तिर्विविधचरमसंयोगहेतुत्वादेवोपपद्यते । अथास्तु फलनियमचरमसंयोगहेतुत्वात्तथापि तेषां नियमाय प्रागभावसिद्धिः, तत्तत्
तन्तूनां तत्संयोगानां च विशिष्य हेतुत्वे गौरवात् व्यभिचाराच्च तत्प्रागभावस्यैव लाघवात्पटहेतुत्वात्, किञ्च यत्र यत-

तन्तुरूपटस्य मध्येऽवयवसंयोगनाशात्मकतत्तन्तुकपटद्वयोत्पत्तिस्तत्र तयोः कालनियमस्य तत्तत्तन्तुकनाशहेतुत्वेनैव सिद्धौ देशनियमाय प्रागभावसिद्धिरिति चेत्, न। तत्र चरमसंयोगतत्तन्तुकनाशयोः समानाधिकरणान्यतमत्वविशेषसंसर्गेण हेतुत्वादेव देशनियमस्यापि सम्भवात्। न च यत्र युगपदुत्पन्नैः तत्तत्तन्तुसंयोगैः पट आरभ्यते तत्र चरमसंयोगानामपि तत्तत्त्वेन हेतुत्वे गौरवात् प्रागभावसिद्धिः, तत्रापि तावत्संयोगमात्रवृत्तिजात्या द्रव्यारम्भकतावच्छेदकजात्यैव वा तत्कालावच्छिन्ना न्यतमत्वसंसर्गेण हेतुत्वात्। न च बुद्धिविशेषेण विनिगमकाभावः, तस्य प्रत्यक्षजन्यत्वादिरूपतया निर्णयाभावाभिमतान्यमि चारकस्य संयोगस्यैव हेतुत्वात्। स्यादेतत्, व्यक्तिस्थानीयापत्तिसत्त्वे बहूनां तन्तूनां युगपदुत्पन्नानन्तसंयोगादुत्पन्नपटस्य नानासंयोगनाशाभावात् पुनस्तेषामेव तन्तूनां संयोगान्तरात्पटान्तरोत्पत्तिकाले उत्पत्तिवारणाय प्रागभावसिद्धिः, उपरपटस्तु प्राग् नोत्पद्यते पूर्वपटध्वंसस्यापि तद्धेतुत्वात्। न च प्राक्तनपटे बहुत्वविशेषस्य हेतुत्वान्न दोषो नव्यनये तद्बहुत्वस्याग्रेऽपि सत्त्वादीश्वरानन्तमात्रतनपटोत्पत्तिवारणाय कार्यस्यावच्छिन्ने प्रागभावत्वेन हेतुत्वस्यैकस्यैवोचितत्वात्, आकाशादुदासीन मादाय बहुत्वस्य हेतुतापत्तेरेवेति चेत्, न, ईश्वरीयोपादानप्रत्यक्षादेस्तत्कालावच्छिन्नतत्पटावच्छिन्नविशेष्यतया हेतुत्वेऽनु पपत्त्यभावात्॥ वस्तुतस्तत्कालावच्छिन्नतत्पटहेतुतत्संयोगाभावकूटस्यान्यतमाय एक एव कालदेशनियामक इति नूतनः पन्था इति दिक्॥ अत्र तत्कालावच्छिन्नतद्देशस्वरूपायास्तयामन्यतायाः एव तत्कार्यदेशकालनियामकत्वम्, न च वि- निगमकाभावः, सामानाधिकरण्यप्रत्यासत्तेर्विनिगमकत्वादित्यस्मदीयाः॥ प्रागभावतत्प्रागभावादेस्स्थिति (९) पटस्य प्रागभावः क्व तस्य कोशस्य स्यासस्यापि मृत्पिण्ड एव परमाणौ विभ्रान्तिः, तत्परम्परानाधारघटध्वंसप

विद्रव्यरूपत्वे च सम्बन्धविशेषावच्छिन्नप्रतियोगिताकः स इति तथ्यम् । पर्यायरूपतयापीति ( ९ ) नानारूपा नुगतस्य प्रागभावपर्यायस्यैकस्यापि कल्पनादित्यर्थः । यद्यप्यनुगतगुणपर्यायाधारतया प्रत्यभिज्ञानविषयतया च न तदेकत्वं सिध्यति, तथापि घटादौ घटप्रागभावादेरेकस्यैव हेतुत्वे लाघवात्तस्यैकत्वसिद्धिरिति परमार्थः । अनेकत्वेऽपि कथञ्चि देकत्वं स्याद्वादघटनविरुद्धमेव शरीरादिदृष्टान्तेन घटस्यति, स चैकानेकस्वभाव इत्यादि ( ८ ) ॥ कारणस्येति ( १२ ) नहि कपालमालारूपघटकार्यनाशे घटकारणं जायते, विपरीतव्याप्तेरभावात्, न च तदभावे घटोत्पत्तिरापादयितुं शक्यत इत्यर्थः । मृदादिद्रव्यमिति (१४७-१-२) घटप्रध्वंसे व्यवहारहेतुता तु न घटोत्तरकालभाविघटाकारविकलघट द्रव्यत्वेन, उत्तरत्वस्य ध्वंसगर्भतयात्माश्रयादिदोषापत्तेः, किन्तु स्वोत्तरकालभावित्वस्याकारविकलत्वस्य द्रव्यस्यैतदुभयसम्बन्धेन तत्तद्घटविशिष्टमृदादित्वेन चेति बोध्यम् । प्रमाणार्पणया घटविशिष्टत्वेन स्वोत्तरकालावच्छिन्नत्वपरिभाषितस्वद्रव्यत्वसम्बन्धेन तत्तद्घटविशिष्टमृदादित्वेन चेति बोध्यम् । प्रमाणार्पणया तु प्रध्वंसो द्रव्यपर्यायात्मैकानेकस्वभावश्चेति प्रागवदेव द्रष्टव्यम् । कार्यद्रव्यं तथापादनीयमिति (८) पुरुषव्यापार नान्तरीयकत्वेन घटादेः कार्यद्रव्यत्वं साधनीयमित्यर्थः । ततश्च प्रागभावाप्रतियोगित्वेन तस्यानादित्वमापादनीयम् । घटा दिकार्यद्रव्यं यदि प्रागभावाप्रतियोगि स्यादनादि स्यादित्येवमिति बोध्यम् । तदाह–' तथेत्यादि ' कार्यस्यानादित्वयोरुभ योरापादने तु प्रागभावनिह्नवस्य न कथमपि सामर्थ्यमित्येवं व्याख्यातम् । ' आपाद्यस्यापीति ' (९) स्वतन्त्रानुमानवत् प्रसङ्गापादनस्यापि प्रतिवादिद्रूपकत्वसामर्थ्यादिति बोध्यम् । अतिदिशति एतेनेति ( ९ ) ॥ तस्य विरुद्धत्वादिति ( १२ ) शब्दोऽभिव्यक्तेः प्राक् सन् स एवायमिति प्रत्यभिज्ञायमानत्वादित्यत्र सर्वथा प्राक् सत्ताया एव साध्यत्वा

णामेऽप्येष पर्यनुयोगस्तुल्य इति (१४८–२–२) अवस्था कालकृतो विशेषः, परिणामस्तु सत एव अवेक्षपरिमाणाविनाप्यथा माव इति विशेषः। तस्य (५) प्रधानस्य, तत्कार्यस्येन (५) उपकारकार्यस्येन, उपकार्यत्वस्य कार्यत्वविशेषत्वादित्यर्थः। भाष्ये 'सर्वं समानमिति' (५) परिणामभेदाभेदपक्षद्वयमित्यर्थः, तदाह वृत्तिकृत्। 'यावन्तो हीत्यादि' (६)॥ तस्यामिति ( ) तस्यां (८) प्रधानस्योपकाराणां चाऽनवस्थायाम्, भोग्यस्य प्रकृतिमहदादेरभावे, पुंसो भोक्तृत्वाभावात् भावः स्यात् (८)। तस्य (९) भोक्तृत्वस्य, तल्लक्षणत्वात् (९) भोग्यसद्भावनियतत्वात्, अवस्थानाभावात् (९) स्वरूपासिद्धेः। तर्हि तस्य कारणात्मतामोऽभ्युपगन्तव्य इति (१४९–१–३), तस्याविर्भावस्य, न चैवं तदाविर्भावस्य नित्यं सत्त्वमसत्त्वं वा स्यादित्यर्थः। आत्मलाभे (४) उत्पत्तौ, सदेवं सांख्यमतस्यायुक्तत्वात् शब्दस्य नित्यत्वसमर्थनाय तदनुसरणं मीमांसकस्य न न्याय्यमित्युपसंहरति 'ततो नेत्यादि' (७)॥ किं कृतमश्रवणमिति (८) शब्दस्य स्वाभिकपदैःभाषणकारणस्यासत्त्व स्य सत्त्वादित्यर्थः। 'तिरोधायकस्येत्यादि (९)' प्रौढिवादोऽयम्॥ वस्तुतः शब्दश्रावणप्रतिबन्धकवायुविशेषकल्पनागौर वमेन दूषणं बोध्यम्। किञ्चैवं कत्वखत्वादिप्रकारकप्रत्यक्षप्रतिबन्धकतावच्छेदिका अपि जातयो वायुसंयोगेषु कल्पनीयास्ताश्च परस्परं कोलाहलस्थलीयवायुसंयोगे संकीर्यन्ते, तदा कत्वाद्येकतरप्रकारकप्रत्यक्षस्याप्यभावादिति जातिरूपो विशेषो दुर्वचः, तथाच वायूनामन्यथमत्वादिना प्रतिबन्धकत्वे चोदासीनप्रवेशाप्रवेशाभ्यां विनिगमनाविरह इति न किञ्चिदेतत्। ननु कोलाहले तथा च विना कत्वादिप्रकारकप्रत्यक्षे हेतुत्वमपेक्ष्य विजातीयनिमित्तपवनसंयोगहेतुत्वमेव ज्यायः। तथा च विना कत्वादिप्रकारणाय दोषाभावानां कत्वादिप्रत्यक्षे हेतुत्वमपेक्ष्य विजातीयनिमित्तपवनसंयोगाभावकृतमश्रवणं भविष्यतीति नानुपपत्तिः, प्रत्युत शब्दभागमात्रस्य ध्वानभ्युपगमेऽपि शब्दस्य विजातीयनिमित्तपवनसंयोगाभावकृतमश्रवणं भविष्यतीति नानुपपत्तिः, प्रत्युत शब्दभागमात्रस्य

माकल्पनलाघवेनोपपत्तिरेवेत्याशङ्क्याह–' ननु चेत्यादि ' (१३) तदभुतिरपीत्यत्र नैकान्तत इति योजनीयम् । तद्विकल्पे सम्भवादिति ( ) सहकारिकारणविकल्पेऽभुते: सम्भवादित्यर्थः । तर्हि किमयमित्यादि (१४) ॥ योग्यशब्दसत्वे इन्द्रियमनोव्यापारसाद्गुण्ये तत् प्रत्यक्षं स्यादेव निमित्तपवनसंयोगस्य ग्राहसन्निधानमात्रेण गन्ध इव शब्दे कर्णसन्निधानमात्रेणोपकारित्वात् विशिष्य शब्दप्रत्यक्षहेतुत्वे मानाभावादित्यर्थः । अत एवात्र नैयायिको मीमांसकं पर्यनुयुङ्क्ते, त्वया चैत्रादेः स्वीयमैत्रस्थकारादिककारादेः प्रत्यक्षे चैत्रादिकर्णावच्छिन्नानां विजातीयसंयोगानां कारणत्वं वाच्यमित्यविशेषेऽपि मम त्वन्येषु त्वया चैत्रादिककारादौ विजातीयवायुसंयोगो हेतुस्तत्तुल्यीयनिखिलशब्दप्रत्यक्षे च तत्तुल्यीयकर्णावच्छिन्नसमवाय इति कथं न लाघवमिति, अस्मन्मते तु वायो वायुः प्रापको न तु कारको व्यञ्जको वेति तदुपनीतशब्दस्य श्रोत्रेण संयोगप्रत्यासत्त्यैव प्रत्यक्षशब्दविषयकभावने श्रोत्रसंयोगस्यैवैकहेतुत्वेन सत्कोपपत्तावतिलाघवमिति भवेयम् । असामर्थ्यसम्बन्धेऽभ्यभ्युपगमे सकृदा श्रुतिः स्यात् क्रमश्रुतिश्च विरुध्येत । कार्यत्वे तु वक्तृमोत्पविज्ञानयोः क्रमवृत्त्यपेक्षया क्रमोत्पत्तिप्रतिपत्त्योरविरोध इत्याह–किश्च वर्णा इत्यादिना (१४९–२–५)ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णा नापि नित्या इत्यन्तेन ॥ ( १५०–१–५ ) ननु चैत्रादिककारादिप्रत्यक्षे विजातीयनिमित्तपवनसंयोगहेतुत्वाभावानुपपत्तिरिति चेत्, न, उक्तोपपत्तात्, किञ्च शब्दस्याकार्यत्वपक्षे तत्र चैत्रीयत्वादेरेवासिद्धिः, चैत्रजन्यत्वमेव हि चैत्रीयत्वं स्वाश्रयजन्यतावच्छेदसम्बन्धेन चैत्रत्वमेव वा, एवं च शब्दविशेषादवक्तृविशेषानुमानोच्छेदप्रसङ्गः । न च चैत्रहस्तामिव्यक्तिविषयत्वमेव चैत्रीयत्वं,

मैत्रशब्दस्यापि चैत्रकर्णागतस्य चैत्रेणाभिव्यक्तेः । न च चैत्रीयताल्वादिव्यापारजन्याभिव्यक्तिविषयत्वं तत्, शब्दत्वाव्याप्ति-प्रसङ्गात्, नापि शब्दत्वे सतीतिविशेषणान्नातिप्रसङ्गः, एतावदप्रतिसन्धानेऽपि चैत्रीयोऽयं शब्द इत्यनुभवात्, न चैवं चैत्री यत्वं जातिरेव न तु चैत्रजन्यत्वादिकमपीति तद्विषयोऽनुभवो न शब्दधर्मत्वपक्षपातीति वाच्यम् । तारत्वजातेरपि चैत्रजन्य तावच्छेदकत्वेन सिद्धौ तस्य तद्व्याप्यत्वादिति दिक् । नन्वनुमानाच्छब्दनित्यत्वं सेत्स्यतीत्याशङ्कते 'ननु चेत्यादि' (५) तदुपयति भाष्यकृत् 'क्षणिकेष्वेवेति (६)' नर्तक्याः कर्माशुतारादिषु क्षणमधुरेष्वेव तदेवेदं करणं स एवायमङ्गहार इति प्रत्यभिज्ञानदर्शनान्नित्यत्वविरुद्धक्षणिकत्वेन व्याप्तं प्रत्यभिज्ञानं नित्यत्वे साध्ये विरुद्ध सामान्यदोषान्नैकत्रैवैकत्वविषयकत्वेन तत् प्रतिनियमादित्यर्थः । ऋजुसूत्रनयमाश्रित्य चेदं मीमांसकं प्रति दूषणमिति स्याद्वादिनो नापसिद्धान्तो, नानानयमये भगवत्प्रवचने क्वचित् कस्यचिदाश्रयणे दोषाभावादिति मन्तव्यम् । दोषस्थलान्तरमाह ' एतेनेति ' ( ६ ) क्षणिकाभि युक्तिभिर्हेतोर्व्यभिचार इत्यर्थः, इत्यभिधानादिति ( ७ ) ग्रन्थान्तर इति शेषः । विरुद्धत्वेऽपि व्यभिचाराभिधानं च दोषसाङ्कर्यसम्भवादविरुद्धम्, युक्तिकथयोरप्येकत्वाभ विरुद्धत्वमित्याशङ्कते-'नन्विति' (७) ॥ अतिप्रसङ्गभेदद्वयकं युक्तमिति परिहरति किंचैकत्वेऽपीत्यादि (८)॥ शब्दानित्यत्वमुपसंहरति, तदयमिति (१२)॥ सर्ववर्णैकत्वनिरासादकारादिवर्णस्यैकत्व मपि नास्तीत्याह-'तदेवमिति (१२)॥' देशभेदः शुकसारिकाद्याश्रयभेदात्, स्वभावभेदश्च तारमन्द्रादिभेदाद्द्रष्टव्यः । 'युगप त्प्रतिनियतेति' (१५०-२-४) ननु तारं त्वादयो वायुगता एवाकारादावारोप्यन्त इति न तेऽकारादिभेदकाः स्युरिति चेन्नैवं, एव सत्यत्वादेरपि वायुधर्मत्वापत्तौ शब्दस्यैक्यप्रसङ्गात्तदेव शब्दस्यापि वायुधर्मत्वापत्तौ शब्दमात्रस्य दृगजलाञ्जलित्वप्रस

शाब्दत्वनञापत्तेनोपपत्तिरपेत्याशंक्याह–' ननु चेत्यादि ' (१३) तदभुतिरपीत्यत्र नैकान्तत इति योजनीयम् । तच्छ्रिकण्ठे सन्मतादिति ( ) सहकारिकारणविकलेऽश्रुतेः सन्मतादित्यर्थः । तर्हि किमयमित्यादि (१४) ॥ योग्यशब्दसत्वे इन्द्रियमनोव्यापारसाद्गुण्ये तत् प्रत्यक्षं स्यादेव निमित्तपवनसंयोगस्य श्रावणसन्निधानमात्रेण गन्ध इव शब्दे कर्णसन्निधानमात्रेणोपकारित्वात् विशिष्य शब्दप्रत्यक्षहेतुत्वे मानाभावादित्यर्थः । अत एवात्र नैयायिको मीमांसकं पर्यनुयुङ्क्ते, त्वया शब्देऽन्वया चैत्रादिककारादेः प्रत्यक्षे चैत्रादिकर्णावच्छिन्नानां विजातीयसंयोगानां कारणत्वं वाच्यमित्यतिगौरवं मम त्व धर्म्येऽन्वया चैत्रादिककारादौ विजातीयवायुसंयोगो हेतुस्तत्कुम्भीपनिसिद्धशब्दप्रत्यक्षे च तत्कुम्भीकर्णावच्छिन्नसमवाय इति धर्मं न लाघवमिति, अस्मन्मते तु वायो वायुः व्यापके ननु कारको व्यञ्जको वेति तदुपनीतशब्दस्य श्रोत्रेण संयोगसम्बन्धेन ग्रहणाच्छब्दविषयकभावे श्रोत्रसंयोगत्वेनैकहेतुतयैव सकलोपपत्तावतिलाघवमिति भवेयम् । असामर्थ्यसम्बन्धेऽसामर्थ्यस्य व्यतिरेकव्यतिरेकपर्यस्तु परिणामपर्यवसानवदेव प्राचीनमतपथानुरोधिभिरनुसन्धेयः । धर्माणां नित्यत्वसर्वगतत्वाभ्युपगमे सहसा श्रुतिः स्यात् क्रमश्रुतिम विरुध्येत । कार्यत्वे तु तस्य श्रोत्रविज्ञानयोः क्रमरूपपेक्षया क्रमोत्पत्तिप्रतिपत्त्योरविरोध इत्याह–किञ्च वर्णा इत्यादिना (१४९–२–५) ततः क्रमोत्पत्तिप्रतिपत्त्योरन्यथानुपपत्त्या न सर्वगता वर्णा नापि नित्या इत्यन्तेन ॥ ( १५०–१–५ ) ननु चैत्रादिककारादिप्रत्यक्षे विजातीयनिमित्तपवनसंयोगहेतुत्वाभावानुपपत्तिरिति चेत्, न, तत्कोपत्वात्, किञ्च शब्दस्याकर्णत्वपक्षे तत्र चैत्रीयत्वादेरेवासिद्धिः, चैत्रजन्यत्वमेव हि चैत्रीयत्वं स्यात्तज्जन्यतावच्छेदकसम्बन्धेन चैत्रसमवेतत्वं वा, एवं च शब्दविशेषाद्वक्तृविशेषानुमानोच्छेदप्रसङ्गः । न च चैत्ररूपाभिव्यक्तिविषयत्वमेव चैत्रीयत्वं,

चैत्रशब्दस्यापि चैत्ररूपागतस्य चैत्रस्याभिव्यक्तेः । न च चैत्रीयत्वाभ्यामाविभ्यापारमन्यामिव्यक्तिविषयत्वं तत्, शब्दत्वापत्ति-
प्रमाणात्, नापि शब्दत्वे प्रतीतिविशेषप्रसङ्गनातिप्रसङ्गः, एतावदप्रतिसम्पादनेऽपि चैत्रीयोऽयं शब्द इत्यनुभवात्, न चैवं चैत्री
पदं जातिरेव न तु चैत्रजन्यत्वादिकमपीति वह्निपोऽनुभवो न शब्दकार्यत्वपक्षपातीति भाव्यम् । तादृशभावेऽपि चैत्रजन्य
तावच्छेदकत्वमेव मिथो यस्य तथात्वादिति दिक् । नन्वनुमानाद्धर्मनित्यत्वं सेत्स्यतीत्याशङ्क्य 'ननु चेत्यादि' (५)
तद्दूषयति भाष्यकृत् 'क्षणिकेष्वेवेति (६)' नर्थक्या कर्माङ्गत्वादिषु धर्ममन्त्रेष्वेव तदेतदेव फलं स एतावन्मात्रप्रकार इति
प्रत्यभिज्ञानदर्शनाभिरपत्यविलक्षयभिकत्वेन व्याप्तं प्रत्यभिज्ञानं निरस्तत्वे साध्ये विरुद्धं तादृशदोषादनेकधैवैकस्याविषयकत्वेन पाद्
प्रतीतिनियमादित्यर्थः । ऋजुसूत्रनयमाश्रित्य चेदं मीमांसकं प्रति दूषणमिति स्याद्वादिनो नापरिभ्रान्तो, नानानयमये
भगवत्प्रवचने क्वचित् कस्यचिदाश्रयणे दोषाभावादिति मन्तव्यम् । दोषस्थानान्तरमाह 'एतेनेति' (६) क्षणिकाभि
बुद्धिभिर्वैशेष्यमिचार इत्यर्थः, इत्यभिधानादिति (७) क्षणान्तर इति शेषः । विरुद्धत्वेऽपि व्यभिचाराभिधाने च
दोषसाङ्कर्यसम्भवादविरुद्धम्, बुद्धिकर्मणोरप्येकस्याभ विरुद्धत्वमित्याशङ्क्ते–'नन्वियमि' (७) ॥ अतिप्रसङ्गाभेदमुक्तं युक्तमिति
परिहरति किंचैकस्येऽपीत्यादि (८)॥ शब्दानित्यत्वमुपसंहरति, तदयमिति (१२)॥ सर्वपर्यैकस्यनिरासादकारादिपर्यस्यैकत्व
मपि नास्तीत्याह–'तदेवमिति (१३)॥' देशभेदः शब्दसारिक्रियाभयभेदात्, स्वभावभेदश्च तारमन्दादिभेदाद्भण्याः । 'युगप
स्प्रतिनियतेति' (१५०–२–४) ननु तार स्वादयो वायुगता एवाकारादावारोप्यन्त इति न तेऽकारादिभेदकाः स्युरिति चेन्नैवं,
एवं सत्यतारादेरपि वायुधर्मत्वापत्तौ शब्दस्यैक्यप्रसङ्गात्तद्देष शब्दस्यापि वायुधर्मत्वापत्तौ शब्दमात्रस्य दृगजलाञ्जलित्वप्रस

ग्राप। मस्तु तर्हि तारमन्द्रशुकसारिकापैत्रादिप्रभवभेदेनैव शब्दनानात्वं तारादिस्त्वकार एक एवेति चेपत्राह—स एवाय मकार इतीत्यादि, (४)॥ 'नहीति' (६) नहि कश्चित्केनचित्सारूप्येन कथिसपमि प्रत्ययमर्थे एकत्वप्रत्ययो न स्यात्, किन्तु स्यादेव, तथा च सर्वस्यैकस्य स्यादर्थवदित्यर्थः। वर्णकत्वे विशेषबुद्धेः प्रकारः कः स्यादपत्राह—'तच्छेदेत्यादि' (६) तच्छेदविशेषा वर्णसम्बन्धिनोऽप्रधाना विशेषाः कल्पिता अकारादयस्तत्प्रबुद्धेस्तद्वासनायाः, तदिदमकारादेकत्वेऽपि तुल्यमित्याह—'सर्वस्यामकारादेरपीत्यादि' (६)॥ प्रयत्नानन्तरीयको प्रयत्नजन्यः, शब्दस्य कार्यत्वे पुद्गलपर्यायत्वे नानित्यपत्तिमाशङ्कते 'ननु शब्दस्येत्यादि' (९) ॥ बाधायाधायकभावोऽप्यत्रिसमभावभेदमित्युपरयति नेत्यादिना (१०) उभयत्र दर्शनाभावप्रयोजकत्वौल्यमुपदर्शयति—गन्धपरमाणूनामित्यादिना (१०)॥ बात्याऽस्यत्वमनियतमिति पुनराद्य इव प्रतिबन्धोपरचित्तमाह—अथ मतमेतदित्यादिना (११) ॥ प्रतिबन्धिरमुत्तरमिति। महत्त्वसमानाधिकरणोद्भूतरूपा माथमस्यत्वप्रयोजकमुभयत्र तुल्यबदुपदर्शयति—अथ तस्येत्यादिना, ( ) प्रसङ्गान्तरमपि गन्धद्रव्यदृष्टान्तेनैव निराकर्तेति—शब्दपरमाणूनामित्यादिना (१५१–१–२), शब्दपरमाणुप्रतिघातोऽपीति (१४), कुड्यादिनाऽस्येवेति दृष्टेन योजनीयम् । 'गन्धपरमाणूनामपीति' (१३) अत्राप्यागमनादीनामदृष्टानां परिकल्पनाप्रसङ्ग इति सम्बन्धनीयम्। शब्दपुद्गलानामपि(४) इत्यत्रापि प्रतिपत्तिविधेयान्यथानुपपत्त्येत्यादि प्राकर्न योजनीयम्। नन्वेवं पुद्गलपर्यायत्वेन पौर्वापर्येन च वर्णस्य नित्यत्वं माभूत्तदानुपूर्वी त्वयोक्तेयी नित्या भविष्यतीत्याशङ्कते—'स्यादाकृतमिति' (१५१–२–४)॥ आनुपूर्व्या वर्णाव्यतिरिक्तत्वात्तस्या अपि न नित्यत्वमित्यभिप्रायवानाह—तदप्ययुक्तमिति ( ६ ) ॥ एतेन वैयाकर-

कारणत्वं चेत्कृप्तमर्थं कल्प्यमिति गौरवं स्यात् । तथा च तादृशवर्णसमभिव्याहारस्य तादृशसमभिव्याहृता वर्णा वेत्यत्र विनिगम नाभावात् प्रयोगान्तर्गता वर्णा वाचकाः सिध्यन्ति, कल्पितैः प्रकृत्यादिभिर्वाचकत्वव्यवस्थायोऽपि तेषां वचनसिद्धिः, आदेशानां वाचकत्व एव हि विकल्पेन भावनायामानत्यादिना कर्तरि शक्तिरित्युपपद्यते विभागः, न च शानजादौ कर्तुर्लकारार्थः, आश्रयः शानच इत्यस्तु " कर्तरि कृत् " इत्यनुशासनादिति वाच्यम् । स्थान्यर्थेन निराकाङ्क्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः, अन्यथा घञादावपि तदापत्तेः, न च देवदत्तः पचमान इति सामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादिति वाच्यम्, पचतितरां मैत्रः पचतिकल्पं मैत्र इत्यादिष्वपि तद्दर्शनादिति दिक् १ ॥ एवं वर्णस्फोटे सिद्धे पदस्फोटोऽपि २ सिद्ध एव, समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकतायाः सिद्धिध्रौव्यात्, प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकवर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ " नलोपः प्रातिपदिकान्तस्य " इत्यादिभिर्धनं वनमित्यादौ नलोपापत्तेश्च, एतच्चरमवर्ण एव वाचकत्वं धनिकस्यनौमित्यात्, तस्य व्यासज्यवृत्तित्वे मानाभावात्, पूर्वपूर्ववर्णानुभवजन्यसंस्काराश्चरमवर्णार्थधीजनने सहकारिण इति न तु मात्रोपारभावर्थधीः, " सुप्तिङन्तं पदम् " इति पदेऽपि घटेनेत्यादौ प्रकृतिप्रत्ययविभागस्य स्थानिसमुदायादेश इव दुर्ज्ञानत्वात्पदस्फोटः स्वीकार्यः २ ॥ एवं हरेऽव विष्णो चेत्यादौ प्रत्येकपदज्ञानेऽपि समुदायशक्तिमानाच्छाब्दबोधोदयाद्वाक्यस्फोटोऽपि ३ सिद्ध एव । वस्तुतः पदैः पदार्थबोधो वाक्येन वाक्यार्थबोध इति पदशक्तिः पदेष्विव वाक्यशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ । अन्यथा घटः कर्मत्वमानयनं कृतिरित्यादौ विपरीतव्युत्पत्तिरहितस्यापि बोधप्रसङ्गात्, तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकविभ

त्तेस्तत आनयनार्थकधातोस्तत आख्यातस्य समभिव्याहारः कारणमिति कार्यकारणभावज्ञानमपि हेतुरिति चेत्, तर्हि सिद्धो वाक्यस्फोटः २, घटादिपदार्थबोधे बोधकतारूपपदशक्तिज्ञानस्येव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकतारूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात्, अर्थोपस्थापकज्ञानविषयशब्दवृत्तिज्ञानकारणत्वस्यैव शक्तित्वात्। वाक्यार्थस्यापूर्वत्वात् कथं तत्र शक्तिग्रह इति चेत्, अन्विताभिधानवादे पदेऽपि कथम्, अन्वयस्यापूर्वत्वात्। यदि च पदशक्तिः पदार्थांशे ग्रहाऽन्वयांशे चाज्ञातोपयुज्यत इति कुब्जशक्तिवादः, तदा ममापि वाक्यशक्तिरज्ञातैवोपयुज्यत इति वादाभ्युपगमस्तुल्यः, अन्विते पदशक्तिग्रहो वृद्धव्यवहारदर्शनसहकृतेन मनसा चेत्, वाक्येऽपि तुल्यमेतत्, अत एव सर्वत्र वाक्यार्थो लक्ष्य इति मान्याः। वस्तुतः समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहस्तदनन्तरमावापोद्वापाभ्यां प्रत्येकं तद्ग्रह इत्युपजीव्यत्वाद्वाक्यस्फोट आश्रयणीयः। न च पदत्वं वाक्यत्वं वा दुर्वचम्, चरमवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वरूपस्य तस्य सुवचत्वात्, वाक्यं पदं चाखण्डमेव, न तु वर्णसमूहोऽनन्तवर्णकल्पने मानाभावाच्चवर्णोत्पादकत्वाभिमतवायुसंयोगनिष्ठवैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्, उक्तं हि देवताधिकरणे भामत्यां, तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यत इति। न चैवं वाचकोऽपि वायुसंयोग एव स्यात्, प्रत्यक्षोपलभ्यककारादेरेव तत्त्वस्यानुभविकत्वात्। तथा च तदेवेदं पदं तदेवेदं वाक्यमित्यादिधियाऽखण्डस्फोटः सिद्ध्यति। एतेन गौरित्यादौ गकारौकारविसर्गातिव्यतिरेकेण स्फोटाननुभवात् श्रूयमाणवर्णानामेव वाचकत्वमित्यपास्तम्। तेषां स्फोटातिरिक्तत्वाभावात्, उक्तवायुसंयोगानां मध्ये केषांचित् गत्वेन केषांचिदौत्वेन केषांचिद्विसर्गत्वेनाभिव्यञ्जकत्वाद्दानुपपत्तिः, अव्यवहितोत्तरत्वसम्बन्धेन घटत्वस्य टकारे ग्रहादेतादृशपदज्ञानकारणताया

वाचकत्वं चेत्तुभयं कल्प्यमिति गौरवं स्यात् । तथा च तत्तद्वर्णसमभिव्याहारस्तादृशसमभिव्याहृता वर्णा वेत्यत्र विनिगमनाभावात् प्रयोगान्तर्गता वर्णा वाचकाः सिध्यन्ति, प्रकृतिप्रत्ययोः कल्पितवाचकत्वव्यवस्थातोऽपि तेषां तत्त्वसिद्धिः, आदेशानां वाचकत्व एव हि विकरणेन भवनापाचनत्वादिना कर्तरि शक्तिरित्युपपद्यते विभागः, न च शानजादौ कर्तिर्लकारार्थः, आश्रयः शानजर्थ इत्यस्तु “ कर्तरि कृत् ” इत्यनुशासनादिति वाच्यम् । स्वान्यर्थेन निराकांक्षतया शानजादौ कर्तरीत्यस्याप्रवृत्तेः, अन्यथा घञादावपि तदापत्तेः, न च देवदत्तः पचमान इति सामानाधिकरण्यानुरोधाच्छानचः कर्ता वाच्यः स्यादिति वाच्यम्, पचतिरूपं चैत्रः पचतिकल्पं चैत्र इत्यादिष्वपि तद्दर्शनादिति दिक् १ ॥ एवं वर्णस्फोटे सिद्धे पदस्फोटोऽपि २ सिद्ध एव, समभिव्याहृतवर्णानां वाचकत्वे सिद्धे तादृशवर्णसमभिव्याहाररूपपदस्य वाचकतायाः सिद्धिध्रौव्यात्, प्रतिवर्णमर्थस्मरणस्यानुभवविरुद्धत्वात्, प्रत्येकवर्णानामर्थवत्त्वेन प्रातिपदिकत्वापत्तौ “ नलोपः प्रातिपदिकान्तस्य ” इत्यादिभिर्धनं वनमित्यादौ नलोपापत्तेश्च, एतच्चरमवर्ण एव वाचकत्वं शक्तिकल्पनौचित्यात्, तस्या व्यासज्यवृत्तित्वे मानाभावात्, पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहकृतचरमवर्णस्यैवार्थधीजनकत्वे सहकारित्व इति न तन्मात्रोच्चारणादर्थधीः, “ सुप्तिङन्तं पदम् ” इति पक्षेऽपि घटेनेत्यादौ प्रकृतिप्रत्ययविभागस्य वचनसाधिसमुदायादेश इव दुर्ज्ञानत्वात्पदस्फोटः स्वीकार्यः २॥ एवं हरेव विष्णो वेत्यादौ प्रत्येकपदज्ञानेऽपि समुदायशक्तिज्ञानात्सम्यग्बोधोदयाद्वाक्यस्फोटोऽपि ३ सिद्ध एव । वस्तुतः पदैः पदार्थावबोधो वाक्येन वाक्यार्थावबोध इति पदार्थशक्तिः पदेष्विव वाक्यार्थशक्तिर्वाक्येऽभ्युपेयेति पदस्फोटवाक्यस्फोटौ व्यवस्थितौ । अन्यथा घटः कर्मत्वमानयनं कृतिरित्यत्रो विपरीतव्युत्पत्तिरहितस्यापि बोधप्रसङ्गात्, तत्रैव घटकर्मकमानयनमिति बोधे घटार्थकप्रातिपदिकोत्तरकर्मत्ववाचकविभ-

सेत्न ज्ञानपदार्थरूपत्वेनाक आनुपूर्व्यस्य समभिव्याहारः कारणाभावे कार्यकारणभावज्ञानमपि हेतुरिति चेत्, नहि सिद्धो
वाचकस्फोटः २ पदादिपदार्थबोधे योग्यतारूपपदशक्तिज्ञानस्यैव विशिष्टवाक्यार्थबोधे पदसमभिव्याहाररूपवाक्यनिष्ठबोधकता
रूपवाक्यशक्तिज्ञानस्यापि हेतुत्वकल्पनात्, अर्थोपस्थापकज्ञानविषयत्वस्य शक्तिज्ञानकारणत्वस्यैव शक्तित्वात्। वाक्यार्थस्या
पूर्वत्वात् कथं तत्र शक्तिग्रह इति चेत्, अन्विताभिधानवादे पदेऽपि कथम्, अन्वयस्यापूर्वत्वात्। यदि च पदशक्तिः पदार्थांशे
मात्रान्वयांशे चायातोपयुज्यत इति कुम्भशक्तिवादः, तदा ममापि वाक्यशक्तिरन्वयांशेऽप्युपयुज्यत इति वादाभ्युपगमस्तुल्यः,
अन्ते पदशक्तिग्रहो व्यवहारस्मनसारूत्वेन मनसा चेत्, वाक्येऽपि तुल्यमेतत्, अत एव सर्वत्र वाक्यार्थो लभ्य इति
मान्या। वस्तुतः समुदितार्थे विशिष्टवाक्यस्यैव प्रथमं शक्तिग्रहस्तदनन्तरमवापोद्वापाभ्यां प्रत्येकं पदग्रह इत्युपजीव्यत्वाद्वा
स्फोट आश्रयणीयः। न च पदत्वं वाक्यत्वं वा दुर्वचम्, चरमवर्णप्रत्यक्षसमयेऽव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्वपूर्ववर्णवत्त्वरू
पस्य तस्य सुवचत्वात्, वाक्यं पदं वा खण्डमेव, न तु वर्णसमूहोऽनन्तवर्णकल्पने मानाभावात् वर्णोत्पादकत्वाभिमतवायुसंयो
गनिष्ठवैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात्, उक्तं हि देवताधिकरणे भामत्यां, तारत्वादि वायुनिष्ठं
वर्णेष्वारोप्यत इति। न चैवं वाचकोऽपि वायुसंयोग एव स्यात्, प्रत्यक्षोपलभ्यककारादेरेव तस्यानुभविकत्वात्। तथा च तदेवेदं
पदं तदेवेदं वाक्यमित्यादिप्रत्यभिज्ञाविषयोऽखण्डस्फोटः सिद्ध्यति। एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवात्
श्रूयमाणवर्णानामेव वाचकत्वमित्यपास्तम्। तेषां स्फोटातिरिक्तसत्त्वाभावात्, उक्तवायुसंयोगानां मध्ये केषांचिद् गत्वेन केषांचिदौ
त्वेन केषांचिद्विसर्गत्वेनाभिव्यञ्जकत्वायोगानुपपत्तिः, अव्यवहितोत्तरत्वसम्बन्धेन घटत्वस्य टकारे महादेवाद्यपदज्ञानकारणतायां

प्रत्यक्षेऽभिलापसंस्कारविच्छेदे उत्तरविकल्पाभिलापसंयोजनं यत् सामान्यमभिलाप्यं स्यात् । प्रत्यक्षगृहीतमेव हि स्वलक्षणमन्यव्यावृत्तं साधारणाकारतया प्रतिभासमानं सामान्यं विकल्पाभिलापयोजनेनाभिलप्यमभिप्रेतं । न च प्रत्यक्षस्मृतिप्रतिभासभेदाद्विषयस्य भावाभेदाभावः सकृदेकार्थोपनिबद्धदर्शनप्रत्यासन्नदूरपुरुषज्ञानविषयवत् । यथा हि सकृदेकस्मिन्नर्थे पादपाद्युपनिबद्धदर्शनयोः प्रत्या-सन्नविप्रकृष्टपुरुषयोर्ज्ञानयोर्विपरीतत्वे स्पष्टास्पष्टप्रतिभासभेदेऽपि स्वभावभेदः पादपस्य तस्यैकस्याप्रतिक्रमात्, तथैव ग्राहको प्रत्यक्षस्मृतिप्रतिभासयोर्भेदेऽपि स्पष्टमन्दतया न तद्विषयस्य भेदः, स्वलक्षणस्यैकस्वभावत्वाभ्युपगमात् । तथा च अन्यप्रतिभासिनि स्वलक्षणे यथार्थो शब्दविकल्पविषये तत्संकेतव्यवहारनियमकल्पनायामपि कथञ्चिदभिधेयत्वं वस्तुनः सिद्धम् । इत्यलं प्रसङ्गेन, रूपादिस्वलक्षणे सर्वथाऽवाच्यत्वमेव तदिति प्रमाणस्य प्रत्यक्षस्याभावात्परपक्षस्य प्रमाणतो समर्थनात् रूपाद्यर्थस्य कथञ्चिदभिधेय-त्वेऽभिलाप्यत्वस्यापि साधनात् प्रकृतार्थपरिसमाप्तौ प्रसङ्गस्य निष्प्रयोजनत्वात् पर्याप्तं प्रसङ्गेन । तस्मादवाच्यतैकान्ते यदवाच्यमित्य-भिधानं तदसमञ्जसं स्वलक्षणमनिर्देश्यमित्यादिवचनविरोधात् तदप्यसद्, वचसः सद्भूतार्थमिति प्रतिपादनात् । यथैव हि स्वलक्षणमनिर्देश्यमित्यवाच्यतैकान्ते वस्तुमात्रं तथा प्रत्यक्षं कल्पनापोढमित्यपि प्रत्यक्षेऽभिलापसंसर्गाभावे विकल्पानुत्पत्तिप्रसङ्गस्य निवेदितत्वात् तदभावे सविकल्पस्यासिद्धेः ।

अवाच्यतैकान्त इत्यपि—अवाच्यतैकान्त इत्यादिना (१७२-२-३) [मूल], अवाच्यशब्देनाप्यवाच्यतापत्तेः सर्वथा अवाच्यत्वं नास्तीत्यर्थः । स्वलक्षणानिर्देश्यत्वादिप्रतिपादकवचनवत् सर्वमवाच्यं तत्त्वमित्यस्य नानुपपत्तिरित्याशङ्कते—स्वलक्ष-णमित्यादिना (८) ॥ एवमसिद्धनामिदं साधनतो महातार्किकस्यापत्तिरित्याह भाष्यकृत्—तदप्यसदित्यादिना, (७)

यदसतः (१७२–२–७) अप्रसिद्धस्य, समुदाहृत (८) माने क्रमस्यपात् समुदाहरणं निदर्शनमिति यावत्, तदप्यसद्
अयुक्तम्, सिद्धेन साध्यस्यव्यवसापनस्यैवोदाहरणप्रयोजनत्वादिति भावः । तदाह वृत्तिकृत् 'सिद्धेरित्यादि' (८) अनिर्देश्य
धर्मेणापि कश्चित् सामान्यरूप स्वलक्षण निर्दिश्यते, न तु वास्तिकम्, अर्थस्य शब्दाविषयत्वात्, सामान्य एव तत्संकेत
प्रवृत्तेरित्यादि शङ्कते–अथेत्यादि, ( ९ ) एवमर्थस्यावाच्यत्वेऽज्ञेयत्वमपि स्यादित्याह 'तर्हीति' (११) ॥ यदि पुनरिति
(१४) स्वलक्षणरूपविषयसामर्थ्योदुत्पन्नत्वान्निर्विकल्पकदर्शने प्रतिभासमाने स्वलक्षणरूपोऽर्थः प्रतिभासत इति युक्त मत
मित्यर्थः । नैवम्, ज्ञानजनकत्वेन ज्ञानभास्यत्वनियमे मानाभावादित्याह तदप्यसम्यगित्यादिना (१४) ॥ करणवाक्ये
रपि (१४) इन्द्रियनिष्ठज्ञानजननयकरपि, ज्ञाने तज्जन्यत्वं न तद्भासकत्वनियतं किन्तु तदाकारानुकारित्वमित्याशङ्कते ' विष
याकारेत्यादि ' ( १७२–१–१ ) तत्रापि तज्जन्यत्वमेव नियामकमित्यतिप्रसङ्ग एवेत्याह भाष्ये ' तर्हीति ' (२) तज्ज
न्यताविशेषस्तदाकारानुकरणनियामकोऽस्त्वित्यत्र शङ्कते 'तद्दर्शनस्येति' ( २ ) एवं सति तदुपादेयतारूप एष विशेष
आश्रीयतां स्वविषयविषयकत्वरूपसंबाधार्थसमनन्तरप्रत्ययजन्यताया एवाभ्यर्हितत्वात्, तथा चार्थविषयतोच्छेद इत्यभि
प्रायवानाह ' स्वोपादानेति ' (३) विषयोपादानोभयप्रत्ययत्वेऽप्याकारानुकरणस्य ज्ञाने नियमत उपादानविषयत्वापत्ति
रित्याह–'विषयस्येत्यादि' (३) ॥ वर्णादेः (५) रूपादेः, तद्वदुपादानवत्, प्रत्यक्षस्य (७) नीलादिदर्शनस्य, अध्य
वसायहेतुत्वात् (७) नामजातियोजनात्मकप्रत्ययहेतुत्वात्, यद्यप्येवं नीलाध्यवसायहेतुत्वेन दर्शनस्य नीलविषयत्वं तत्त्वेन च
नीलाध्यवसायहेतुत्वमित्यन्योन्याश्रयः स्फुट एवोपदर्श्यते, तथाप्यभिलापशून्यत्वेन नाध्यवसायहेतुता रूपादिवदिति स्फुटतरं

रूपमाह—तत्राभिलापसंसर्गादिना (८)॥ विकल्पजननशक्तेरविकल्पकत्वेऽपि प्रदर्शने स्वीकारपर्यन्त तद्धेतुत्वे दोषा भाव इत्यभिप्रायवानाह—यदि पुनरिति (१०) तस्याः यत्क रूपाद्यसाधारण्यादविकल्पकोऽध्यवसायविरुद्ध रूपमित्याह—तथापि (११) तादृशो विकल्परहितस्य, तद्रूपसमीपादेः कमलोत्पादिवत्, विकल्पस्येति(१२) नहि एतेऽनुपपन्नं नामे त्यर्थः। एतेऽपि कारणसामग्र्या स्यादित्याह-प्रत्यक्षवदित्यादि (१२) प्रत्यक्षदर्शनवत्, तस्य सविकल्पकस्य, स्वोपादान सजातीयस्यादिति (१७१ २ १) प्रत्यक्षलक्षणस्वकीयोपादानसजातीयत्वाद्विकल्पस्येत्यर्थः। मुद्राभ्यानं पृच्छति—कथमिदानी मिति(१)॥ मुद्राभेनैवोत्तरयति-'न कथमपीति' सविकल्पादिदर्शने वास्यादियोजन विकल्पे न कथमप्युपपद्यत दीर्घकालिकत्वा द्युपयोगस्येत्यर्थः। एतदेव प्रपञ्चयति—तथाहीत्यादिना (१)॥ ततो (६) विकल्पात्, मनोराज्यादीति (७) वासनाविशेष प्रभवविकल्पसमानविषयत्वे निर्विकल्पस्याभ्युपगम्यमाने मनोराज्यादिविकल्पसमानविषयस्यापि दर्शनस्य प्रसङ्गादित्यर्थः, तत एव (८) तदुत्पत्त्यसाहेतोरेव, 'अभिधीयतामिति' रूपादिविषय(यो)त्पत्तत्वेन रूपादिशब्दविषयत्वतद्विकल्पस्य समनन्तरप्र त्ययोत्पन्नत्वेन तद्विषयत्वस्य न्यायप्राप्तत्वादिति भावः। व्यतिरेके प्रतिपत्तिमाह अन्यथेति (८), तद्बलात् (९) विकल्पबलात्, प्रत्यक्षबुद्धे (९) निर्विकल्पकदर्शनस्यापि, अभिलापसंसर्गोऽपि नामविषयकत्वमपि, तद्रूपादिविकल्पवत्, तद्विकल्पस्य (९) निर्विकल्पकस्याभिमतमानस्वकीयसम्प्रार्थविकल्पस्य, 'अनुमीयेतेति (१०)' रूपादिकमभिलापसंसर्गवत् शब्दादिविषयक ज्ञानाविषयत्वात्तद्बुद्धिविकल्पादिवदिति प्रयोगस्य सुकरत्वादिति भाव । किञ्चाविकल्पाद्यवाभ्युपगमे स्मरणानुपपत्तिरपि सौगतस्येत्याह-न च सौगत इत्यादि (११)॥ तत्सदृशामिति मध्यार्थदर्शनेन संस्कारोद्बोधसौलभ्यार्थमुक्तम्, तथामविमो

पास्मरणात् (११) पूर्वप्रतिपन्ननामास्मरणात्, न च नामविनिर्मुक्तमेव स्मरणं भविष्यतीति शङ्कनीयम्, तस्याप्रसिद्धेरित्यर्थः, 'नैवेति' (१७३-२-११) इदमस्य नामेति न प्रतिपद्यत इत्यर्थः। तदप्रतिपत्तौ तेन नाम्ना न तद्वाच्यं योजयति इदमेतस्य वाच्यमिति, ततो नाध्यवस्यति (१२) तदेतदिति शब्देन नाभिलपितुं शक्नोतीत्यर्थः, तदादिशब्दस्यत्वादिनाऽनुगतस्य तद्घटत्वादेरिव तद्घटादिनाम्नोऽपि शक्यतावच्छेदकत्वात्, एवं च न क्वचिद्विकल्पः शाब्दज्ञानं वाच्यतासम्बन्धेन नामविषयम ध्यक्षपृष्ठभाविज्ञानं वा शब्दो वा तज्जन्यजनकान्यतमः सम्भवेदिति विकल्पाभिधानस्य जगत आपत्ति। ननु नामग्रहणं तावत् पटुकरणस्य श्रोत्रेन्द्रियादेव सम्पद्यते, ततोऽर्थज्ञानं च व्युत्पन्नस्य वक्त्रभिप्रायावच्छेदकत्वेनानुमितिरूपमेवेति नोक्तापत्तिरित्याशङ्कते-'ननु चेति' नामसंश्रयस्येत्यत्र (१३) नाम संश्रयः कारणमस्येति बहुव्रीहिः, दूषयति-तत्रापीत्यादिना (१४)॥ तत्रापि विकल्पयोग्रहस्योरपि, अध्यवसायासम्भवात् (१४) तत्त्वेन निश्चयासम्भवादित्यर्थः। तदेतन्नाम्नोः सह स्मृतिपथे योजनासम्भवमाशङ्कते-ननु चेत्यादिना, (१७४-१-१) दूषयति-'तस्यापीति'॥ नन्वश्वविकल्पकाले गोविकल्प इदन्त्वावच्छिन्ने तादात्म्येनाश्वज्ञानस्य तादात्म्येन गोज्ञानप्रतिबन्धकत्वादेव माभूत्, दृश्यमानघटनाम्नोः स्मृतिस्तु समूहालम्बनरूपा बाधाभावात्कुतस्त्वी केन वार्यतामित्यस्वरसादाह-'नाममात्रेऽपीत्यादि' (६) नकारादीनां नकारेकारलकारानुस्वाराणामानुपूर्वीग्रहोपायश्च निर्विकल्पकसविकल्पकज्ञानपक्षे न शोभते, तत्पूर्वभाविसविकल्पकज्ञानं च नामयोजनापेक्षमिति नामग्रहे तदपेक्षायामन्योन्याश्रयादिदोषा दुर्निवारा इति द्रष्टव्यम्। सविकल्पकनिश्चयमात्रस्य नामयोजनापेक्षत्वे दोषान्तरमाह किञ्चेत्यादिना, (८)॥ तदयमशाब्दमिति, (१७४-२-३) अशाब्द शब्दयोजनारहितं, व्यवस्यन्निश्चिन्वन्, व्यवस्येन्निश्चिनुयात्,

सामान्येऽपि स्वलक्षणस्यप्रत्यक्षविरोधमुपपादयति—' स्वेनेत्यादि ' (६) सामान्यविशेषात्मन (११) इति केवलस्य विशेषस्य गवादित्वेनानुपलक्षणात्तत्र प्रत्यक्षयोगादिति भावः। तदुक्तं वाक्यपदीये "गोः स्वरूपेण न गौर्नाप्यगौर्गोत्वाभिसम्बन्धात्तु गौरिति," गोत्वसामान्यक्रोडीकृता व्यक्तिर्गोव्यवहारहेतुरित्येतदर्थः, सामान्यविशेषउभयाकारस्य गोः स्वरूपेण तथात्वमिति तु न्यायः, अभेदस्तुल्यत्वम्, (१२)॥ एकस्मादित्यादिना (११) वापृथक्त्वमभिहितमिति विशेषः, तदभिन्नं (१२) सामान्याभिन्नम्, इतीत्यनन्तरं सौगतमतमिति शेषः, कथमुपपत्तिमत् (१३) कथं प्रमाणोपपन्नम्, जात्यन्तरं (१४) पानकरसन्यायेन सङ्कलनात्मकं, न व्यपदिश्येत (१७५-१-२) नार्थविग्रहरूपतया गृह्णीयात्, नाभिलापेन योजयेत् (३) ईरिताभिलापवैशिष्ट्येन नापयात्, श्रुतज्ञानेति (३) श्रुतज्ञानजनितसंस्कारमात्रोपनीतशब्दप्रकारकज्ञानविषयस्य श्रुतनिश्रितमतिज्ञानविषयत्वोपपत्तेरित्यर्थः। "अर्थाभिधानप्रत्ययास्तुल्यनामधेया" इति वचनात् घटत्वेनैव घटनाम्नोर्मतिज्ञानेऽभेदभानं नाम्नः सविकल्पकसामग्रीप्राप्ततया प्रातिस्विकरूपेण वा तद्व्यक्तौ तद्व्यक्तिस्वरूपतयाया इव नामतद्वयपेक्षयापि नामतद्वयवानामेव स्वरूपतः तत्र प्रकारत्वसम्भवात्, घटोऽयमित्यपायधारणोत्तरं घटनामकत्वेन घटपदवाच्यत्वेन श्रुतज्ञानोदयश्रोत्रमते तु यथाश्रुत एवार्थ, एतत् स्वसमयरहस्यमस्मत्कृतज्ञानबिन्दुप्रकरणादितोऽवसेयम्। स्मार्तशब्दानुयोजनापेक्षत्वे प्रत्यक्षस्याविशेषिते प्रति यत्सौगतेन दूषणं दत्त, तत् प्रत्यावर्तेतेति वक्तुमुपक्रमते—'प्रत्यक्ष(ज्ञान)स्येत्यादि' ( ४ ) स ( ४ ) प्रत्यक्षज्ञानपरिणतोऽर्थः, व्यवहितो भवेत् (५) स्मार्तेन शब्दानुयोजनेनान्तरितः स्यात् तथा च स्मृतिसामग्र्या बलवत्त्वात्—त्सामान्यप्रत्यक्षं न स्यादेव, तस्मात्—'तद्विमिश्रेति' ( ४ ) कारिकाया अपराद्धस्याप्यर्थशब्दस्य प्रत्यक्षपरत्वे नानुपपत्तिरि

त्याह–'अथशब्देनेति' ( ११ ) यद्यपि प्रागजनकस्यार्थस्य स्मार्थसम्बन्धानुयोजनानन्तरं साभिलापप्रज्ञाभिव्यञ्जकत्वमेवेत्यादि (१७५–१–१२)॥ रूपान्तरं शब्दार्थतयाविन प्रभि धर्मकीर्तिना इष तदपि तं प्रत्यापर्यंत एवेत्याह–यथा चेत्यादिना अध्यवसायः सम्भवति, (१७५–२–२) निश्चयकार्यं सिध्यति, स्यादसम्भवेनेत्यादि (३) अध्यक्षमूलकाध्यक्षे योजनीयम् । स्वविषयप्रतिनियमः सिद्ध्येत्, ( ३ ) न तु विकल्पवक्रिअविषयत्वं स्यादित्यर्थः। अपि च विशेषसामान्ययोर्दर्शन स्मृतिविषयत्वनियमे स्मृत्यनुभवयोः समानविषयत्वनियमभङ्गप्रसङ्गः स्यादित्याह 'किञ्चेत्यादिना' (४)॥ विशेषसामान्य गोरिति' (५) तथा च घटत्वेन सह गृहीताभेदघटविषयकज्ञानत्वेन घटत्वप्रकारकघटविशेष्यकस्मृतौ हेतुत्वाच्च दोष इति भावः। विप्रकृष्टेतरयोरिति (७) स्वभावदेशकालान्यतरविप्रकृष्टतदविप्रकृष्टयोरित्यर्थ । अस्याभाविकत्व (८) इति, 'विकल्प्येनेति' (९) दृश्यविषयवस्तुत्व इत्यर्थः । 'कथमिति' (८) अपरसम्बन्धिस्मारकैकसम्बन्धिज्ञानासिद्धेरित्यर्थः, विकल्पोत्पत्तौ तदुपहितस्याप्युत्पत्तिरिति मते मिथो विकल्पेन सामान्यादिना शब्दस्य सम्बन्ध इति भावः । अभिधानजा त्यादियोजनापेक्षया ( १२ ) अभिधानजात्याद्युपस्थितिकल्पनामपेक्ष्य, कथञ्चित् व्यवसायात्मकत्वाभावेऽपायथा स्यात्मना घटत्वादिप्रकारकपरिणामाभावे, 'दानेति' (१३) निश्चयत्वेन स्मृत्यहेतुत्वे दानाद्यनुभवे वस्तुतस्तदात्मकस्वर्ग प्रापणशक्तिक्षणक्षयानुभवात्तत्स्मृतिः स्यात्, सा च न जायते ततो निर्विकल्पकघटादिदर्शनस्वीकारे तज्जातीयस्मृतिर्न स्यादिति भाष्यार्थः। 'उत्पत्तिविरोधादिति' (१४) अन्यवसायस्य व्यवसायोपादानत्वायोगादित्यर्थ, कारणभावाभुक्त्वा स्वरूप भावमाह–'निर्विकल्प(रूपात्मक)कत्वादिति' (१४) मानसप्रत्यक्षेणापि हि निर्विकल्पकेनैव भाव्यम्, अन्यत्र प्रत्यक्षयोग्य

तामावात्र चाभिलापसंसर्गयोग्यतायाः शब्दवाच्यतायाः प्रतिमासाभावात्कथं निश्चयत्वं नाम आत्मादिमोक्षनात्मकस्यैव तस्यादिति भावः। सहकारिशक्तिविशेषेणैव प्रतिनियमो भविष्यतीत्याशङ्कते–अन्यथसायात्मनोऽपीत्यादि, (१७६–१–१) एवं सति सन्नाहकस्वतापवात् सप्रकारकप्रत्यक्षस्यैवादृष्टविशेषजन्यतावच्छेदकमस्तु अनन्तधर्मात्मकस्य वस्तुनो दर्शनेऽपि तदन्तरापाये क्वचित्कश्चिदेव प्रकार इति नियमार्थं तत्सप्रकारकप्रत्यक्षत्वं तदद्दृष्टजन्यतावच्छेदकमिष्येत वा कल्प्यताम्, इत्थं हि सप्रकारकमानसत्वस्यैवादृष्टविशेषजन्यतावच्छेदकत्वपक्षे घटादिचाक्षुषात् घटादिव्यवहारेऽन्तरा नियमतो घटत्वादिप्रकारकमानसकल्पनाप्रयुक्तं यद् गौरवं तत्परिहृतं भवति। न च यत्र स्थाने त्वया सविकल्पकं चाक्षुषादि कल्पनीयम्, तत्र मया मानसमेवेति न गौरवम्, प्रत्युत सविकल्पके चाक्षुषत्वादिकल्पनालाघवमेवेति वाच्यम्, तथापि घटत्वादिना घटं पश्यामीत्यादौ चाक्षुषत्वादिना मानसावगाहित्वांशे भ्रमकल्पनायां गौरवात् सविकल्पके चाक्षुषत्वाद्यभावकल्पनापेक्षया चाक्षुषत्वादिकल्पनाया एव युक्तत्वादित्यभिप्रायवान् शङ्कितारमाक्षिपति–'किमेयमिति' (१७६–१–२)॥ तेनेति (२) तेन स्वयं व्यवसायात्मकत्वेनाभिधानेन, नीलादेर्व्यवसाये (२) निश्चये, 'तत्क्षणक्षयेति' (२) तत्र यः क्षणक्षयस्वर्गप्रापणशक्त्यादिधर्मस्तस्य। निर्विकल्पकादपि सजातीयस्मृत्युत्पत्तौ प्रकारान्तरमाशङ्कते–ननु निर्विकल्पकादपीत्यादि, (७)॥ तदभावे (८) अभ्यासाद्यभावे, तदनु(पप)त्पत्तेः (८) सजातीयस्मृत्यनुत्पत्तेः, प्रतिया(पा)श्रुप पस्तेत्यादि, आद्येऽनभ्यासोऽस्मृतौ हेतुः, द्वितीयेऽर्थित्वाभावादिरिति बोध्यम्, सोऽप्यभ्यासकर एवेति, (१०) उक्तवादिनः प्रज्ञाकरस्योपहासोऽयम्, सर्वथैकस्वभावस्य (१०) क्षणिकदर्शनैकस्वभावस्य, इतरेषां च (१०) प्रकरणादीनाम्, सकृदुपयोगात् (११) एकदाऽसम्म-

वात्, क्षमिकावग्रहादिसत्त्वपरिणामवदेकोपयोगवादे स्वावग्रहादिदशायामनभ्यस्तत्वादिनाऽस्मारकत्वे धारणादशायां तस्य स्वप्रकरणप्राप्तस्वपटुत्वेऽस्त्वयोगात् स्मारकत्वमुपपद्यत इत्यर्थाल्लभ्यते, भूयस्त्वेनाभ्यासत्वं स्वप्रयोजकम्, शतमप्यन्धानां न पश्यतीति न्यायेन भूयसोऽपि दर्शनस्य निश्चयकार्यकारित्वायोगादिति द्रष्टव्यम्, तदन्यव्यावृत्त्या (१७६ १ ११) अनभ्यासादि व्यावृत्त्या, तत्र (११) प्रकृते, सद्योगोऽभ्यासादिसम्बन्धः, 'स्वयमिति' अतत्स्वभावस्य तदन्यव्यावृत्तिविकल्पने चाव कस्य (११) वीतस्वभावरहितस्यावीतव्यावृत्तिः स्याच्च चैषमस्ति ततस्तदन्यव्यावृत्त्यवच्छेदकस्तत्स्वभावोऽवश्यमभ्युपगन्तव्य इति किन्त्वन्यव्यावृत्तिविकल्पनेनेति भावः । सविकल्पकेत्यादि, (१२) ये धारणाज्ञानमभ्यासात्मकमवग्रहादिभ्यः पृथ गिच्छन्ति तेषां जैनानां धारणाभावादेव प्रतिभाप्युपन्यस्तवर्णादावस्मृत्युपपत्तिरिति भाव । यथा संस्कारमिति (१४) न हि यावद्धारितं तावत्स्मर्यते, ननु कथमेतदुपपद्यते, धारणानन्यसाधारणविषयकसंस्कारसत्त्वे यथाधारणमेव स्मृत्युत्पत्तेः सम्भवात्, न च यावदंशे उद्बोधकसम्पत्तिस्तावदंश एव संस्कारेण स्मृतिजननादुक्तोपपत्तिः, उद्बोधकस्य सामान्यत एव हेतुत्वाद्विशिष्य तस्य स्मृतिहेतुत्वे तत एवातिप्रसङ्गादनुभवादेरपि स्मृतिहेतुत्वानापत्तेरिति चेत्, सत्यम्, परिणामवादे आंशिकोद्बोधकसमवधा नतद्भावाभ्यामसम्बद्धसंस्कारध्वंसे सम्बद्धसंस्कारोत्पत्त्याऽननुगतसंस्कारसामान्यसत्त्वे चानुपपत्तेरभावात्, तत्रापि संस्कारसामान्य स्यानुभवव्यापारस्यावश्यकत्वात्, इत्थमेव 'चउदसपुव्वी मणुओ देसूणे त न संभरइ सव्वं । देसम्मि होइ भयणा' इत्यादि प्रवचनोक्तं सङ्गच्छते, एकजन्मप्रत्ययकर्मणा द्वादशाङ्गार्थविषयसमूहालम्बनसंस्कारस्य देशे सङ्कुचितस्यैवोत्पादना दित्यादिकं प्रतिपादितमात्मख्यातावस्माभिः । इत्थमेव रोगकालादिनाप्यांशिकसंस्कारनाशोपपत्तिः, तत्र सम्बद्धसंस्कारो-

धारणया स्मृतित्वजनकतावच्छेदकस्य धारणात्वस्य चाक्षुषाद्यवगृहीते स्पर्शादिना धारिते पूर्वदृष्टस्याद्युपलक्षितविलक्षणतया विषयकस्मृत्यनुपपत्तेः चाक्षुषत्वादिना साङ्कर्यवारणाय चाक्षुषत्वादिव्याप्यचतुर्विधजातिरूपस्य प्रत्यक्षतुरीयभेदव्यापिताया एवा भियुक्तैरुक्तत्वात्, यदि चाक्षुषाद्युपयोगस्थलेऽपि समनन्तरोत्पद्यमानसोपयोगगतधारणयैव स्मृतिरिष्यते, तदाऽस्तु सर्वत्र मानसत्वव्याप्यमेकमेव धारणात्वम्, अवग्रहत्वादिवद्विषयताविशेषरूपस्य तु तस्याः अन्यधारणाया एव प्रत्यक्षतुरीयभेदस्या भ्युपगमादनुमित्यादिविषयित्वमपि तस्य न दोषावहमित्यस्मदेकपरिशीलितः पन्थाः। केचित्तु समानाकारफलस्य भावनाना-शकत्वाद्भावनायाः सविषयकत्वसिद्धिः, न च फलं स्वस्य नाश्यम्, तथा च तद्व्यक्तित्वेन भावनानाशकत्वं युक्तमिति तद्भावनान्यचरमफलस्यैव तद्भावनानाशकत्वमस्त्विति वाच्यम्, अनुभवत्वेन तद्विशेष्यकतत्प्रकारकस्मृतेः प्रतियोगितया तादृश भावनानाशे हेतुत्वस्यानुगतत्वात्, न च तत्पुरुषीयभावनासामान्यनाशं प्रत्येव तत्पुरुषीयचरमस्मृतिव्यक्तेस्तत्त्वेन चरमस्मृति-मात्रस्य वैजात्येन हेतुत्वमस्त्विति वाच्यम्। एवं सति अनिवोपेक्षात्मकचरमस्मृतिकानामपि भावनानां सत्त्वोपगमे तेभ्यः स्मृत्युत्पत्तेः प्रसङ्गादित्याहुः। यत्तु तत्तद्विषयकोपेक्षाज्ञानस्य तत्संशयस्य च तत्तद्विषयकभावनाप्रतिबन्धकत्वाद्भावनायाः सविषयकत्वमिति महाचार्यैरुक्तं तच्चिन्त्यम्, उपेक्षात्मकचाक्षुषज्ञानोत्तरानुपेक्षात्मकस्पार्शनज्ञानस्थले संशयकालीनसाध्यानु-मितिस्थले च संस्कारानुत्पत्तिप्रसङ्गात्, तत्रानुपेक्षात्मकतादृशज्ञानस्योत्तेजकत्वकल्पने च गौरवात्, नैयायिकैकदेशिनस्तु विशिष्टवैशिष्ट्यविषयित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकत्वेनैव हेतुत्वाद्विशिष्टवैशिष्ट्यस्मृत्यर्थं विशेषणतावच्छेदक-प्रकारकभावनासिद्धिः, न च शाब्दप्रत्यक्षं प्रति तथाहेतुता, प्रत्यक्षस्य निरुक्तविषयिताऽन्यप्रत्यक्षत्वनिवेशे गौरवात्, एतेन

..

तत्सम्बन्धाभाववान् कुम्भ इति ज्ञानसंविषयत्वव्याप्यवान् कुम्भ इति परामर्शाद् दण्डो रक्तो न वेति संशयकालेऽपि रक्तदण्डवान् कुम्भ इत्यनुमित्यापत्तेश्च, तदुद्बोधकाभावविशिष्टभावनात्वाभावविशेषणनिवेशाच्च न दण्डो रक्त इत्यनुद्बुद्धभावनातो निरुक्तानुमित्युपनीयमानापत्तिः, न चैवं गौरवम्, इयतैव भावनायाः स्मृतिहेतुत्वनिर्वाहात्, उद्बोधकानां विशिष्य स्मृतिहेतुत्वाकल्पनेन लाघवावकाशात्, तदुद्बोधकाभावविशिष्टभावनात्वाभावविशिष्टीयस्वरूपसम्बन्धेन घटत्वप्रकारकत्वस्य कारणतावच्छेदकत्वे तु न गौरवदूषणावकाशोऽपि, सम्बन्धगौरवस्यादोषत्वादित्याहुः । अविच्युतिस्मृतिवासनानामधारणधारणात्वावच्छिन्ने समानविषयकत्वेनाधायहेतुत्वात् संस्कारसमविषयकत्वसिद्धिरित्यादिकमपि ज्ञानबिन्द्वादौ विवेचितमस्माभिरिति विस्तरार्थिना तत एवावधार्यम् । क्वचिदिति (१७९-१-१४) गृहीतशक्तिकेन शब्देनोद्बोधितार्थसंस्कारेणार्थस्मृतिवदर्थादृष्टार्थेऽपि रोहतरामभिलापसंस्कारस्य तेऽभिलापस्मृतेरपि सम्भवादित्यर्थः, कुम्भ इति (१७९-२-१) प्रत्यक्षादभिलापसंस्कारानुद्बोधे स्मृतिरूपतद्योजनानुपपत्तेः सामान्यमभिलाप्यं न स्यादित्यर्थः, विशेषाद् सामान्यस्य नात्यन्तमतिरिक्तत्वं, किन्तु तस्यापि भासाद् तत्प्रतिभासस्येति स्पष्टप्रतिभासवेलायां स्वलक्षणस्य शब्दात्मकमन्यप्रतिभासाविषयकत्वेऽपि तद्योग्यतया कथञ्चिदभिधेयत्वं तस्याबाधितमस्ति, निष्कृष्टार्थमाह—तत्र [न च] ग्राहकेत्यादि (२) व्याख्यानग्रन्थः॥ तस्मादवाच्यतैकान्त इति (८) वेदान्त्यभिमतप्रपञ्चावाच्यत्वपक्षखण्डनमिदम्, स्वरूपानिर्देश्यत्ववचनादिविरोधोपदर्शनं तु दृष्टान्तपरम्, बौद्धैः सर्वैकान्तस्यैव स्वरूपतोऽभ्युपगमात्, अनिर्वाच्यत्ववचनमात्रेण परेषां प्रपञ्चेऽपि तेषां तत्र सर्वैकान्तपक्षानिवृत्तेः । अथ वेदान्तिमते प्रपञ्चानिर्वाच्यत्वैकान्तः कथं वाच्यौपाख्यैकान्तेऽवाच्यशब्देनापि वाच्यत्वं न स्यादिति दूषणस्य यौगिकपक्ष एव लब्धावसर

कथमात्मस्वरूपमेव कथञ्चिदसद्रूपमेव वस्तुप्रमाणात्प्रमेयमेवेदं ते शासनमिति समुदीर्यते 'प्रश्नवशादेकत्र वस्तुन्यविरोधेन विधिप्रतिषेधकल्पना सप्तभङ्गी इति वचनात् । नययोगादिति वचनान्नयवाक्यानि सप्तैवेति दर्शयन्ति, ततोऽन्यस्य भङ्गस्यासंभवात् । तत्संयोगजभङ्गस्यापि कस्यचित्तत्रैवान्तर्भावात्, कस्यचित्तु पुनरुक्तत्वात् । विधिकल्पनाया एव सत्यत्वात् तदेकमेव वाक्यमिति न मन्तव्यं प्रतिषेधकल्पनायाः सत्यत्वव्यवस्थापनात् । विध्येकान्तस्य निराकरणात् । प्रतिषेधकल्पनैव सत्येत्यपि न सम्यक् अभावैकान्तस्य निराकरणात् । तदपेक्षयापि नैकमेव वाक्यं युक्तम् । सदर्थप्रतिपादनाय विधिवाक्यमसदर्थकथनार्थं तु प्रतिषेधवाक्यमिति वाक्यद्वयमेव सदसद्वर्गस्तत्त्वमिति वचनात्, प्रमेयान्तरस्य सम्प्रतिपक्षस्यासंभवादिति च न चेतसि विधेयं प्रधानभावार्पितसदसदात्मनो वस्तुनः प्रधानभूतैकधर्मात्मकाद्वस्तुनोऽन्यत्वसिद्धेः, सत्त्ववचनेनैवासत्त्ववचनेनैव वा सदसत्त्वयोः क्रमार्पितयोः प्रतिपादयितुमशक्तेः । सदसदुभयविषयं वाक्यत्रयमेवेति चायुक्तं, सहोभयवाक्यस्यावक्तव्यत्वविषयस्य व्यवस्थितेः । तथापि वाक्यचतुष्टयमेवेति चायुक्तं, सदसदुभयावक्तव्यत्वविषयस्य वाक्यान्तरत्रयस्यापि भावात्—विधिकल्पना ( १ ), प्रतिषेधकल्पना ( २ ), क्रमतो विधिप्रतिषेध-कल्पना ( ३ ) सहविधिप्रतिषेधकल्पना च ( ४ ), विधिकल्पना सहविधिप्रतिषेधकल्पना च ( ५ ), प्रतिषेधकल्पना सहविधिप्रतिषेधकल्पना च ( ६ ) क्रमाक्रमाभ्यां विधिप्रतिषेधकल्पना ( ७ ) च सप्तभङ्गीति व्याख्यानात् । न चैवं प्रत्यक्षादिविरुद्धविधिप्रतिषेधकल्पनापि सप्तभङ्गी स्यादिति शक्यं वक्तुम्, अविरोधेनेति वचनात् । नानावस्त्वाश्रयविधिप्रतिषेधकल्पनासप्तभङ्ग्यपि प्रसज्यते इति च न चिन्त्यम् एकत्र वस्तुनीति वचनात् । नन्वेकत्रापि जीवादिवस्तुनि विधीयमाननिषिध्यमानानन्तधर्मसद्भावात्तत्कल्पनानन्तभङ्गी स्यादिति चेत्, न अनन्तानामपि सप्तभङ्गीनामिष्टत्वात् तत्रैकत्वानेकत्वादिकल्पनयापि सप्तानामेव भङ्गानामुपपत्तेः प्रतिपाद्यप्रश्नानां

यावन्तमेव संभवात्, प्रश्नवशादेव सप्तभङ्गीति नियमवचनात्। सप्तविध एव तत्र प्रश्नः कुत इति चेत्, सप्तविधजिज्ञासाघटनात्।
सापि सप्तविधा कुत इति चेत्, सप्तधा संशयोत्पत्तेः। सप्तधैव संशयः कथमिति चेत्, तद्विषयवस्तुधर्मसप्तविधत्वात्। तत्र सत्त्वं वस्तु-
धर्मः, तदनुपगमे वस्तुनो वस्तुत्वायोगात् खरविषाणादिवत्। तथा कथञ्चिदसत्त्वं, स्वरूपादिभिरिव पररूपादिभिरपि वस्तुनोऽसत्त्वा-
निष्टौ प्रतिनियतस्वरूपाभावाद्वस्तुप्रतिनियमविरोधात्। एतेन क्रमार्पितोभयत्वादीनां वस्तुधर्मत्वं प्रतिपादितं, तदभावे क्रमेण सदसत्त्व
विकल्पशब्दव्यवहारस्य विरोधात्, सहावक्तव्यचतुर्थधर्मत्वविकल्पशब्दव्यवहारस्य चासत्त्वप्रसङ्गात्। न चामी व्यवहारा निर्विषया
एव, वस्तुप्रतिपत्तिप्रवृत्तिप्राप्तिनिश्चयात् तथाविधरूपादिव्यवहारवत्। तस्यापि निर्विषयत्वे सकलप्रत्यक्षादिव्यवहारापह्नवात् कथञ्चि
विरुद्धव्यवस्था स्यात्। ननु च प्रथमद्वितीयधर्मवत् प्रथमतृतीयादिधर्माणां क्रमेतरार्पितानां धर्मान्तरत्वसिद्धेर्न सप्तविधधर्मनियमः
सिध्येदिति चेत्, न, क्रमार्पितयोः प्रथमतृतीयधर्मयोर्धर्मान्तरत्वेनाप्रतीतेः, सत्त्वद्वयस्यासंभवात्, विवक्षितस्वरूपादिना सत्त्वस्यैकत्वात्।
तदन्यस्वरूपादिना सत्त्वस्य द्वितीयस्य संभवेऽपि विशेषापेक्षात्मविपक्षभूतासत्त्वस्यापि परस्य भावात् परधर्मसप्तकसिद्धेः सप्तभङ्ग्यन्तर
सिद्धेः कथमुपालम्भः? एतेन द्वितीयतृतीयधर्मयोः क्रमार्पितयोर्धर्मान्तरत्वमप्रातीतिकं व्याख्यातम्। प्रथमचतुर्थयोर्द्वितीयचतुर्थयोस्तु
तीयचतुर्थयोश्च सहितयोः कथं धर्मान्तरत्वमेव स्यादिति चेत्, चतुर्थेऽवक्तव्यत्वधर्मे सत्त्वासत्त्वयोरपरामर्शात्। न हि सहार्पितयोस्त
योरवक्तव्यशब्देनाभिधानम्। किं तर्हि? तथार्पितयोस्तयोः सर्वथा वक्तुमशक्तेरवक्तव्यत्वस्य धर्मान्तरस्य तेन प्रतिपादनमिष्यते। न
च तेन सहितस्य सत्त्वस्यासत्त्वस्योभयस्य वाऽप्रतीतिर्धर्मान्तरत्वासिद्धिर्वा, प्रथमे भङ्गे सत्त्वस्य प्रधानभावेन प्रतीतेः, द्वितीये पुनरस
त्वस्य, तृतीये क्रमार्पितयोः सत्त्वासत्त्वयोः, चतुर्थेऽवक्तव्यत्वस्य, पञ्चमे सत्त्वसहितस्य, षष्ठे पुनरसत्त्वोपेतस्य, सप्तमे क्रमवदक्रमप्रयुक्त-

स्थितिरितसमोदितं तदेव समसंस्थानादिसामान्याकारेणावगृहीतं पुनः प्रतिनियतविशेषाकारेणेहितं तदेवाकाङ्क्षितविशेषाकारेणावेतं पुनः कालान्तरस्मृतिहेतुतयावधारितं, तदेव कालान्तरे तदित्याकारेण स्मृतं पुनस्तदेवेदमित्याकारेण प्रत्यभिज्ञातं, ततो यदिदं कार्य-कृतमिति सर्वत्र सर्वदेति तर्कितं तदस्तदर्थावबोधनाभिनिमुखं, तदेव च प्रयोजनतया विकल्पनिरूपणया वा परार्थं स्वार्थं वा मुक्तमित्यनुसन्धानप्रत्ययस्तदेक एव दृष्टाऽवगृहीतेहितेत्यनुसन्धानबुद्धिरपि न कथिदास्पदं लभेत । तथाविधवासनाप्रबोधाद् संभावबोधप्रसिद्धिरिति चेत्, साऽनुसंधानवासना यद्यनुसन्धीयमानदर्शनादिभ्यो भिन्ना यथा संतानान्तरे दर्शनादिभ्यो भिन्ना स्वसं-तानेपि नानुसंधानबोधमुत्पादयेत् अविशेषात् । तदभिन्ना चेत्, तावता भिन्नेव, न हि भिन्नादभिन्नमभिन्नं नामेति स्वयमभिधानात् । तथा च तत्प्रबोधात्कथं दर्शनादिष्वेकमनुसन्धानज्ञानमुत्पद्येत ? यदि पुनस्तेभ्यः कथञ्चिदभिन्ना वासनानुमन्यते तदेतत्स्वदा अहमहमिकयात्मा चिदर्थानुभवमनादिनिधनः स्वसंवेदनप्रत्यक्षः सर्वलोकानां कथंचिच्चित्रविचित्रक्षणे नीलादिविविधविशेषनिर्भासस्वभावात्ममूर्तान् परस्परतो विविक्तान्सहक्रमभाविनो गुणपर्यायानात्मसात्कुर्वन् सम्येव सिद्धः, तस्यैव वासनेति नामान्तरकरणात् । तदेकत्वाभावे नीलादिविशेषनियतदर्शनानासंतानसंवेदनक्षणवच्चित्रसंवेदनं न स्यात् । क्रमवृत्तिसुखादीनामिव दर्शनादीनामेकसंतानविषयत्वा-दनुसंधानमभिन्नमिव घनत्वमनुमतमिति चेत्, तर्हि संततिरात्मैव । तथा क्रमवृत्तीनां सुखादीनां मतिश्रुतादीनां वा तादात्म्यविगमैकान्ते संततिरनेकपुरुषवत् स्यात् । सुखादिमत्यादीनां नैरन्तर्योद्भवमिथःकार्यकारणभावाद्यस्वभावभावावपरासत्त्वभेदानामेका संततिः, न पुनरनेकपुरुषे तदभावादिति चेत्, तर्हि नैरन्तर्यादिरविशेषात्संतानव्यतिकरोपि किम स्यात् ? न हि नियामकः कश्चिद्विशेषः, अन्यथा भेदपरिणामात् । संतानिनां भेदपरिणाम एव नाभेदपरिणामः, संकरप्रसङ्गादिति चेत्, न, येनात्मना तेषामभेदस्तेन सांकर्यचेतनत्वा-

विना संकरस्येष्टत्वात् तेषामसंकरे दृष्टविषयाविविक्तप्रतिपत्तेरयोगात्। अस्ति च सैकत्रापि विषये यत्र मे दृष्टिः प्रागभूत्तत्रैव विचारो
ऽयं मयाश्रितो वर्तते अहमेव च दृष्टवानस्मि संप्रति विचारयामीमाम् वर्ते नान्य इति क्रमवत्प्रतिपत्तिरबाधा। ततो जीवः सन्नेव।
एवं च यथैकत्र समस्तव्यवहारसिद्धिरसत्स्वभावसंकरपरिणामस्तथैव सर्वत्र चेतनाचेतनेषु, संप्रत्यतीतानागतेषु, सत्स्वभावादिष्यते॥
ततः कथञ्चित्स्वरूपेणेदं जीवादि तत्त्वं सत्स्वभावकमभावात्। यदि सर्वेव सर्वं जीवादिवस्तु, न पुनरसदिति चेत्, न सर्वपदार्थानां
परस्परमसंकरप्रतिपत्तेरसत्त्वस्यापि सिद्धेः, जीवाजीवप्रभेदानां स्वस्वभावव्यवस्थितेरन्यथानुपपत्तेः। न केवलं जीवाजीवप्रभेदाः सजाती
यविजातीयव्यावृत्तिलक्षणाः किन्तु पुद्गलप्रभेदेऽपि घटपटप्रमाणमारब्धयोः सितादिनिर्भासात्परमाणुसंचितयोरपि, परस्परपरिहारस्थितिलक्षण-
त्वादन्यथा सुखदुःखावलोकनाभावापेक्षोऽस्त्वत् सर्वथा परस्परमव्यावृत्तानां प्रत्यक्षमारम्भकसितादिनिर्भासात्मकपरमाणुसंचितीनामेकप
रमाणुस्वरूपतापत्तेः। न चैकपरमाणुः स्थूलतया सप्रत्ययाय तावलोकयितुं शक्यः, प्रमाणप्रसङ्गात्। तथा च सकलचेतनेतरक्षणपरिणा
मस्वविशेषाः परस्परविविक्तस्वभावाः सिद्धाः स्वस्वभावस्य स्वभावान्तरेण मिश्रणाभावात्। यदन्योन्याभावमात्रं जगत्। अन्यथा
सर्वैकत्वप्रसङ्गात् तथान्यस्य विशेषापेक्षणाप्रभावो वा, स्वतन्त्रस्य तस्य क्वचिदप्रतिभासनात्। तदिदमसदेव कश्चित्। सर्वथा
भावाऽभावोभयात्मकमेव जगदस्तु तत्र भावस्याभावस्य च प्रमाणसिद्धत्वात् प्रतिषेध्यमसमञ्जसत्वादित्यपरः सोऽपि न तत्त्ववित्
तदुत्पत्तिविज्ञानात्। न हि भावाभावैकान्तयोर्निरपेक्षयोपसङ्गीकरणं युक्तं, सर्वथास्ति सर्वथा नास्तीति विप्रतिषेधात्। तथा कथ-
ञ्चित्सदसदात्मकं द्रव्यपर्यायनयापेक्षया। द्रव्यनयापेक्षयैव सर्वं सत् पर्यायनयापेक्षयैव च सर्वमसदात्मकं विपर्यये तथैवासं
भवात्। न हि द्रव्यनयापेक्षया सर्वमसत् संभवति, नापि पर्यायनयापेक्षया सर्वं सत् प्रतीतिविरोधात्। भावाभावस्वभावरहितं

तदिदमप्ययमेव वस्तु पुरुभिरपि न सारं सर्वथा आत्मान्तरकल्पनायां वा तदनभिसम्बन्धविशेषप्रतिपत्तेरत्यन्ताभावप्रसङ्गात्। न चासा वक्ति यदसदुभयात्मके वस्तुनि स्वरूपादिभिः सत्त्वस्य पररूपादिभिरसत्त्वस्य च तदंशस्य विशेषप्रतिपत्तिनिबन्धनस्य सुनयप्रतीति निमित्तस्य प्रसिद्धः दधिगुडचातुर्जातकादिद्रव्योद्भवे पानके तदंशद्रव्यादिविशेषप्रतिपत्तिवत्। न चैवं आत्यन्तरमेवोभयात्मकमिति युक्तं वक्तुं, तदयोभयरूपत्वे वा जात्यन्तरप्रतिपत्तेरयोगात् पानकवदेव। न हि तत्र दध्यादय एव न पुनर्जात्यन्तरं पानकमित्यभि-धातुमुचितं, पानकमिदं सुस्वादु सुरभीति संप्रत्ययात्। तद्वस्तुनि न सदादंश एव प्रतीतिविषयः, तदंशिनो जात्यन्तरस्य प्रतीत्य भावात्। तथा पानकस्यापि दोषानुषङ्गः। येनात्मना सत्त्वं तेनासत्त्वस्याभ्युपगमे येन चासत्त्वं तेन कथञ्चित्सत्त्वानुमनने पुनः प्रत्येकमुभयरूपोपगमात्तदवस्था स्यात्। तथानभ्युपगमे नोभयस्वभावमशेषमिति ते प्रतिज्ञाविरोधः। येनात्मना सत्त्वं तेनैवासत्त्वे विरोधो वैयधिकरण्यं वा शीतोष्णस्पर्शविशेषवत्। संकरव्यतिकरौ च, युगपदेकत्र सत्त्वासत्त्वयोः प्रसक्तः। परस्परविषयगमनाच संशयश्च, कथं सत्त्वं कथं चासत्त्वं वस्तुनीति निश्चयानुत्पत्तेः। अत एवाप्रतिपत्तिरभावश्चानुपज्यते। ततः प्रतिपादितदोषान् परिजिहीर्षुभिः सर्वं वस्तु तदिदं स्यादुभयं, न पुनः सर्वथा, स्यात्कारेण जात्यन्तरत्वस्यापि स्वीकरणात्। सदस्तीति न भणामि, नास्तीति च न भणामि, यदपि च भणामि तदपि न भणामीति दर्शनमस्त्विति कश्चित्, सोऽपि पापीयान्। तथाहि। सन्नावेतराभ्यामनभिलापे वस्तुनः, कथमं मूकत्वं जगतः स्यात्, विधिप्रतिषेधव्यवहारायोगात्। न हि सर्वात्मनानभिलाप्यस्वभावं बुद्धिरध्यवस्यति। न चानध्यवसेयं प्रमेयं नाम, गृहीतस्यापि तादृशस्यागृहीतकल्पत्वात्। मूर्च्छाचैतन्यवदिति। न हि निर्वि कल्पकदर्शनप्रतिभासि वस्तु व्यवतिष्ठेत येनानभिलप्यमपि तत् पश्येत्। "न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्ध

योगित्वेन कथञ्चिद्विषयभेदस्येष्टत्वात्, संशयत्वाकारसम्पादकताकारायाः शुक्तेरेव प्रमालम्बनत्वस्याकरसिद्धत्वात्, भ्रम
पापस्य च दुष्टकारणप्रभवत्वादिनैव सिद्धः, तदुपरागेणासज्ज्ञानस्य च भ्रमे न्यायटीकाकृतोऽप्यभिमतत्वात्, तावन्मात्रेणा
मरम्यावेरभावादित्यादिकं व्युत्पादितं लतायामस्माभिः ॥ वस्तुतो जिज्ञासा भङ्गप्रयोजिका, न तु क्वचिदपि भङ्गे विषयाव
च्छेदिका, स्वद्रव्यादीनामेव तत्तत्स्वामिप्रुकैकत्वात्, तथा च चालनीयन्यायेन स्वद्रव्यपरद्रव्यचतुष्टयाभ्यां तृतीयः, सह
द्वितन्यायेन च ताभ्यां तुरीयः, विरुद्धघटत्वपटत्वाभ्यां किमपि न वाच्यमिति यत्, इत्थमेव घटत्वपटत्वाभ्यां घटपटौ स्त
इति वाक्यस्य तात्पर्यभेदेन प्रामाण्यमप्रामाण्यं च सङ्गच्छते । सेयं भङ्गानां स्वरूपयोजनात्मिका एवेति न किञ्चिदनुपपन्नम् ।
वस्थितिरिति ( १८३-१-६ ) वस्तुनः क्रमार्पितोभयादेः प्रतिपत्तिदर्शनेन, प्रश्नविरामिलापादिव्यवहारः, प्राप्तिस्थलम्भोपदिशा
क्रिया, तासां निषेधादिसंवादात्, द्वितीयस्येति ( ९ ) न हि द्रव्यादिसत्त्वातिरिक्तं सत्त्वमेकं नाम नैयायिकादिमत
मिदं सामान्यमस्मत्सिद्धान्तेऽस्ति, लोकैस्तु प्रतीयते, तस्य चानर्पितस्यैकत्वेऽपि विशिष्यार्पितस्य द्वितीयस्याप्यविरोध एवेति
भावः, तत्र च प्रतिपक्षासत्त्वेन सप्तमस्यान्तरसम्भवात् प्रकृतसप्तसङ्ख्याभावस्तृतीयसंयोगेन भङ्गान्तरापत्तिरिति विशदयति-
' विरोधादेशादिति ' (९) ॥ प्रथमचतुर्थयोरिति (१०) तत्रापि सत्त्वादिद्वयप्रतीतेरित्यर्थः, सहार्पिताभ्यां सत्त्वासत्त्वा
भ्यामवक्तव्यत्वस्य धर्मान्तरस्यैवारम्भात्तेन सह सत्त्वादिसंयोगेऽपि नानुपपत्तिः संयोगजविषयासङ्करादित्याह–' चतुर्थे '
(११) इत्यादि ॥ विशेषेणेति ( १८३-२-२ ) वक्तव्यत्वस्य कथंतागर्भत्वेन विशिष्य विभक्तत्वात्छन्दानुगममात्रस्या
प्रयोजकत्वात्, सत्त्वादिना वक्तव्यत्वस्य सत्त्वादिसमनियतत्वेन निराकाङ्क्षतया भङ्गान्तरानारम्भकत्वात्, अन्यथाऽसङ्कि

सत्त्वादिनापि सत्त्वान्तराद्यपत्तेरिति भावः। ननु स्याच्छब्दलाञ्छितैर्वाक्यैः सप्तभङ्गीप्रयोगो युक्त इति तत्र तत्र श्रूयते स च ग्रन्थे नोक्त इति कथं न न्यूनत्वमत आह–' सा चेति ' (१८१-२-५) सा चोक्तसप्तभङ्गी, स्याद्वाद एव यदयुक्तं तद्गर्भिणी, प्रयुक्तं विध्यादिविषयनिरासकत्वं, गर्भिणीत्यत्र गर्भपदेन च स्याच्छब्दस्य गम्यागम्यसाधारणत्वमभिव्यज्यते–' स्या च्छब्दस्येति ' [ स्याद्योतनार्थस्येति ] (४) तथा च ग्रन्थे कथञ्चिच्छब्देनैव स्याच्छब्दस्य गतार्थत्वात्र न्यूनत्वमिति भावः। ' न चैवमित्यादि ' (६) एव कथञ्चिच्छब्दस्यानेकान्तवाचकत्वे, अनेकान्तस्य ( ७ ) नित्यानित्याद्यनेकधर्मात्मकवस्तुनः, अनर्थकमिति ( ७ ) सत्त्वासत्त्वादिधर्मद्वयकत्वस्याप्यनेकान्तशब्दार्थकुक्षिप्रविष्टत्वादनेकान्तपदादेव तद्बोधोपपत्तेरिति भावः। ततः सामान्यतोऽनेकान्तस्येत्यादि (७) स्यात्पदादनेकान्तपदाद्वा एकान्तबुद्धिविघटनबुद्धिविशेषविषयतावच्छेद कत्वेनैवानन्तधर्मघटितसप्तभङ्गीबोधेऽपि प्रातिस्विकरूपेण तद्बोधनार्थं विशेषप्रयोगोऽवश्यमाश्रयणीयो, यथा वृक्ष इत्युक्ते वृक्षत्वेन न्यग्रोधबोधेऽपि न्यग्रोधत्वेन तद्बोधार्थं विशेषप्रयोग आश्रीयत इति। तेनोक्तस्य ( १ ) सदादिशब्देनोक्तस्य, स्वरूपचतुष्टयादिना सत्त्वादिविशिष्टवस्तुनः। कथञ्चिच्छब्देन द्योतनात् (९) तात्पर्यस्फोरणात्। तेन कथञ्चिच्छब्देनानुद्योतने विशिष्टविषयत्वे तात्पर्यास्फोरणे सर्वथैकान्तशङ्काया अपच्छेदकास्फुरणादप्यपच्छेदेनानेकान्तप्रतिपत्तेरधिकृतायाः अयोगात्, एवकारश्रवणे विवक्षितार्थस्य सदादयोगव्यवच्छेदादिरूपस्याप्रतिपत्तिवत्। अथ स्याच्छब्दो द्योतको वाचको वेत्यत्र कः पक्षः श्रेयानिति चेत्, अत्र वैयाकरणाः, प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम्, वैषम्ये बीजाभावात्, येन हेतुना प्रादीनां द्योतकत्वं तेनैव निपातानामपि तत्त्वसिद्धेः, तथाहि अनुभवतीत्यादावनुभवनादिः प्रतीयमानो न धात्वर्थः,

तत्र २ शक्तिः कस्या, चकारादेः द्योतकस्य इत्यतिगौरवं स्यादिति समन्वयाधिकरणे स्थितम्, तदयमकस्मात् पीतामृता नामिव निपातानां द्योतकत्ववाचकत्वयोरनेकान्तोद्गारः । अस्माकं तु सदापीतानेकान्तामृतानाम् "अनेकमेकात्मकमेव वाच्यं द्व्यात्मकं वाचकमप्यवश्यम्" इत्यादिवादिनां पदमात्रमेव वाक्यार्थे द्योतकं वाक्यमेव च वाचकमिति निपाते क इव विशेषोऽन्यत्र संज्ञाकरणात् । न च वाक्यार्थस्यैव प्रवृत्त्यङ्गत्वे वाक्यस्यैव च बोधकत्वे पदशक्तिग्रहानुपयोगः, अन्वयव्यतिरेकाभ्यां वाक्यशक्तिग्रह एव तदुपयोगात्, पदसमुदायात्मकस्य वाक्यस्य बोधकताविधया तु पदानां तत्त्वमयत्नसिद्धमेव, स्वातन्त्र्येण तु नेति सङ्गिरामहे । यत्तु पदानि स्वार्थप्रतिपादनमात्रेण निवृत्तव्यापाराणि न वाक्यार्थबोधक्षमाणि, आकाङ्क्षासन्निधियोग्यतावच्छिन्नानां पदार्थानामन्वयव्यतिरेकाभ्यां वाक्यार्थविदकत्वप्रतिपत्तेः, तथाहि श्वेतरूपं पश्यतो हेषाशब्दं खुरशब्दं च शृण्वतः श्वेतोऽश्वो धावतीति बुद्धिर्भवति, इयं च नाध्यक्षानुमित्यादिरूपेति शाब्द्येव, करणं च तत्र तत्तत्पदार्थस्मरणमेव, तदुक्तं "पश्यतः श्वेतमारूपं हेषाशब्दं च शृण्वतः ॥ खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥१॥" इति, सिद्धं पदार्थानां शब्दप्रमाणान्तर्गतत्वम्, तदुक्तं "प्रत्यक्षादिपरिच्छिन्नपदार्थप्रत्ययोद्भवः ॥ वाक्यार्थप्रत्ययः सोऽपि, शब्दादेव विभिद्यते ॥ १ ॥" इति । अपि च कविकाव्यमूलज्ञानं न मानसं, मनसो बहिरस्वातन्त्र्यात्, नाप्यनुमितिः, व्याप्त्यादिप्रतिसन्धानं विना जायमानत्वात् । किन्तु शाब्दबुद्धिः, तत्र कारणं च न पदज्ञानम्, असत्त्वात्, किन्तु चिन्तोद्बुद्धसंस्कारजन्यतत्तत्स्मरणमिति, सिद्धं (द्धः) पदार्थः प्रमाणतया, यत्र चापचारान्मानसाद्व्यग्रस्यापि पदानि पदार्थानावधारयति, तत्र न भवति वाक्यार्थप्रत्यय इति व्यतिरेकबलादपि पदार्था एव वाक्यार्थविदका इति निर्व्यूढमिति भाट्टैकदेशिमतम्, तदसत्,

प्रथमव्यवहाराद्वाक्याभिधाने पदानामेव शक्तिकल्पनात्, पदार्थे पृथक्शक्तिकल्पने मानाभावात्, वाक्यमूलज्ञानस्य च चन्द्रमतलात्स्वादिस्मृत्युपनीतस्य मानसत्वात्, ईदृशि स्थले मनसो बहिःस्वातन्त्र्यस्याप्यभ्युपगमात्, येतोऽयो यावती विधिपथ स्वप्रमानः येयोऽयं वाक्यस्य हेत्वासुरविशेषकर्तृस्वादिस्यनुमितिरूपाया शब्दबोधरूपस्यबरूपाया वा सम्भवात्, भवीतत्वाविना पदार्थानां स्मृतौ शाब्दबुद्धौ चाऽहेतुत्वात् पदार्थस्मृतेर्व्यापारस्याभ प्रमाणत्वमिति नैयायिकाः, यत्तु पदार्थ स्मृतिमात्रस्य शाब्दबुद्धिहेतुत्वे घटः कर्मत्वमानयनं कृतिरित्यादिपदजन्यपदार्थोपस्थितावतिप्रसङ्गः, निराकाङ्क्षपदासन्यस्मृते स्वभावे तु गौरवमिति साकाङ्क्षपदज्ञानमेव करण पदार्थस्मृतिस्तु व्यापार इति नैयायिकैरुक्तम्, तदयुक्तम्, साकाङ्क्षपदार्थस्मृतेरेव करणोपयमबच्छिन्नत्वेन करणत्वौचित्यात्, यत्र चापचारादित्यादि च यदुक्तम्, तदविचारासहम्, मानसादपचारात्पदार्थानवग मेन वाक्यार्थप्रतीत्यभावासिद्धेरुपरतमनसो विशिष्टपदसमुदायरूपवाक्यस्यैवानवगमाभिमयरूपस्य तदवगमस्यान्त्यपदप्रतिप त्तिकाले स्वार्थविशिष्टपूर्वपूर्वपदपरामर्शस्याविलम्बेन वाक्यार्थप्रतिपत्तिजनकत्वात्, इतरथोपेक्षारूपस्य यादृशपदार्थोपस्थितियत् नादरणीयत्वात्, यदुक्तं—'सम्मतिमुखो' पूर्वपदानुविद्धं चान्त्यपदं यदा वाक्यं पूर्वपदानि च स्वाभिधेयविशिष्टतयाऽन्त्यपद प्रतिपत्तिकाले परामृश्यमानानि वाक्यार्थप्रतिपत्तिजनकानि, तदा पदार्थानवगमे वाक्यस्यैव स्वार्थाभिसम्बद्धतयाऽनवगमात् कथं ततो वाक्यार्थप्रतीतिर्भवेदिति, अयमिह निष्कर्षः, यावती व्युत्पत्तिः शाब्दबोधे हेतुस्तावद्व्युत्पत्तिसम्बन्धेन स्वार्थ-विशिष्टवाक्यज्ञानं धारणारूपमेकोपयोगप्रविष्टपदकदम्बविषयं तत्तादेवानुपूर्वीपर्यायेण सर्वत्र प्रत्यर्थं तात्पर्यवशाद्विशेष्ये विशेषणमिति रीत्या विशिष्टे वैशिष्ट्यमिति रीत्या वा कथञ्चिदेकानेकात्मकवाक्यार्थधियं जनयति, पदार्थोपस्थितिद्वारत्वे

कथमप्यनुपपत्तेः, घटमानयतीत्यादौ घटादिपदज्ञानाधीनघटादिस्मृतेरमादिपदज्ञानाधीनकर्मत्वादिस्मृतिकाले नाशात् । घटादि स्मृतेरेवामादिपदविषयत्वे स्वव्यवधानेन कर्मत्वादिस्मृतेः घटीयं कर्मत्वमिति बोधसम्भवेऽपि तत्काले घटादिस्मृतिनाशादानय नादिबोधासम्भवात्, सर्वेषां पदानां समूहालम्बनस्मृतौ सर्वेवार्थस्मृत्या खले कपोतन्यायेन सर्वत्र विशेष्ये विशेषणमिति रीत्यैव शाब्दबोध इत्युपाध्यायमतस्य तु मिश्रैरेव दूषितत्वात्, यत्र विशेषणानां न परस्परमन्वयसम्भवस्तत्रैव चैत्रः स्थाल्यां गेहे काष्ठेनौदनं पचति गच्छति जानाति चेष्टते चेत्यादौ समूहालम्बनस्मृत्यपेक्षाऽन्यत्र त्ववान्तरवाक्यार्थबोधपूर्वक एव महावाक्यार्थबोधः, यथा वाक्यार्थकर्मके कुलकादौ, नहि कुलकादावित्युवाचेत्यादावित्यादिपदोपस्थाप्यवाक्यार्थानुपस्थि तावन्वयबोधः, न च तदुपस्थितिरवान्तरवाक्यार्थबोधं विना, न चैवं कथं पञ्चाध्याय्यात्मकमहावाक्यार्थबोधस्याप्युपपत्तिः, न ह्यध्ययनेन तावदेकदा ज्ञायते, किन्तु दिने दिने किञ्चित्, अत एव सम्यगवधानासमर्थः स्वल्पं स्वल्पमुच्चार्य बोधनया बोध्यते, घटमानयेत्यादौ स्वनियमः सामग्रीद्वयस्यापि पृथक् पृथक् स्वक्षमत्वादिति मिश्रमतस्याप्यनिर्धारणेनैव हतत्वात्, अवान्तरवाक्यार्थबोधासाधारण्येन पदमन्यपदार्थोपस्थितित्वेन नियतद्वारस्याभावात्, अनियतोपस्थितेस्तु पदार्थज्ञानोद्बुद्धसं स्कारप्रभवपदोपस्थितावतिप्रसक्तत्वात्, यथासम्भवं गृहीतव्युत्पत्तिकवाक्यज्ञानादेव निपतैकानेकात्मकवाक्यार्थप्रतीतेः सार्व जनीनायाः स्वीकर्तुमुचितत्वात्, "वाक्यार्थे बोधक एव पदमात्र व्यवस्थितम् ॥ निपाते स्फुटता तस्य केवलस्या प्रयोगतः ॥१॥" इति भावनीयं सुधीभिः । वाचकत्वद्योतकत्वयोरनेकान्तस्तु सर्वत्र 'सिद्धिः स्याद्वादात्' इति हैमसूत्र सिद्ध एव, प्रकृते च "स वाचको विशेषाणां स च तद्द्योतकोऽथवा" इति वाक्यपदीयमपि साक्षीति किमतिविस्तरेण ।

वीति ' (१८४-२ ६) सितादयो ये निर्भासा ज्ञानाकारास्तथांशपरमाणूनामवयवाणूनां संविषयस्ता अपि परस्परव्यावृत्तिलक्षणा इति व्याख्येयम्। परस्परविविक्तता[त्मा]त्मन इति (९) अव्याहृतस्य वस्तुनो विशेषणमिदम्, तत्र(१०) वगति, अन्वयस्य (१०) सर्वथैकत्वस्य, विशेषापेक्ष(णा)त्वा (१०) वस्तुतो व्यावृत्तिनिरूपणाधीननिश्चयविषयत्वात्, निरूपर्यायम् (१२) अव्यछेदकमेदरहितम्, 'तदंशेति' (१८५ १ १) सदंशौ सत्त्वासत्त्वे, चातुर्जातकम् (३) एलालवगनागकेसरतमालपत्राणि, पानकरसास्यन्तरत्वमेव सर्वथोभयरूपत्वादिकमुत्स्पतीत्याह 'सर्वथेत्यादि' (४) प्रत्येकमिति (७) सत्त्वोपाधावपि केनचिद् मेणोभयात्मकतायास्तत्रापि धर्मान्तरेण तथायाः स्वीकारेऽनवस्थेत्यर्थः। तथाऽनभ्युपगमे (७) धर्मान्तरे उभयरूपतानत्यये, तत्रैव व्यभिचारात्, नोभयस्वभावमशेष सिद्धमिति ते (७) उभयस्वभावमेवाशेषमिति प्रतिज्ञाया विरोध इत्यर्थः। स्यात्कारेणेति ' (१०) स्यादुभयमित्यत्र स्यात्कारेण सत्त्वासत्त्वावच्छेदकधर्मयोरेव परामर्शाज्जात्यन्तरत्वस्यार्थसिद्धत्वादिति भावः। अर्थसिद्धत्वं च तस्योत्तरकालिकमानसबोधात् चोत्यतावच्छेदककुक्षिप्रविष्टत्वादित्यन्यदेतत्। अनध्यवसेयम् (१३) अभिलापोपरक्तनिश्चयाविषयः, मूर्च्छाचैतन्यवदिति (१३) मूर्च्छाचैतन्यगृहीतवदित्यर्थः। यथा मूर्च्छाचैतन्यगृहीतमप्यगृहीतकल्पं तथाऽभिलापानुपरागेण गृहीतमप्यगृहीतकल्पमित्यर्थः। न सोऽस्तीत्यादिनोक्तं (१४) वक्तव्यैकान्तमपि प्रतिक्षिपति ' सर्वात्मनेत्यादि ' ( १८५–२–२ ) सामान्यरूपेणेव विशेषरूपेणापीति सर्वात्मनेत्यस्यार्थः। शब्दागोचरत्वेऽनभिधेयत्वापत्तेरिति ( ३ ) शब्दगोचरत्वेऽभ्युपगम्यमाने बाधापत्तेस्तदभ्युपगमस्यायुक्तत्वादित्यर्थः, बाधयाध्यक्षविषयो न शब्दविषय इति स्फुट एव, प्रत्यक्षविषये प्रत्यक्षशब्दवाच्यत्वमादायाबाधमाशङ्कते 'प्रत्यक्षात्मके

त्यादि' ( ४ ) तथा मत्यनुमानादिशब्दवाच्यत्वात्तत्र स्पष्टत्वास्पष्टत्वसङ्करे ज्ञानसङ्करः स्यादित्याह 'तयैवेत्यादि' ( ४ ) विषयनिष्ठत्वो न प्रत्यक्षेतरविशेषः, किन्तु स्वकारणभेदकृत इत्यत्राह 'तयोरिति' ( ५ ) तयोः प्रत्यक्षेतरयोः, विशेषे कुतश्चिदभ्युपगम्यमाने, तदात्मकयोः ( ५ ) प्रत्यक्षेतरशब्दयोर्भेदात्, भाष्याद्वैतसिद्धिः कुतो ( ५ ) न कुतश्चिदिति प्रतिज्ञार्थनिर्णायकः । उपाधिभेदाभाव दोष इत्याशङ्कते स्यान्मतमित्यादिना, ( ५ ) एतत् नुपपत्ति-मवसवित्यादिना, ( ७ ) प्रत्यक्षेतरोपाधीनामित्यत्र प्रत्यक्षं चेतरश्चोपाधिभेदेति द्वन्द्वः कार्यः, तेन बहुवचनोपपत्तिरिति द्रष्टव्यम् । पक्षान्तरे प्रत्यक्षोक्त दूषणप्रसक्त्यैकान्तपक्षेऽपि सममित्युपदर्शयति तथानभिधेयत्वेऽपीत्यादिना, (८) 'साध्याभिधाना दित्यादि' ( १२ ) साध्याभिधानात्, पक्षोक्तिः, ( ११ ) साध्यविशिष्टधर्मिण उक्तिः, पारम्पर्येणापि नास्ति ( १२ ) नानुमितिजननसमर्था, पक्षमात्रस्य तद्धेतुत्वात्, हेतुवचस्तु स्वयमनुमितिजननेऽशक्तमपि शक्तस्यानुमितिजननसमर्थस्य हेतोः सूचकम्, इत्थं च पारम्पर्येण हेतुवचनस्यानुमापकत्वमनुज्ञातम्, यत्र हि सूचकता ज्ञानजनकता, ज्ञान च बाधाभावात् प्रमारूपमित्यनिच्छताऽपि शब्दस्य प्रमापकत्वं तन्निर्णायाय बाधकस्य च बौद्धेनाभ्यपनीयमित्युक्तं भवति, सूचकत्वं तु ज्ञाना न्वेष्टरूपानुमापकत्वविषया स्वातन्त्र्येण वेत्स्य तदेतत्, अपरार्थकशब्दस्याङ्गत्वं प्रामाण्यपरीक्षायां बाधकस्यावश्यंभा वावश्यम्भिप्रायसम्भावनाजनकत्वेन शब्दस्यार्थसम्पर्क ( फलं ) तेन च बहुशो व्यवहारकरीत्यावयवे च प्रसिद्धानुमानका-र्यस्यापि सम्भावनयैवोपपत्तेः प्रत्यक्षातिरिक्तप्रमाणप्रमाणक्षयाशाबाधात्मकतत्प्रयोजनो महापापासक्तः स्यादिति द्रष्टव्यम् ॥१४॥

अत्र प्रथमद्वितीयमतस्योत्तरपक्षयोगमुपक्षिपन्ति स्वामिनः ।—

## सदेव सर्वं को नेच्छेत् स्वरूपादिचतुष्टयात् । असदेव विपर्यासान्न चेन्न व्यवतिष्ठते ॥ १५ ॥

सर्वं चेतनमचेतनं वा द्रव्यं पर्यायादि वा भ्रान्तमभ्रान्तं वा स्वयमिष्टमनिष्टं वा, सदेव स्वरूपादिचतुष्टयात् को नेच्छेत् ? असदेव पररूपादिचतुष्टयात् तद्विपर्ययात्को नेच्छेत् ? अपि तु लौकिकः परीक्षको वा स्याद्वादी सर्वथैकान्तवादी वा सचेतनस्तथैवेच्छेत्, प्रतीतेरपह्नोतुमशक्तेः । न च तथमेवं प्रतीयन्नपि कश्चिद्दुर्नयविपर्यासितमतिर्नेच्छेत् स न क्वचिदिष्टे तत्त्वे व्यवतिष्ठेत, स्वपररूपोपादानापोहनव्यवस्थापाद्यत्वाद्वस्तुनि वस्तुत्वस्य, स्वरूपादिव पररूपादपि सत्त्वे चेतनादेरचेतनादित्वप्रसङ्गात् तत्स्वात्मवत्, पररूपादिव स्वरूपादप्यसत्त्वे सर्वथा शून्यतापत्तेः, स्वद्रव्यादिव परद्रव्यादपि सत्त्वे द्रव्यप्रतिनियमविरोधात् । संयोगविभागादेरनेकद्रव्याश्रयत्वेऽपि तद्द्रव्यप्रतिनियमो न विरुध्यते एवेति चेत्, न, तस्यानेकद्रव्यगुणत्वेनानेकद्रव्यस्यैव स्वद्रव्यत्वात्, स्वानाश्रयद्रव्यान्तरस्य परद्रव्यत्वात् ततोऽपि सत्त्वे स्वाश्रयद्रव्यप्रतिनियमव्याघातस्य तदवस्थत्वात् । तथा परद्रव्यादिव स्वद्रव्यादपि कस्यचिदसत्त्वे सकलद्रव्यानाश्रयत्वप्रसङ्गादिति द्रव्याश्रयत्वविरोधात् । तथा स्वक्षेत्रादिव परक्षेत्रादपि सत्त्वे कस्यचित्प्रतिनियतक्षेत्रत्वाव्यवस्थितेः । परक्षेत्रादिव स्वक्षेत्रादपि चासत्त्वे निःक्षेत्रतापत्तेः । तथा स्वकालादिव परकालादपि सत्त्वे प्रतिनियतकालत्वाव्यवस्थानात् । परकालादिव स्वकालादप्यसत्त्वे सकलकालासंभवित्वप्रसङ्गात् क्व किं व्यवतिष्ठेत ? यतः सोऽयमिष्टतत्त्वव्यवस्था । नन्वेवं स्वरूपादीनां स्वरूपाद्यन्तरस्याभावात्कथं व्यवस्था स्यात्, भावे वानवस्थाप्रसङ्गात् । सुदूरमपि गत्वा स्वरूपाद्यन्तराभावेऽपि कस्यचिद्व्यवस्थायां किमनया प्रक्रियया स्वगृहमान्यया यथाप्रतीति वस्तुव्यवस्थोपपत्तेरिति कश्चित्, सोऽपि वस्तुस्वरूपपरीक्षानभिज्ञो, वस्तुप्रतीतेरेव तथा प्ररूपयितुमुपक्रान्तत्वात् । अन्यथा नानानिरङ्कुशविप्रतिपत्तीनां निवारयितुमशक्यत्वात् । वस्तुनो हि यथैवाबाधिता प्रतीतिस्तथैव स्वरूपं, न च ततोऽन्यथैव

प्रतीयते येन स्वरूपान्तरमपेक्ष्येत । तथा प्रतीतौ वा तदुपगमेऽपि नानवस्था यत्राप्रतिपत्तिस्तत्र व्यवस्थोपपत्तेः । तत्र जीवस्य तावत्सा-
मान्येनोपयोगः स्वरूपं, तस्य तल्लक्षणत्वात् "उपयोगो लक्षणम्" इति वचनात् । तदन्योऽनुपयोगः पररूपम् । ताभ्यां सदसत्त्वे
प्रतीयेते । तदुपयोगस्यापि विशेषतो ज्ञानस्य साकारव्यवसायः स्वरूपम् । दर्शनस्यानाकारग्रहणं स्वरूपम् । ज्ञानस्यापि परोक्ष-
स्यावैशद्यं स्वरूपम् । प्रत्यक्षस्य वैशद्यं स्वरूपम् । दर्शनस्यापि चक्षुरचक्षुर्निमित्तस्य चक्षुराद्यालोचनं स्वरूपम् । अवधिदर्शनस्यावध्या-
लोचनं स्वरूपम् । परोक्षस्यापि मतिज्ञानस्येन्द्रियानिन्द्रियनिमित्तं साकारग्रहणं स्वरूपम् । अनिन्द्रियमात्रनिमित्तं श्रुतस्य स्वरूपम् ।
प्रत्यक्षस्यापि विकलस्यावधिमनःपर्ययलक्षणस्य मनोऽक्षानपेक्षं स्पष्टस्वार्थग्रहणं स्वरूपम् । सकलप्रत्यक्षस्य सर्वद्रव्यपर्यायसाक्षात्करणं
स्वरूपम् । ततोऽन्यत् सर्वं तु पररूपम् । ताभ्यां सदसत्त्वे प्रतिपत्तव्ये । एवमुत्तरोत्तरविशेषाणामपि स्वपररूपे तद्विद्भिरभ्यूह्ये, तद्वि-
शेषमतिविशेषाणामनन्तत्वात् । द्रव्यक्षेत्रकालभावविशेषाणामनेनैव प्रतिद्रव्यपर्यायं स्वपररूपे प्रतिपादिते । ननु च जीवादिद्रव्याणां
षण्णामपि किं स्वद्रव्यं किं वा परद्रव्यम् ? यतः सदसत्त्वे व्यवतिष्ठेते, द्रव्यान्तरस्यासंभवादिति चेन्न, तेषामपि शुद्धं सद्द्रव्यमपेक्ष्य
सत्त्वस्य तदविषयमसद्भावमपेक्ष्यासत्त्वस्य च प्रतिज्ञोपपत्तेः । शुद्धद्रव्यस्य स्वपरद्रव्यव्यवस्था कथम् ? तस्य सकलद्रव्यक्षेत्रकाल-
भावात्मकत्वात् तद्व्यतिरेकेणान्यद्रव्याद्यभावादिति चेन्न सकलद्रव्यक्षेत्रकालभावानपेक्ष्य सत्त्वस्य, तदभावमपेक्ष्यासत्त्वस्य च व्यव-
स्थितेः ' सत्ता सप्रतिपक्षा ' इति वचनात् । एतेन सकलक्षेत्रस्य नभसोऽनन्तकालस्य च सकलक्षेत्रकालात्मनः प्रतिनियत-
क्षेत्रकालात्मनाश्च स्वपररूपत्वं निश्चितम् । अतः सदसत्त्वव्यवस्था । स्वरूपादिचतुष्टयादिति "व्यस्ते कर्मण्युपसंख्यानात्" का । स्वरूपा-
दिचतुष्टयमपेक्ष्य को नेच्छेत्सदेव सर्वमित्यर्थः । एतेन विपर्यासादिति व्याख्यातम् । ननु स्वसत्त्वस्यैव परासत्त्वस्य प्रतीतेर्न वस्तुनि

धर्माणां तु स्वपर्याप्तिमद्व्याप्येवेति । अत एव तत्प्रमात्वमपि स्वपर्याप्तिमद्विशेष्यकत्वघटितमिति नैको द्वाविंत्यादेः प्रमात्वम्, तात्पर्यशुद्धिकाले धर्मद्वयावच्छेदेन हित्वपुद्धेः प्रमात्वं तु स्वाश्रयापेक्षया लोकोत्तरमिति न दोषः, लौकिकप्रमाप्रकारस्यैव भाग उचितत्वादिति दिग् । स्वरूपादौ स्वरूपाद्यन्तराभावात्कथं सत्त्वं, तद्भावे वा कथं नानवस्थेति नैयायिकादिः शङ्कते 'नन्वेव मित्यादिना '( १९२–१–११) ॥ स्वरूपादीनां धर्मिसत्त्वादिनियामकानां स्वसत्त्वादिनियामकत्वस्य धर्मिग्राहकमानेन स्वत एव सिद्धत्वात्तयविशेषस्य स्वरूपान्तरादिप्रश्नस्यापि जिज्ञासाधीनत्वात् यत्रैव न सा तत्रैव विश्रान्तेर्नानवस्थेति समाधत्ते– सोऽपीत्यादिना ( १३ ) ॥ वस्तुनो हीति ' ( १४ ) तथा च स्वरूपादिघटितमूर्तेरेव सत्त्वादेः प्रतीतेर्भेदनयेऽपि च यथा जिज्ञासं व्यवस्थानान्नानवस्थेति फलितम्, एतेन सत्त्वं नावच्छिन्नम्, अनवच्छिन्नस्यैव सत्तामहासामान्यस्य सर्वैः प्रतीयमानत्वात्, तत्र स्वरूपादेरवच्छेदकस्य कल्पने च तस्यापि सप्तभङ्गीनयेनानवस्थितत्वव्यवस्थार्थमप्यवच्छेदकान्तरमपेक्षणीयम् तथाप्यव्यवस्थितं प्रतिप्रतिपन्नचिन्त्यनवस्था दुरुद्धरेति न कथमपि सप्तभङ्गीक्रमेण ज्ञानबोधोपपत्तिरिति पशुपालमलपितमपास्तम् । अनर्पितरूपानवच्छिन्नत्वेऽप्यर्पितरूपावच्छिन्नस्य प्रतीतेः सार्वजनीनत्वात्, केनचित्रूपेण स्वरूपादेः स्वरूपतोऽवच्छेदकत्व निर्णये चास्तित्वादिप्रकारे नवस्थाया अभावात्, अन्यथा शाखावच्छेदेन कपिसंयोगवत्त्वस्यापि दुरुपपादः स्यात्, सम्पूर्णो परमाण्वाद्यवच्छिन्ना वा शाखाऽनवच्छेदिकेति प्रते शाखात्वावच्छेदेनावच्छेदकत्वप्रहासम्भवात्, प्रतिनियतावयवावच्छिन्नता शाखेन तदवच्छेदकत्वस्य च दुर्ग्रहत्वादित्यादिकमुपपादितं गोपालमतप्रमापिन्यामनेकान्तव्यवस्थायामस्माभिरिति तत एव यथार्थम् । सत्त्वमपरत्वव्याप्तेः सर्वत्र सत्त्वसत्त्वव्यवस्थापकत्वनियमभङ्गमाशङ्कते–ननु चेत्यादिना (१९२–२–८) ॥ पण्णा

मपि (१९२-२-९) इति द्रव्यत्वमुद्देश्यतावच्छेदकमाह–द्रव्यत्वावच्छेदेन सत्त्वासत्त्वादिसप्तभङ्गीसाधने किं स्वद्रव्यं किं वा परम्, तदवच्छिन्नभेदाप्रसिद्ध्या परत्वस्य तदभावे स्वत्वस्य दुर्वचत्वान्न किञ्चिदित्यर्थः, तत्रापि शुद्धं द्रव्यं स्वं सत्त्वावच्छेदकम्, अशुद्धं च परमसत्त्वावच्छेदकम्, अशुद्धशुद्धत्वे च भेदाभेदप्रधानव्यवहारनिमित्तनयसाक्षिकावच्छेदोपाधिविशेषौ, प्रतिभासविशेषादपि तत्सिद्धेस्तद्भेदतादौ दर्शनादिति नानुपपत्तिरित्यभिप्रायवानाह–'न, तेषामपीत्यादि' (९)॥ तथापि शुद्धद्रव्यत्वावच्छिन्नधर्मिताकसप्तभङ्गीस्थले का गतिरित्याशङ्कते शुद्धद्रव्यस्येत्यादि (१०)॥ तत्रापि स्वद्रव्यपरद्रव्यशब्दाभ्यां व्यापकव्याप्यापकत्वोपलक्षणात्तदवच्छिन्नास्तित्वनास्तित्वादिघटितायाः सप्तभङ्ग्या नानुपपत्तिरित्याह–'सकलेत्यादि' (११)॥ उक्तप्रकारं शुद्धक्षेत्रकालयोरतिदिशति–'एतेनेति' (१२)॥ शुद्धभावस्तु शुद्धद्रव्येण गतार्थ एव, स्वरूपादिचतुष्टयादित्यत्र "ल्यब्लोपे पञ्चमी" इत्यभिप्रायमाविष्करोति–'स्वरूपादीत्यादि' (१३)॥ व्याख्यातमिति (१४)॥ विपर्यासादित्यत्रापि विपर्यासमपेक्ष्येत्येवार्थ इति भावः। आपेक्षिकस्य तुच्छत्वे बाधकमाह–'सर्वस्येत्यादि' (१९३-१-४)॥ यथा च भावानां परस्परमुत्कर्षापकर्षाभ्यामन्ततः षड्गुणहानिवृद्धिशालित्वेन भावाभावयोश्च परस्परवैलक्षण्येनापेक्षिकतया तुच्छत्वावस्थोपप्लवे मध्यमसंविन्मात्र विभान्ति स्यात्, सा च बहुधा दूषितेति व्यवहारतः केचिदर्था निरपेक्षाः केचिच्च सापेक्षा अनुभवबलेनैव श्रद्धेया, तथैव पदार्थवैचित्र्यस्य व्यवस्थितत्वात्, तदुक्तम् भावारहस्यप्रकरणे "ते[1] होंति परावेक्खा वंजयबहुदंसिणोऽवि ण य तुच्छा। विउमिणं वेचित्तं सरावकप्पूरगंधाणं ॥१॥" इति, तत्त्वतस्तु सामान्यरूपा सर्वे निरपेक्षा विशेषरूपा च सर्वे सापेक्षा

१ ते भवन्ति परापेक्षा व्यञ्जकबहुदर्शिन इति न च तुच्छाः। दृष्टमिदं वैचित्र्यं शरावकर्पूरगन्धयोः ॥ १ ॥

इति व्यापकोऽनेकान्त एव विजयते, व्यञ्जनपर्यायैः सदसत्त्वानामप्यर्थपर्यायैर्नैकत्वस्य प्रागसिद्धत्वात्, तदाह–प्रवचनोपनिषद्वेदी महावादी सिद्धसेनः—"परपज्जवेहिं असरिसगमेहिं णियमेण णिच्चमवि नत्थि। सरिसेहिं पि वंजणओ अत्थि ण पुण य पज्जाए॥१॥" इति, रूपत्रिदर्पितयोः (११२ १ ९) स्वपररूपाभ्यां विवक्षितयोः, तथाप्रतिपत्तिसद्भावाच (९) शाब्दयो स्तयोरेकाधिकरणसमीसद्भावात्, न च दृष्टेऽनुपपन्नं नाम, भिन्नस्वभावयोरप्येकत्वं दृष्टान्तेन प्रसिद्धेनोपपादयति—शाब्देन रेखादि (१०) स्पष्टास्पष्टविषयतया भिन्नस्वभावत्वेन सिद्धयोः प्रत्यक्षशाब्दबोधयोरेकविषयत्वमेकद्रव्याश्रयत्वं चाविरुद्धं तथा सत्त्वासत्त्वयोरेकाश्रयत्वमपीति तात्पर्यार्थः। न चाप्यक्षशाब्दविषयत्वविरोधः कालभेदेन परिहरणीयः, एककालेऽपि मिश्रअविभो नीलधवलतरविषयत्वविरोधपरिहारस्य प्रतीत्यैकत्वसम्भवादिति प्रतिपत्तव्यम्। भावाभावयोर्निरोधस्यापि तत्तत्प्रतियोगिगर्भत्वेन विविच्य विभाव्यत्वात्यन्तरे वस्तुनि तदेकदेशयोः भावाभावयोरविरोधकल्पन एव लाघवमिति पुनरस्मदीयो मनीषोन्मेषो मपरहस्यादौ। विच्छेदानुपलम्भेऽपीति (११२-१३) अत्र सांख्यदोषादिति हेतुः। तद्भावे (१३) आत्मद्रव्याभावे, तयोः (१४) शाब्देतरप्रत्यययोः, कथञ्चिदुपादानोपादेयानुगतधर्मेण, तेन दध्युत्पत्तिकाले दुग्धस्वरूपेण दुग्धानन्वयात् योर्नोपादानोपादेयभावानुपपत्तिः। यद्द्रव्यं यद्द्रव्यध्वंसजन्यं तत्तदुपादानोपादेयमित्यपक्षया च तदुपादेयमिति व्याप्तिरेव रुपी पत्ती। स्यात् परं विक्षेपः, परेषां समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणताशालित्वमुपादानकारणत्वम्, अस्माकं च तादात्म्यसम्बन्धावच्छिन्नकार्यतानिरूपितस्वधर्मत्वसम्बन्धावच्छिन्नकारणताशालित्वं तदिति॥ व्यपदे

१ परपर्यायैरसदृशगमैर्नियमेन नित्यमपि नास्ति। सदृशैरपि व्यञ्जनतः अस्ति न पुनरर्थपर्यायैः॥ १॥

नानुपपत्तेः (१९३ २ १) अस्येदमिति परिणामपरिणामिभावसम्बन्धव्यवहारानुपपत्तेरित्यर्थः । नाहशाम्, (१) उपादानोपादेयभूतानाम्, स्वरूपैकत्वम्, (१) एकद्रव्यतयाऽभेदः । अभेदे उपादानोपादेयभावविरोधमाशङ्क्य परिहरति—न चे (१) त्यादिना मननात्, (१९३ २ २) इत्यन्तेन, तदेव ग्रथयति—भाष्ये विशेषापेक्षया तु (२) इत्यादिना, विरोधस्य सहानुपलम्भलक्षणत्वादिति (१) एकज्ञानप्रविष्ट चक्षुर्ज्ञानविषयत्वमपरस्य विरोधो, न च क्रमाक्रमयोरयमस्ति, एकत्र पर्यायरूपेण क्रमज्ञानकाल एव द्रव्यरूपेणाक्रमस्य ज्ञायमानत्वादित्यर्थः । इत्यमेव सत्त्वासत्त्वयोरपि न विरोध इत्याह—न चेत्यादिना (६) ॥ सम्भवतोरेवेति (७) नियमागर्भभिन्नाधिकरणत्वं परस्परपरिहारस्थितिपदार्थ इत्यभिप्रायेणेदम्, भावाभावरूपत्वमेव परस्परपरिहारत्वमित्यर्थे तु तद्विरोधस्य विशिष्य विभान्तत्वादवच्छेदकभेदाश्रयणाद्वा परिहारः कार्य इति भावनीयम् । ननु तैस्तैः पर्यायैरात्मद्रव्यस्य साक्षात्करणे परोक्षीकरणे वा केशादिविवेकव्यामुग्धबुद्धिः पुरुषो दृष्टान्ततया भाष्यकृतोक्तः कथं सङ्गच्छते, भ्रमज्ञाने साध्य एव व्यामुग्धबुद्धेर्दृष्टान्तत्वसम्भवादित्याशङ्कते—कथ तर्हीति, (१९४-१-४) केशमशकादानुगतसामान्येन सर्वं साक्षात्कुर्वन् भेदरूपविवेकात्मना च परोक्षयन् तद्विषरूपेण चासत्त्व साक्षात्कुर्वन् परोक्षयन् वा पुरुषो दृष्टान्ततयोक्त इति न वैषम्यमित्याशयवान् समाधत्ते—केशेत्यादि (५) ॥ तथा च केशादौ विवेके चार्थापदीये व्यामुग्धा परावर्तमाना सामान्यविशेषाकारतया विशिष्यानिष्ठिता बुद्धिर्यस्य स इत्यक्षरार्थो वाच्यः । ननु चेति (७) निश्चये, न तु पूर्वपक्षे, तद्वस्त्वित्यादिना (७) वस्तुस्थितेरेव वक्ष्यमाणत्वात्, क्रमाक्रमोभयनियमसाधनान्यतरनियमखण्डनाभ्यां वस्तुव्यवस्थयैव । न चेत्, न, व्यवतिष्ठत ( १९४-१-१० ) इत्यस्य प्रकृतायाः समर्थयिष्यमाणत्वादिति बोध्यम् ॥ १५ ॥

क्षुरादिभिर्व्यभिचारात्, तद्रूपस्य सन्तानान्तरसमानार्थविज्ञानेनानैकान्तात्, तल्लक्षणस्य समानार्थसमनन्तरप्रत्ययेनानैकान्तिकत्वात्, त्रिलक्षणस्यापि विभ्रमहेतुकविज्ञानैर्व्यभिचारात्, कामलाद्युपहतचक्षुषः शुक्ले शङ्खे पीताकारज्ञानोत्पत्तौ तद्रूपस्य तदाकाराध्यवसायिनोपि ज्ञानस्य तत्समनन्तरप्रत्यये प्रमाणत्वाभावात्। तदनभ्युपगमे स्वाभ्युपगमासिद्धेः किंसाधनः परमुपालभेत, स्वतोऽवश्यं दर्शनं नियतस्वविषयानुपलम्भव्यावृत्तिरूपं परं विषयानुपलम्भात्मकं न प्रमाणयेत्। न हि स्वयं प्रमाणानभ्युपगमे स्वार्थप्रतिपत्तिः। न चाप्रतिपन्नमर्थं परस्मै प्रतिपादयितुमीशः परमुपालब्धुं वा पराभ्युपगतस्यापि प्रमाणस्य प्रतिपत्तेरयोगात्, पराभ्युपगमान्तरापन्नविप्रतिपादनवस्थानप्रसङ्गात्। तदेकोपलम्भविषयः स्वपरलक्षणाभ्यां भावाभावात्मानं प्रसाधयति, तदभावे न प्रवर्तेत, नापि निवर्तेत, प्रमाणान्तरवत्। स्वस्यार्थस्य चैकस्यैवोपलम्भो हीतरस्यानुपलम्भः तस्य विधायक एवान्यस्य निषेधकः, तत्र प्रवर्तक एव वा परत्र निवर्तकः, इति तदेकोपलम्भनियमात्मकस्यैव प्रवृत्तिनिवृत्ती सिध्यतः। तदभावे सन्तानान्तरप्रमाणादिवत् प्रवर्तकाच्च कश्चित्प्रवर्तेत, निवर्तकाच्च न निवर्तेत, अप्रमाणात्प्रवृत्तौ निवृत्तौ वा प्रमाणान्वेषणस्य वैयर्थ्योपत्तिप्रसङ्गात्। तत प्रमाणं प्रत्यक्षमन्यद्वा स्वार्थोपलम्भात्मना परार्थानुपलम्भात्मना च प्रमाणमिति सदसदात्मकं सिद्धम्। तद्वत्प्रमेयमपि। इति सर्वं वस्तु प्रमार्पितनयाद्द्वैतं को नेच्छेत्? सर्वस्य विप्रतिपत्तुमशक्तेरनिष्टस्यापि तथा संप्रत्ययात्। कथमवक्तव्यं सर्वमिति चेत्, उच्यते, निष्पर्यायं भावाभावाभिधानं नाशक्तैव विषयीकरोति, शब्दशक्तिस्वाभाव्यात्, सर्वस्य पदस्यैकपदार्थविषयत्वप्रसिद्धेः, सदिति पदस्यासदविषयत्वात्, असदिति पदस्य च सदविषयत्वात्, अन्यथा तदन्यतरपदप्रयोगसंशयात्, गौरिति पदस्यापि दिगाद्यनेकार्थविषयतया प्रसिद्धस्य तत्त्वतोऽनेकत्वात्सादृश्योपचारादेव तस्यैकत्वेन व्यवहरणात्, अन्यथा सर्वस्यैकशब्दवाच्यत्वापत्ते, प्रत्येकमप्यनेकशब्दप्रयोग-

धर्मप्रतिपादनपरत्वं प्रत्याख्यातम्। कथमेवं वृक्षाविति पदं द्वावर्थौ वृक्षा इति च बह्वर्थमुपपद्यते इति चेत्, केषांचिदेकशेषारम्भात्, परेषां स्वाभाविकत्वादभिधानस्येति संगिरामहे। तत्रैकशेषपक्षे द्वाभ्यामेव वृक्षशब्दाभ्यां वृक्षद्वयस्य, बहुभिरेव च वृक्षशब्दैर्बहूनां वृक्षाणाम भिधानादेकस्य शब्दस्य सकृदनेकार्थविषयत्वम्, द्विप्रभृतिशब्दयोः सारूप्यादभिधेयसाम्याच्चैकस्योपचारादेकशब्दप्रयोगोपपत्तेः। स्वाभाविकत्वे त्वभिधानस्य वृक्षशब्दो द्विबहुवचनान्तः स्वभावत एव स्वाभिधेयमर्थं द्वित्वबहुत्वविशिष्टमाचष्टे, तथा सामर्थ्यात्, अन्यथा तद्व्यवहारानुपपत्तेः। ननु च वृक्षा इति प्रत्ययवती प्रकृतिः पदम् तस्य वाच्यमनेकमेकं च स्याद्वादिभिरिष्यते, न पुनरेकमेव। तथा चोक्तम् 'अनेकमेकं च पदस्य वाच्यं वृक्षा इति प्रत्ययवत्प्रकृत्या' इति कश्चित् सोऽप्यत्र प्रष्टव्यः किमेकमनेकं च सकृत्प्रधानभावेन पदस्य वाच्यमाहोस्विद्गुणप्रधानभावेन? इति। न तावत्प्रथमः पक्षः। तथा प्रतीत्यभावात्। वृक्षद्रव्यं हि वृक्षत्वजातिद्वारेण वृक्षशब्दः प्रकाशयति, ततो लिङ्गं संख्यां चेति शाब्दी प्रतीतिः क्रमत एव। तदुक्तं "स्वार्थमभिधाय शब्दो निरपेक्षो द्रव्यमाह समवेतम्। समवेतस्य तु वचने लिङ्गं संख्यां विभक्तीश्च॥१॥" इति। प्रधानभावेन च वृक्षार्थः प्रतीयते, बहुत्वसंख्या तु गुणभावेनेति न कस्यचिद्विरोधः, प्रधानगुणभावपक्षस्यैवाभिमतत्वात्, स्यादिति निपातेनानेकस्य धर्मस्याकाङ्क्षणेनैकस्यैव प्रधानस्य गुणानपेक्षस्यापवदनात्,—सर्वस्य वाचकतत्त्वस्य गुणप्रधानार्थत्वात् वाच्यतत्त्वस्य च तथाभूतत्वात्। तदुक्तम् ' आकाङ्क्षिणः स्यादिति वै निपातो गुणानपेक्षे नियमेऽपवादः। गुणप्रधानार्थमिदं हि वाक्यं जिनस्य ते तद्द्विषतामपथ्यम्॥ १॥ " इति। नन्वेवं प्रधानभावेनाशेषधर्मात्मकस्य वस्तुनः प्रकाशकं प्रमाणवाक्यं कथमुपपद्येत, येन सकलादेशः प्रमाणाधीनः स्यादिति चेत्, कालादिभिरभेदेनाभेदोपचारेण च द्रव्यपर्यायनयार्पितेन सकलस्य वस्तुनः कथनादिति ब्रूमः। द्रव्यार्थिकनयात्तावदेकस्यैव द्रव्यस्यानन्तपर्यायात्मकस्यादेशः प्रमाणवाक्यं नानेकार्थम्, पर्यायनयाच्च सकल-

सङ्केतैरर्थाभावात् । यत्र वस्तु सत्सामान्यं कथं सदप्यवाच्यमिति चेत्, तस्य पराभ्युपगमात् सतोऽपि वचनानुपपत्तेः । न खलु सर्वात्मना सामान्यं वाच्यं, तत्प्रतिपत्तेरर्थक्रियां प्रत्यनुपयोगात् । न हि गोत्वं वाहदोहाद्युपयुज्यते, स्वविषयज्ञानमात्रेऽपि तस्याऽसामर्थ्यात् । व्यक्तिसहितस्य सामान्यस्य तत्र सामर्थ्येऽपि न प्रतिपन्नसकलव्यक्तिसहितस्य सामर्थ्यम्, असर्वज्ञस्य सकलव्यक्तिप्रतिपत्तेः सकृदसंभवात् । अप्रतिपन्नाशेषव्यक्तिभिः सहितस्य सामर्थ्ये पुनरेकव्यक्तेरपि ग्रहणे सामान्यज्ञानप्रसङ्गः । कतिपयव्यक्तिसहितस्य सामर्थ्ये तस्य ताभिरुपकारानुपकारविकल्पद्वयानतिक्रमः । प्रथमविकल्पे सामान्यस्य व्यक्तिकार्यत्वप्रसङ्गः, तदभिन्नस्योपकारस्य करणात् । ततो भिन्नस्य करणे व्यपदेशासिद्धिः । तत्कृतोपकारेणापि तस्योपकारान्तरकरणेऽनवस्थानम् । द्वितीयविकल्पे व्यक्तिसद्भाववैयर्थ्यम्, अकिञ्चित्करसहकारिविरहात् । सामान्येन सहैकज्ञाने व्यापारात्तद्व्यक्तीनां तत्सहकारित्वेऽपि किमालम्बनभावेन तत्र तासां व्यापारोऽधिपतित्वेन वा ? प्राच्यकल्पनायामेकानेकाकारं सामान्यविशेषज्ञानं स्यान्न पुनरेकसामान्यज्ञानं, स्वालम्बनानुरूपत्वात्तस्य तद्विज्ञानस्य । द्वितीयकल्पनायां तु व्यक्तीनामनधिगमेऽपि सामान्यज्ञानप्रसङ्गः । न हि रूपज्ञाने चक्षुषोऽधिगतस्याधिपतित्वेन व्यापारोऽस्त्यपूर्वस्य वा । सर्वथा नित्यस्य सामान्यस्य क्रमाक्रमाभ्यामर्थक्रियाविरोधाच्च न तस्य कस्याञ्चिदर्थक्रियायामुपयोगो, यतस्तत्प्रतिपादनाय शब्दप्रयोगः स्यात् । ततो नार्थे कस्यचित्प्रवृत्तिरुपपद्येत । लक्षणया वृत्तिः कथञ्चित्तादात्म्ये न भवेत्, संबन्धान्तरासिद्धेः, कार्मुकादिवत् । न हि यथा कार्मुकपुरुषयोः संयोगः संबन्धः सिद्धस्तथा सामान्यविशेषयोरपि । न च समवायः पदार्थान्तरभूतः तत्प्रतीत्यभावात् । प्रतीयमानस्तु समवायः कथञ्चित्तादात्म्यमेव, अविष्वग्भावलक्षणत्वात्तस्य । इति लक्षणेन [illegible] सामान्ये [illegible] व्यवतिष्ठते । ततस्तत्रार्थक्रियार्थिनः प्रवृत्तिरसंबन्धान्नोपपद्येत, संयोगसमवायव्यतिरिक्तस्य संबन्धान्त-

ध्रुवस्य विधानात्। दृश्यविकल्प्ययोः स्वलक्षणसामान्ययोरेकत्वाध्यवसायात् तत्प्रणयस्य विधिः, न पुनर्वस्तुनः, सर्वथा विकल्पाभि-
धानयोर्वस्तुसंस्पर्शाभावादिति चेत्, न स्वलक्षणसामान्ययोरेकत्वाध्यवसायिना विकल्पेन स्वलक्षणस्याग्रहणात्, अगृहीतेन सह सामा
न्यस्यैकत्वाध्यवसायासंभवात्, अन्यथातिप्रसङ्गात्। प्रत्यक्षतः प्रमितेन स्वलक्षणेन तस्यैकत्वाध्यवसानमिति चेत्, नन्वेवं विकल्पाभि
धानयोर्वस्तुसंस्पर्शाभावे स्वलक्षणदर्शनस्याकृतनिर्णयस्य वस्तुसन्निधेरविशेषात् किं केन प्रमितं स्यात्? न हि मिथ्याध्यवसायेन तस्य
व्यवस्थापनम् संशयविपर्यासकारिणापि दर्शनेन स्वलक्षणस्य प्रमितत्वप्रसङ्गात्। वस्तुसंस्पर्शाभावाविशेषेऽपि निर्णयस्य जनकं दर्शनं स्व
लक्षणस्य प्रमाणं, न पुनः संशयादेरिति यद्भाषमाणोऽज्ञानमात्मनो निवेदयति। ननु च निर्णयेन दर्शनविषयसमारोपस्य व्यवच्छेदाज्जनकं
दर्शनं प्रमाणं न तु संशयादेर्जनकं, तेन तद्व्यवच्छेदात्, असमारोपितांशे दर्शनस्य प्रामाण्यात् "कथिदृष्टेऽपि यज्ज्ञानं सामान्यार्थं विक-
ल्पकम्। असमारोपितान्यांशे तन्मात्रापोहगोचरम् ॥१॥" इति वचनान्नोक्तोपालम्भ इति चेत्, न, समारोपव्यवच्छेदविकल्पस्य स्वसं
वेदनव्यवस्थानेऽपि विकल्पान्तरापेक्षत्वप्रसङ्गाभीतादिस्वलक्षणदर्शनवन्निर्विकल्पकत्वाविशेषात्। वस्तुदर्शनसमारोपव्यवच्छेदयोरन्यतर
स्यापि स्वतत्त्वस्यापरिनिश्चिततदितरेतराश्रयदोषः। समारोपो हि येन व्यवच्छिद्यते स निश्चयः स्वरूपमनिश्चिन्वन्नपि यदि स्वतः परिनि
श्चापयेत्तदा वस्तुदर्शनमपि, विशेषाभावात्। तथा च किं निश्चयापेक्षया? वस्तुदर्शनस्य निश्चयापेक्षायां वा निश्चयस्वरूपसंवेदनस्यापि
निश्चयान्तरापेक्षणादनवस्था स्यात्। निश्चयाद्वस्तुदर्शनस्य परिनिश्चितौ वस्तुदर्शनाच्च निश्चयस्वरूपस्य परस्पराश्रयदोषः स्यात्। ततो न
विकल्पव्यवच्छेदस्य सर्वथाप्यपोहोऽर्थः। एतेनातत्कार्यकारणव्यावृत्तिरेकप्रत्यवमर्शाभिधानापेक्षार्थसाधने हेतुरत्यन्तभेदेऽपीन्द्रियादिवत्सत्त्व
दिवेतरगुडूच्यादिवच्च ज्वरोपशमनादाविति यदभिहितं, सर्वथा ततो वस्तुनि प्रवृत्त्ययोगात्। समयादर्शिनोऽपि कस्यचिदन्वयपुरुषाभिमान-

तस्वजिज्ञासायामेकवरमकत्वस्यैव तत्र वक्तुमुचितत्वादित्यर्थः, 'सङ्केतस्येति' (१९७-२ १०) सङ्केतस्य तत्रार्थप्रतिपादने तच्छ- किम्पपेक्षायास्तच्छक्तिसमाश्रयणात्। प्रवृत्तेस्तस्यामेकार्थनियतत्वात् स्वातन्त्र्येण सङ्केतस्याहेतुत्वाभेकदेकस्याभुभयप्रतिपत्ति रित्यर्थः। सेनावनादिस्थले व्यभिचारमाशङ्क्य निराकरोति—सेनेत्यादिना (१०), अत्र यद्यपि प्रत्यासत्तिविशेषस्य सेनादिपदा र्थत्वे तदाश्रयालाभः, आश्रयात् सख्याभोपगमे जातिशक्तिवादापत्तिः, सेनादिपदेन प्रत्यासत्त्याऽऽश्रयस्यापि बोधोपगमे च एकं पदमेकमेवार्थं बोधयतीति नियमभङ्गात् सकृदुच्चरितमित्यादिन्यायाप्रामाण्यापत्तिः, तथापि सेनादिपदानां प्रत्यासत्तिविशेषस्य ववच्छावच्छेदकत्वात् सकृदुच्चरितमित्यत्र सकृदित्यस्यैकमेवेत्यस्यैकधर्मावच्छिन्नमेवेत्यर्थान्न कश्चिद्दोष इति भावनीयम्। अपरे तु सकृदुच्चरितमित्यत्र सकृदित्यस्यैक वृत्तिविषयमेवेत्यर्थः। सेनादिपदार्थोऽपि प्रत्यासत्तिविशेषाश्रय एक एव सेनादिपदेन बोध्यते, तदन्यबोधने तात्पर्यविरोधाश्रयणीया, अत एव नानार्थे श्लिष्टेऽनेककारकान्वितैकक्रियापदे घट पट चाऽऽनयेत्यादौ मुख्यलक्ष्योभयपरे च गङ्गायां घोषमत्स्यौ स्त इत्यादौ गङ्गादिपदे सकृदुच्चरिते एकदाऽनेकार्थतात्पर्यग्रहेऽपि नैकदोभयबोधः, किं त्वावृत्त्यैवेति तत्र वाक्यभेदव्यवहारः, एकानुसन्धानादेवोभयार्थबोधे तद्विरोधस्य सर्वैकवाक्यतासिद्धत्वादित्याहुः॥ एवं मते नराः पचन्तीत्यादावुभयत्रैव सरूपैकशेषः। ततश्च पृथगुच्चरितनानापदानामनुसन्धानान्नानार्थबोध, अक्षेणाक्ष पचतीत्यादौ तु पदभेदाच्च दोष इति मन्तव्यम्। चिन्तामणिकृतस्तु नात्रावृत्तिः, किं त्वेकदैवार्थबोधः, एकपदस्यैकानुसन्धाने उभयार्थतात्पर्य ग्रहस्य यौगपद्येन वा तदुग्रहस्यावृत्त्या निर्वाहासम्भवात्, सामान्यत उभयतात्पर्यग्रहे प्रथममस्यैव बोधो नान्यस्येति नियन्तुम शक्यत्वाच्च, गङ्गां पश्येत्यादावपि गङ्गापदस्य लक्ष्ये तात्पर्यग्रहे तस्यैव धीरित्यस्य निर्वाहाय नानार्थोपस्थितिकालीनैकार्थबोधे

बोध्यम् । परेषामिति (१२) ये नैकशेषमिच्छन्ति तन्मतेनेत्यर्थः, तदनिष्टेश्च ग्रन्थनियामकनिर्वचने विषयितास्थाने प्रकारिताया एव निवेशादेकार्थे तदसम्भवात्, वृक्षावित्यादौ प्रत्ययार्थद्वित्वान्वयस्य वृक्षपदार्थे एकत्वानवच्छेदेनैव सम्भवात्, तद्रूपैकशेषस्वीकारे तु तत्रैकत्वावच्छिन्ने द्वित्वबुद्धेः प्रमात्वायोगात् वृक्षत्वादेर्द्वित्वावच्छेदकत्वे त्वेकत्रापि वृक्षत्वेन द्वित्वधियः प्रमात्वापत्तेः, अत एवैकशेषसमभिव्याहारस्यैकशाब्दबोधजनकत्वे स्वभावशरणानुधावनम् । इत्थमेव हरी इत्यादावगृहीतभेदपदद्वयादेवार्थद्वयबोधाच्छाब्देन द्वित्वेन निर्वाह इति बोध्यम् । अनेकान्तमते भगवत्प्रवचने न्यायनयोपग्रहस्यापि क्वचिदुपयुक्तत्वे तु मणिकृन्मतमेवात्रादेयम्, तत्र च नापाततः एकार्थत्वे निर्भरः, किन्तु प्रधानैकार्थत्व इति सर्वं समञ्जसम् । एवं व्याख्याने ग्रन्थकारः स्याद्वादिसमयविरोधमाशङ्कते—ननु च वृक्षा इतीत्यादिना (११८ । २) एकानेकात्मकस्य प्रत्ययवत्प्रकृतिरूपपदवाच्यत्वेऽपि सकृदुच्चरितमित्यत्र बोधयतीत्यस्य प्रधानभावेन बोधयतीत्यर्थाभानुपपत्तिरित्याशयेन समाधत्ते सोऽप्येवं प्रष्टव्य इत्यादिना (३) ॥ स्वार्थमभिधायेति (५) शब्दो वृक्षादिशब्दः, स्वार्थं वृक्षत्वादिकम्, अभिधाय निरपेक्षो विभक्त्यपेक्षारहितः, समवेत समवायेन सम्बद्धम्, द्रव्यं वृक्षादिकम्, आह आक्षिपति, निराश्रयस्य वृक्षत्वस्यानुपपत्तेरित्यर्थः । समवेतस्य तु (४) द्रव्यस्य वचने (६) समवेतद्रव्यकथनानन्तरमित्यर्थः, विभक्तीर्लिङ्गं सङ्ख्यां चाह—अयमर्थोपस्थितिक्रमः पदोपस्थितिक्रमानुरोधी, स्वमते तु दीर्घकालिकशाब्दबोधस्यार्थोपयोगघटक एवायं बोध्यः । क्रमिकावग्रहाद्यात्मनः प्रत्यक्षोपयोगस्येव क्रमिकसाकाङ्क्षपदार्थज्ञानात्मन एव शाब्दस्य वाक्यार्थोपयोगस्यैकस्याभ्युपगमात्, तदुक्तं सम्मतिवृत्तौ—गौर्गच्छतीति वाक्यप्रयोगे गोशब्दात् सामान्यविशेषात्मकं गवार्थं गच्छत्याद्यन्यतमक्रियासापेक्षं प्राक् प्रतिपाद्यते, गच्छतीत्येतस्माच्च तं

प्रतिनियतगामिक्रियावच्छिन्नमवगमयतीति—ततः क्रियावच्छिन्नः सामान्यविशेषात्मको वाक्यार्थो व्यवतिष्ठते, पदसमुदायात्म
कवाक्यपारपदार्थात्मकस्यैव तस्य प्रतीतेरिति, सचिद घटो पृथा इत्यतः प्रत्ययपत्या प्रकृत्या पृथक्त्ववाभपतिक्रम इत्यादि
विषयकमिथोपरिपिविपरितप एतावद्वादिमात्पिण्डेन लिङ्गस इत्यादिमकारको पृथविशेष्यकः शाब्दबोधो जन्य इति तत्र मिथो
ऽप्यतथा पृथस्य प्राधान्य क्रियत्पुत्वादिसङ्ख्यायास्तु विशेषणतया गौणत्वमिति प्राधान्येनैकार्थताश्रयकस्यमेवैकपदस्य निर्णय-
मित्याह—'प्रधानभावेन चेत्यादि' (११८ १-५) प्रधानगुणभावस्यैवाभिमतत्वादित्यनन्तरं द्वितीयपक्षस्त्वयुक्त एवेति पूरणी
यम्, नन्वेवं सर्वसम्बन्धस्य प्रधानैकार्थत्वे विशेषणवाचकसम्बन्धोच्छेदापत्तिरित्याशङ्कायामथयथदाथायामापत्तो विशेषणविशेष्ये
भमचारादिप्राधान्यमविरुद्धम्, वस्तुतः स्याच्छब्दोत्थापिताकाङ्क्षागुणापेक्षस्यैवैकप्रधानार्थत्वम्, तत्र स्वाभिमानन्तधर्मात्मक-
स्वरूपेण स्वाभयविभज्यत्वैकधर्मसमयकरणोपपादनं कृत्वा पदे वाक्ये चाविरुद्धमिति व्युत्पादयन्नाह—स्यादिति निपातेनेत्या
दिना (७)॥ गुणानपेक्षस्य (७) सदेवेत्यादिना गुणाकाङ्क्षारहितस्य, अपवचनाभिराकरणात्, तथाभूतत्वात् (८) गुण
प्रधानभूतत्वात्, उक्तार्थेऽभियुक्तसम्मतिमाह तदुक्तमित्यादिना (८) गुणानपेक्षे नियमे सदेव घट इत्यादिप्रयोगे, स्या-
दिति निपातो वै (८) नियतम्, अपवादः (९) नयरूपस्योत्सर्गस्य स्याद्वादेन बाधनात्, तथात् प्रकृतैकधर्मात्मकत्वस्यैव
वस्तुनः सिद्धेः, स्याद्वादात् प्रकृतेतरधर्मात्मकत्वबोधकस्याच्छब्दमहिम्नाऽनन्तधर्मात्मकस्य वस्तुनः सिद्धिसौभाग्यारोहात्,
तदाह—तर्हि (९) प्रकृत, जिनस्य रागादिशत्रुजेतुः, ते तव, वाक्यं गुणप्रधानार्थं प्रधानभावेन प्रकृतधर्मात्मकतया
गुणभावेन च तदितरधर्मरूपधर्मात्मकतया बोधकम्, तत एव रागादिदोषप्रस्तानामेकान्ताभिनिवेशवतामिवादिनां यथा तथा प्रसर

प्रकाशिका तव द्विषतां (९) परतीर्थिकानाम्, अपध्यम् (९) अदृष्टविषयत्वादिति स्तुतिकृदर्थः । ननु गुणप्रधानार्थमेव सर्वं वाक्यमित्यभ्युपगमे प्रधानभावेनाशेषधर्मात्मकवस्तुप्रतिपादकसकलादेश उच्छिद्येतेत्याशङ्कते–'नन्वेवमिति (१९८ १९)' प्रमाणवाक्यानां सर्वैः पदैर्मिलित्वा प्राधान्येनानन्तधर्मात्मकवस्तुबोधन एव तात्पर्यम्, वेदान्तवाक्यानामिवाखण्डब्रह्मबोधने, तथा च सादस्त्येव द्रव्यमित्यतः स्वेतरसकलधर्मात्मकत्वसम्बन्धेनास्तित्ववदेव द्रव्यमिति प्राथमिकबोधानन्तरं तस्मादनन्तधर्मात्मकमेव सर्वं वस्त्वित्यौपादानिकबोधः सकलादेशजन्यः स्वीक्रियते, स च द्रव्यार्थिकार्पणयाऽनुपचरितैकविशेष्यताकः पर्यायार्थिकार्पणया चोपचरितैकविशेष्यताक इति तात्पर्यमादाय तत्र न प्रधानैकार्थत्वव्याघातः, सकलादेशान्यार्थ एव गुणप्रधानभावेन बोधकत्वनियमस्य चरितार्थत्वात्, अत एव सकलादेशेऽनन्तत्वान्यधर्मानवच्छिन्नानन्तधर्मप्रकारतानिरूपितसकलवस्तुविषयताशालित्वेन केवलज्ञानतुल्यत्वोक्तिः सङ्गच्छत इत्याशयवान् समाधत्ते–कालादिभिरित्यादि (१०) ॥ अनुम"यतामिति, (१९८ २५) ननु कथमेतदनुमन्तव्यम्, "एकं द्विकं त्रिकं चापि चतुष्कं पञ्चकं तथा ॥ नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ १ ॥" इत्यादिनाऽनेकार्थवाचकतायाः पदानां शास्त्रसिद्धत्वात्, अत्रैकं जातिर्व्यक्तिर्विशिष्टं वा, द्विकं जातिव्यक्ती, त्रिकं लिङ्गसहिते ते, लिङ्गस्य शब्दधर्मस्यापि व्युत्पत्तिविशेषादुपचारेणार्थेऽन्वयः, चतुष्कं संख्यासहितानि तानि, पञ्चकं कारकसहितानि तानि, न चान्वयव्यतिरेकाभ्यां लिङ्गादेः प्रत्ययवाच्यत्वमेव युक्तम्, तत एव तदुपस्थितौ प्रकृतिवाच्यत्वे मानाभावादिति शङ्कनीयम् । प्रत्ययवर्जिते दधि पश्येत्यादौ प्रत्ययमजानतोऽपि लिङ्गादिबोधात् प्रकृतेरेव तद्वाचकत्वकल्पनात्, तथा लिङ्गानुशासनदर्शनाच्चेति चेत्, मैवम्, अव्यवस्थितत्वेनैतेषु पक्षेषु निर्भरस्य कर्तुमशक्यत्वात्, लिङ्गादेः

तामित्याकारिकैव शक्तिः "एकयोक्त्या पुष्पवन्तौ" इत्यादिकोशात्तथाभावात्, अत एव न चन्द्रसूर्यपर्यायता, नानार्थे गणनं वा, किन्तु चन्द्रत्वेन सूर्यशक्तितावच्छेदकतयोर्व्यासज्यवृत्तितया च चन्द्रत्वेन चन्द्रः शक्यः सूर्यत्वेन च सूर्य इत्यादिर्न धीः, किन्तु चन्द्रत्वेन सूर्यत्वेन च चन्द्रसूर्यौ शक्यावित्येवेति सम्प्रदायमतमेव युक्तमित्यपरे। एकोच्चारणान्तर्भावेन नानार्थशक्तिस्थलेऽपि न सर्वत्र व्यासज्यवृत्तिधर्मावच्छिन्नप्रकारताक एव बोधः, पुष्पदन्तादिपदात्तथा बोधेऽपि तृतीयादेः करणत्वैकत्वादेः प्रातिस्विकरूपावच्छिन्नस्यैव नानार्थस्य बोधात्, तदुक्तं मिश्रैः, पुष्पदन्तादिपदे करणत्वैकत्वादिबोधकतृतीयादिपदे चैकोच्चारणेन तु नानार्थानुभवसननव्युत्पत्तिनियमादेकदैव नानार्थानुभवो नानुपपत्तिरिति, युक्तं चैतत्, तृतीयायास्तृतीयात्वेन करणत्वे एकवचनत्वेन चैकत्वे शक्तेः सामञ्जस्यैक्यसम्भवादिति वदन्ति। अतिरिक्तशक्तिपक्षे शक्यशक्ततावच्छेदकमेवाऽतृतीयादौ शक्तिः, पुष्पदन्तादिपदे तु व्यासज्यवृत्तिरेवैवेति युक्तम्। तदिह पुष्पदन्ततृतीयादिपदवत् सहार्पितसत्त्वासत्त्वोभयाश्रयबोधकं न किञ्चित्पदं व्युत्पादितमस्ति, प्रत्युत तथाजिज्ञासाया बाधितत्वज्ञाने तथाज्ञानस्य विपरीतव्युत्पत्त्या जायमानस्याप्यनिष्टत्वप्रतिसन्धानाच्च तदर्थं क्वचित् प्रामाणिकः पदप्रयोग इति तदाऽवक्तव्यत्वेन ज्ञानस्यैवेष्टत्वात्, तदर्थं तुरीयभङ्गाभिधानं साधु सङ्गच्छते। अत एवैकपदे बोधद्वय जायतामित्यादिस्थलेऽप्यवक्तव्यत्वाभिधानसाम्राज्यम्, बाधितेच्छाविषयत्वावच्छेदेनावक्तव्यत्वव्यवस्थापनात्, न चैवं तुरीयभङ्गेऽनुगतावच्छेदकानुपलम्भः, अननुगतानामपि तेषामुपलम्भे स्यात्कारस्यैव कल्पप्रसत्त्वात्, वस्तुत एकत्वावच्छिन्ने सहार्पितधर्मद्वयप्रकारकत्वितान्वयस्य निराकाङ्क्षत्वादेवावक्तव्यत्वप्रयोगसङ्गतिः "नावर्दसणदुयाए दुवे अह" इत्यादिवत्, सत्त्वासत्त्वादिनोपचरितं द्विस्वभावाय प्रवृत्तायां सप्तभङ्ग्यामपि निरवच्छिन्ने सत्त्वासत्त्वे एव तदवच्छेदके, न तु

(१९९–१–६) किंविषयविषयेत्यर्थः । अयं च वितर्को यतो व्यक्तिसामान्योभयविषयजनितेन ज्ञानेन नियमत उभयविषय तया भाव्यम्, ततः सामान्यज्ञाने विषयतयाऽव्यक्तीनामपि हेतुत्वौचित्यमित्याशयात्, तत्र (१९९–१–६) सामान्येन सहैकज्ञाने, तासां व्यक्तीनाम्, व्यापारः (७) कार्यजननाभिमुख्यम्, अधिपतित्वेन चेति आलम्बनभिन्नकारकत्वेन वेत्यर्थः । अनधिगमेऽपीति (८) न चेष्टापत्तिः, महत्त्वोद्भूतयोरप्रवेशलाघवेन द्रव्यान्यद्रव्यसमवेतचाक्षुषे चक्षुःसंयुक्त चाक्षुषसमवायत्वेन परेषां हेतुत्वेन जातिचाक्षुषपूर्वं नियमतो व्यक्तिचाक्षुषकल्पनेन तस्याः कर्तुमशक्यत्वात्, नहि रूप ज्ञान इति, (८) यद्यप्यालम्बनत्वेन हेतुतापि नाधिगतत्वं प्रयोजयति, किन्तु सह ज्ञेयत्वमेव, तथापि ज्ञायमान ज्ञातमिति नयाश्रयणाददोषः । भाष्ये तल्लक्षण (तल्लिङ्गलक्षण) चेति (१०) तेन सामान्येन उभयाऽऽक्षेपोऽर्थाद्विशेषस्य, तथा शुक्तिः प्रवृत्तिर्विक्षेपे, कथञ्चित्तादात्म्येन कृता भवेत्, कार्मुकादिवत् (११) कार्मुकादेरिवेति व्यतिरेके दृष्टान्तः, सम्बन्धा न्तरा(स्या)सिद्धेः (१२) तादात्म्यातिरिक्तसम्बन्धासिद्धेरित्यक्षरार्थः । पुष्पो कथञ्चित्ता(दा)दात्म्ये तदनुपपत्ते रिति (१९९–२–२) यद्यपि कार्यकारणभावदैशिककालिकाधाराधेयभावादीनामतादात्म्येऽपि तत्सम्बन्धव्यवहारकारित्वं दृश्यते, तथापि तत्रापि तद्व्यवहारप्रयोजकशक्त्यात्मना कथञ्चित्तादात्म्याभ्युपगमाददोषः, केवलं सामान्यविशेषादि सम्बन्धविचारे बहुलमभेदव्यवहाराचेशात्मकं तादात्म्यमनुभूतो भेदः, पृथक्सम्बन्धित्वस्थले तु वैपरीत्यमिति विशेषो बोध्यः । तादृशसर्वथाव्यक्तिव्यतिरिक्तत्वेनाभ्युपगतस्य सामान्यस्य, सतापीत्यादि, (४) तादृशा व्यक्तिव्यतिरिक्तेन पराभ्युप गतेन सामान्येन, सतापि परदृशा विद्यमानेनापि, अन्यव्यावृत्त्यात्मना (४) स्वातिरिक्तसामान्यव्यावृत्तेन, भवि

तत्र (४) भाष्यम्, अन्यथेत्यनभ्युपगमे, विशेषवत् (५) अन्त्यविशेषस्येव सामान्यस्य, स्वभावहानिप्रसङ्गात् (१९९ १-५) यथा विशेषो विशेषान्तराद्व्यावर्तमानः स्वभावं जह्यात् तथा सामान्यमपि सामान्यान्तरादित्यर्थः। विशेषाणां वा तद्वत् सामान्यवत्, ततः सामान्याद्व्यावृत्तेः (५) प्रसङ्गादिति योजनीयम्, भाष्यप्रतीके तथा 'परापरेत्यादि' (') सामान्ययोर्मिथोऽव्यावृत्तौ तत् सङ्करात् संकीर्णसामान्यवतो विशेषस्येव तत्तोऽर्थमात्रस्याभावात् सर्वाभावोऽतिरि क्तसामान्यवादिना स्यादित्यर्थः। कल्प्यतां तर्हि सामान्यं सामान्यान्तराद् व्यावृत्तं विशेष इव विशेषान्तरात् स्वभावत एवेति चेत्, तर्हि द्रव्यत्वादेः स्वाश्रय एवेव सं प्रत्यनुगमकव्यावर्तकतया सामान्यविशेषता स्यात्, यथा च किमपराद्धं वस्तुना, येनातिरिक्तपदार्थद्वयानपेक्षतया तस्यैव तथा नेष्यते, द्रव्यत्वादिकमपि हि जातित्वादिनानुगत स्वरूपेण च व्या वृत्तमिष्यते, तद्वदाश्रय एव किं तथा न स्यात्। जातिषु जातिस्वीकारे कल्प्यमानानन्तभावेन तासामपीभूतास्वन्यान्यजाति स्वीकारेऽनवस्थापत्तेस्तासु जातित्वमुपाधिरेवानुगमको वाच्यः, द्रव्यादित्रये तु बाधाभावेन सामान्यपदार्थ एव तथेत्यनुम वरेणोपलभामह इति चेत्, तदनुभवं पृच्छन्तु भवन्तो जात्यादयोऽभावान्ता अनन्ताः पदार्थाः स्वभावादनुगच्छन्ति द्रव्या दयस्तु कविषयेऽतिरिक्तसामान्येनेत्यर्धजरतीयं त्वयाऽकस्मादेव कथमुपलब्धम्, अनवस्थायाम मूलमतिरिक्तजातिकल्पनैव, तदुपर्यन्यान्यजातिकल्पनावताराद्भुक्ताश्रयस्वभावकल्पनाकुठारेण च तदेव कुतो नोच्छिद्यते येनानवस्थापत्ती न भवेदिति त्रिम्। तस्यानन्त्याविस्मादि, (७) अत्र यथोक्तं हेतुहेतुमद्भावः, आनन्त्यात् सङ्केतकरणासकेः सङ्केताविषयत्वम्, ततः सर्वोपसंहारेण शक्तिग्रहायोगादनन्वयः, ततश्च शाब्दबोधादिरूपसम्यग्व्यवहारायोग इति। स्वविषयविविधिभिर

पेक्षस्येति (८) स्वस्य शब्दस्य विषयो यो विधिर्गोत्वादिस्तमिरपेक्षस्य तदसंसर्गीभूतस्येत्यर्थः, तत्सापेक्षो ऽन्यापोहस्तद्वि शिष्टबुद्धौ संसर्गतया भासमानो गुणीभावमवलम्बेतापि, नीलमिदमिति प्रतीतावनीलव्यावृत्तेस्तथानुभवात्, प्राधान्येन तु प्रति योगिनां दुर्ज्ञानत्वादप्रतीत इति भावः तदाह–विकल्पेन चेति, (१९९ २ ९) न च संसर्गांशे गुणतयाऽपि निश्चयो दुर्घटः, प्रकारांश इव संसर्गादि विपरीतसमारोपव्यवच्छेदकस्य निश्चयत्वव्यवस्थितेरिति बोध्यम्। साधनवचनमेवाभिधायकम्, तच्च विधिरूपं लिङ्गमेवाभिधत्ते, स्वपरत्वेन बुद्धिप्रतिबिम्बपरत्वेन वा तयोपपत्तेः, अन्यच्च वचनं सम्भावनामात्रकरमेवेत्यन्यापोह शक्त्या न कुतोऽपि शब्दाभिर्णय इति शङ्कते–साधनेत्यादिना (९) एवं सति तवापसिद्धान्तः स्यादित्याह न तस्यापीत्या दिना, (१०) एवं च स्वसिद्धान्तादेव परस्यान्यापोहार्थत्वं ध्रुवमित्युक्तं भवति, वस्तुतोऽसौ परसिद्धान्त एवायुक्तः, एवं सति शब्दाद्विपरीतसमारोपव्यवच्छेदसिद्धावप्युक्तेऽयविधिरूपार्थासिद्धेस्तदानर्थक्यादर्थतस्त्वसिद्धौ चेकमात्रार्थताव्याघातादित्याह– सत्यपि चेत्यादिना, (१४) दृश्यविकल्प्यैकत्वप्रहाधीन एव विधिप्रत्यय इति न तस्य शब्दवाच्यत्वमित्याशङ्क्य तदेकत्वग्राहक- मेव खण्डयितुमुपक्रमते–दृश्यविकल्प्ययोरित्यादिना (१४)। किं केन प्रमितमिति (२००–१–३) विकल्पाभिधानयो वस्त्वविषयत्वादेव तदप्रमायकत्वाद्दर्शनस्य चानिश्चयरूपत्वेन तथ्यादिति भावः। नन्वेकसन्तत्यवच्छिन्नस्वाव्यवहितपूर्ववर्ति त्वसम्बन्धेन घटत्वावगाहिनिश्चयविशिष्टघटदर्शनत्वेन प्रामाण्यमङ्गीकरिष्यते तत्राह–न हीति (२) घटत्वावगाहित्वमात्रेण निश्चयो न समनन्तरघटदर्शनप्रामाण्याङ्गम्, संशयविपर्ययसाधारण्यादित्यर्थः, वस्तुतोऽर्थक्रियाकारित्वरूप न तथा, अर्थक्रिया ऽव्यवहितमाक्काले दर्शनस्य प्रागनष्टस्याभावाद्विकल्पविशिष्टदर्शनत्वेन दर्शनविशिष्टविकल्पत्वेन वार्थक्रियाहेतुत्वमित्यत्र विनि

गौरित्याद्यभिलापास्मा व्यवहारः, अतत्कार्यकारणव्यतिरेकव्यपयस्यायाम् (१४) अतत्कार्यकरणव्यावृत्तेरेकार्थसाधनहेतुत्वनियमे, विपर्यासयति (१४) वैधर्म्यापादनेन विघटयतीति भाष्याक्षरार्थः। शृतौ तस्येति, (१४) तथा च गुडूच्यादेर्ज्वरोपशमनादौ वस्तुभूतशक्तिसमानपरिणामेन हेतुत्वम्, अन्यापोहस्य तु कल्पनामात्रनिर्मितत्वेन तदभावाम तथेति व्यक्तो विपर्यास इत्युक्त भवति, कर्कादिव्यक्तीनां (२००–२–४) कर्कादिविशेषाणाम्, अश्वादिप्रत्ययम् अश्वाद्यनुगतप्रत्ययम्, तथा समानपरिणामहेतुक (४) प्रतिनियतसमानपरिणामजन्यम्, साधयति (४) तथाविधव्याप्त्युपस्थापनात्। कर्कादिष्वश्वाद्यनुगतप्रत्ययः प्रतिनियतसमानपरिणामहेतुकः अनुगतकार्यत्वात् गुडूच्यादिप्रयुक्तज्वरनाशवदिति प्रयोगसम्भवादिति भावः। 'विपर्याससाधनमिति' (४) अतद्व्यावृत्तिहेतुकत्वसाधनायोपन्यस्तेन प्रकृतोदाहरणेन तद्विपरीतसमानपरिणामहेतुकत्वसाधनादिति भावः। ननु गुडूच्यादिषु शक्तिरूपः समानपरिणामः कारणतावच्छेदक इष्यते प्रकृते त्वनुगतप्रत्ययहेतुत्वं समानपरिणामे साध्यमित्यस्ति तथापि साधनवैषम्यमिति चेत्, न। शक्तिशक्तिमतोरभेदनये शक्तिमतो हेतुत्वे शक्तेरपि तथात्वेन तदभावात्, यद्वा कारणतावच्छेदकसाधारणं प्रयोजकत्वमादाय समानपरिणामप्रयोज्यत्वे साध्ये न कोऽपि दोष इति भावनीयम्। अमीषाम् अन्यापोहवादिनां (४) बौद्धानाम्, अन्यापोहसामान्यमसत् (५), अभावत्वेनाभिमतम्, अवक्तव्यमेव विधाराधमत्वात्, एव प्रत्येकमवक्तव्यत्वघटिते भङ्गद्वये समर्थिते क्रमार्पिताभ्यां तृतीयभङ्ग सुघट एवेत्याह–'एतेनेत्यादि' (५)। सौगतानामिति (५) तन्मते स्वलक्षणान्यापोहयोः सदसत्त्वेनाभिमतयोर्विवाददशायामवक्तव्यस्यापादयितुं शक्यत्वादित्यर्थः। तदाह–स्वलक्षणस्येत्यादि, अत्रेदं चिन्त्यम्। एव पराभिमतं सत्त्वमसत्त्व तदुभयं चोद्देश्यतावच्छेदकीकृत्यावक्तव्यत्वविधा-

नेन परमभङ्गत्रयसमर्थने चेदान्त्यमभिमतमवक्तव्यत्वमुद्देश्यतावच्छेदकीकृत्य तद्विधानमहत्त्वविधित्सयाऽष्टमोऽपि भङ्गः कुतो न भवेत्, सत्त्वसाम्येऽप्यधर्मभेदेन भङ्गान्तरस्य दुर्वारत्वात्, धर्मिवक्तव्यत्वमवक्तव्यावक्तव्यत्वं न भेदकमिति चेत्, न। परमतस्वमताभ्यामुद्देश्यविधेयभावस्यैव भेदकत्वात्, अन्यथा सदवक्तव्यत्वादिकमपि केवलावक्तव्यत्वभङ्गकुक्षौ प्रविश्य न भङ्गान्तरतामापद्येत, किं चैवमाद्यभङ्गचतुष्टयं शुद्धघटत्वावच्छिन्नोद्देश्यताकमन्त्यभङ्गत्रयं च कल्पितसंघातावच्छिन्नधर्मिनिष्ठोद्देश्यताकमिति प्रकृतसप्तभङ्ग्येकवाक्यताभङ्गप्रसङ्गः, प्रकारभेदेनैव तदेकवाक्यत्वस्याभियुक्तैरुक्तत्वात्, प्रकारश्च विधेयधर्मो योद्देश्यतावच्छेदकधर्मो वेति न कश्चिद्विशेषः, इत्थमेव शुद्धघटादिधर्मिकसप्तभङ्गीतो नीलघटादिधर्मिकायास्तस्या अविगानेन भेद इति, यदि च सत्त्वासत्त्वे वस्तुधर्मौ च मतकल्पितमुद्दिश्य पृथगेवावक्तव्यत्वं परमभङ्गत्रयेणाभिधीयत इति मतं तदा सावनं नित्यत्वानित्यत्वोभयादिकमाश्रित्य बहवोऽपि भङ्गाः प्रकृतपर्यायविधिनिषेधकल्पनामूलत्वाभावेनैकवाक्यत्वाभावश्च स्फुट एवेति परमतापेक्षया परमभङ्गत्रयं व्यवस्थितमित्यकलङ्कदेवोक्तिर्वार्त्तामात्रम्, किं स्वाद्यभङ्गद्वयधर्मकनिजपररूपयोः भङ्ग्यादिरूपया व्यवस्थापन एव नयभेदो मतभेदो वोपयुज्यते, तृतीयभङ्गस्यावक्तव्यत्वलक्षणस्ताभ्यां युगपदादिष्टाभ्यां तद्भेदादनेकमेव इत्येते त्रयो निरवयवद्रव्यविषयत्वात् सकलादेशरूपाः, सदसत्त्वसदवक्तव्यत्वाद्यश्चत्वारस्तु चरमाः सावयवद्रव्यविषयत्वाद्विकलादेशरूपाः, देशभेदं विनैकत्र तु क्रमेणापि सदसत्त्वविवक्षा सम्प्रदायविरुद्धत्वान्नोदेतीति न निरवयवद्रव्यविषयत्वमेषामित्यस्मदभिमतोक्तमेव युक्तमिति मन्तव्यम्। तदेतद्रहस्यं स्वसमयव्युत्पत्तिरसिकमनोविनोदाय सम्मतिगाथाभिरेव व्युत्पादयामः—"अत्थंतरभूएहि य णियएहि य दोहि समयमाईहिं। वयणविसेसाईयं दव्वमवत्तव्वयं पडइ ॥ १ ॥ अर्थान्तरभूत

पटादिर्भिन्नो घटादिः, ताभ्यां द्वाभ्यां सदसत्त्वं घटवस्तुनः प्रथमद्वितीयभङ्गनिमित्तं प्रधानगुणभावेन भवतीति सोपस्कारं व्याख्येयम् । ” समपमार्पिते इत्यनन्तरं तुर्गम्यः, द्वाभ्यामिति चानुवर्तते, समकमादिरादानं ययोस्ताभ्यां सहार्पिताभ्यां तु द्वाभ्यामित्यर्थः । वचनविशेषातीत वचनस्य विषयः शक्तिस्तमतीतमतिक्रान्तं सत् तथाविधवाचकाविषयीभूतमिति यावत्, द्रव्यं घटादि, अवक्तव्यम्, पतति अवक्तिभारा प्रवक्तव्यतावसरे स्थातु न शक्नोतीत्यर्थः । अवक्तव्यतां वा पततीति व्याख्येयम्, तथाहि द्वयोर्धर्मयोः प्राधान्येन गुणभावेन वा प्रतिपादने न किञ्चिच्छब्दः समर्थः, वृत्तौ द्वन्द्वस्यैवोभयपदप्रधानत्वात्, तस्य च द्रव्यवृत्तेः प्रकृतेऽनुपपत्तिसम्भवात्, गुणवृत्तेरपि गुणानां परार्थत्वेन प्राधान्याघटनात्, प्रत्येकमङ्गस्थले एकधर्मस्यैक धर्म्युपचारेण प्राधान्यसम्भवेऽपि विरुद्धत्वेन प्रतीयमानयोर्धर्मयोरेकधर्म्युपचारायोगात्, वाक्यस्यापि द्वयभिधार्थत्वेन तदनति शायित्वात्, न च केवलं पदं वाक्यं वा लोकप्रसिद्धं तथा, तस्यापि परस्परापेक्षद्रव्यादिविषयतया तथाभूतार्थप्रतिपादकत्वायो गात्, न च तौ सदिति शतृशानचोरिव सङ्केतितैकशब्दवाच्यत्वम्, विकल्पप्रभवशब्दवाच्यत्वप्रसङ्गात्, विकल्पानां च युगपद-प्रवृत्तेर्नैकदा तयोस्तद्वाच्यतासम्भव इति । एतेन सदादिपदप्रवृत्तिरपि निरस्ता । तत्रापि तथाविकल्पप्रभवेन तच्छब्देन क्रमेणै वानेकार्थाभिधानात्, एकवचनान्तस्याप्येकशेषस्य “जहा एगो पुरिसो तहा बहवे पुरिसा” इत्यागमसिद्धत्वात्, न च निजा-र्थान्तरैकत्वाभ्युपगमेऽप्यर्थस्य वाच्यता, तथाभूतस्यात्यन्तासत्त्वेनावाच्यत्वात्, न च घटत्वे घटशब्दप्रवृत्तिनिमित्ते सिद्धेऽ-सम्भव एव तत्र पटार्थप्रतिषेध इति द्वितीयभङ्गानवकाशात् तृतीयोऽपि दूरापास्त इति शङ्कनीयम् । पटादेस्तत्राभावाभावे घटशब्दप्रवृत्तिनिमित्तस्य घटत्वस्यैवासिद्धेः, प्रथमभङ्गोत्थापिताकाङ्क्षया द्वितीयभङ्गस्यावश्यप्रयोज्यत्वात्, तदुभयविषयसहार्प

नया तृतीयस्याप्यवक्तव्यत्वात् अथवा सर्वं सर्वात्मकमिति सांकर्यमसम्यगच्छेदाय यत्नविशेषो विधीयते, यत्र यस्य प्रती
त्यभावात् ॥१॥ यथा नाम–स्थापना–द्रव्य–भावभिमेषु विधित्सितविधित्सितप्रकारेण प्रथमद्वितीयौ ताभ्यां युगपदभिधातुम्,
तथाभिधेयपरिणामाभावात्, व्यतिरेके प्रतिनियतव्यवहारोच्छेदो बाधकस्तर्कः, एवमग्रेऽपि, ॥२॥ अथवा स्वीकृतप्रतिनियतम
न्यरे तत्रैव नामादिके यः संस्थानादिस्वद्रव्यस्वरूपेण घटः, इतरेण चाघट इति प्रथमद्वितीयौ, ताभ्यां युगपदभिधातुमशक्तेरवाच्य ॥
३ ॥ यथा स्वीकृतप्रतिनियतसंस्थानादौ मध्यावस्था निजं रूपं कुशूलकपालादिलक्षणे पूर्वोत्तरावस्थे अर्थान्तररूपं ताभ्यां सत्त्वा
सत्त्वयोरायद्वितीयौ, युगपत्ताभ्यामभिधातुमसामर्थ्यादवाच्यस्तृतीयः ॥४॥ अथवा तस्मिन्नेव मध्यावस्थारूपे वर्तमाना-
वर्तमानक्षणरूपतया सत्त्वासत्त्वाभ्यां प्रथमद्वितीयौ, ताभ्यां युगपदनभिधेयत्वादवक्तव्यत्वात्स्यस्तृतीयः ॥५॥ यथा क्षणपरिण
विरूपे लोचनजप्रतिपत्तिविषयत्वाविषयत्वाभ्यां निजार्थान्तरभूताभ्यां सत्त्वासत्त्वाभ्यामाद्यद्वितीयौ, ताभ्यां युगपदादिष्टोऽ-
वाच्यः ॥६॥ अथवा लोचनजप्रतिपत्तिविषये तस्मिन्नेव घटे घटशब्दवाच्यता निजं रूपं कुटशब्दाभिधेयत्वमर्थान्तररूपं ताभ्या
माद्यद्वितीयौ, सहार्पणया तृतीयः ॥७॥ अथवा घटशब्दाभिधेये तत्रैव घटे हेयोपादेयान्तरङ्गबहिरङ्गोपयोगानुपयोगरूपतया मद्
सत्त्वासत्त्वाभ्यामाद्यद्वितीयौ, ताभ्यां युगपदादिष्टोऽवाच्यः ॥८॥ अथवा तत्रैवोपयोगेऽभिमतार्थावबोधकत्वानभिमतार्थानवबोधकत्वतः
सत्त्वासत्त्वाभ्यामाद्यद्वितीयौ, सहार्पणयाऽवाच्यः ॥९॥ अथवा सत्त्वमसत्त्वं चार्थान्तरभूतम्, निजं घटत्वम्, ताभ्यामाद्यद्वितीयौ,
क्रमेण ताभ्यां निर्दिष्टो घटोऽवक्तव्यो भवति, सत्त्वमभ्युपगम्य घटत्वविधाने सत्त्वस्य घटत्वेन व्याप्ततया घटस्य सर्वगतत्वापत्त्या
तथाभ्युपगमे प्रतिभासव्यवहारविलोपात्, असत्त्वमभ्युपगम्य घटत्वविधानेऽप्यभावमात्रस्य घटत्वप्रसक्तेः, घटत्वमभ्युपगम्य सत्त्वमसत्त्वं

धानेऽपि घटमात्रस्य सदसत्त्वे, पटादीनां प्रागभावादीनां चाभावप्रसक्तिरिति विशेषणविशेष्यभावलोपात् सदसद्भिरप्येव घटो ऽवाच्य एव, अनेकान्तपक्षे तु कथञ्चिदवाच्यत्वान्न दोषः । न चानया रीत्या नीलोत्पलमित्यादावपि विशेषणविशेष्यभाव सम्भवनादवाच्यत्वप्रसङ्ग इति दूषणं देयम् । तत्रापि स्यात्पदमध्याहृत्यैव तत्तत्प्रतिनियमेन विशेषणविशेष्यभावव्यवस्थितेः, एकान्तपक्षे त्ववाच्यत्वस्वीकारादेव न च नीलोत्पलमित्यादेः सम्भवाभिप्रायेणैव प्रयोगाददोषः, तथापि नियमाभिप्रायेण स्यादवाच्यत्वाक्षतेः सम्भवनियमाभ्यां प्रथमद्वितीययोरेव भङ्गयोरारम्भे तृतीयाभ्यामवाच्यत्वाक्षतेरिति दिग् ॥१०॥ यद्वा व्यञ्जनपर्यायोऽर्थान्तरभूतस्तदविषयत्वादसत्त्वं, घटार्थपर्यायस्त्वन्यस्यापूर्वनिजः, ताभ्यामाद्यद्वितीयौ, अभेदेन ताभ्यां निर्देशेऽवक्तव्यः, अन्यतरमनूद्यान्यतरविधाने व्यवस्थितरूपविपर्यासेन व्यवहारविलोपप्रसङ्गात्, अनेकान्तपक्षे तु युगपदभिधातुमशक्यत्व स्यात् कथञ्चिदवक्तव्यः ॥११॥ यद्वा सत्त्वमर्थान्तरभूतम्, अन्त्यविशेषो निजः, तदुभयं प्रवृत्तिनिवृत्त्यविषयत्वादनन्वयाच्चावाच्यम्, प्रत्येकावक्तव्याभ्यां ताभ्यामादिष्टो घटोऽवक्तव्यः, अनेकान्तपक्षे तु कथञ्चिदवक्तव्यः ॥१२॥ अथवा संस्तुतरूपाः रूपादयो घट इत्यत्र दर्शनेऽर्थान्तरभूता रूपादयः, निजं सन्तुतरूपम्, ताभ्यामादिष्टो घटोऽवक्तव्यः, अरूपादिभ्यावृत्त्या रूपादिभ्यवस्थायामरूपाद्यात्मकघटताया रूपादीनामवाच्यत्वात्, अरूपादिरूपत्वे च रूपादीनां तत्स्वरूपस्यैवाभावे के सन्तुतरूप तया विशेष्या ये घटरूपतामास्कन्देयुरित्येवमप्यवाच्यः । अनेकान्तवादे च कथञ्चिद्वाच्यः ॥१३॥ इयमेव रीतिरसन्तुतरूपा रूपादयो घट इति पक्षेऽपि भावनीया । तत्र रूपादीनामर्थान्तरभूतत्वादसन्तुतरूपत्वस्य च निजत्वात्ताभ्यामादिष्टस्यावक्तव्यतायाम प्राग्वद्विशेष्यलोपादेव सिद्धेः । कथञ्चित्पक्षस्य च जैनानां सर्वत्राप्यदुष्टत्वात् । पूर्वपक्षे रूपादिषु घटत्वं पर्याप्तमत्र

तु रूपादिमत्त्वेऽपि नाना तत्, कथञ्चित्सौ ( स ) सादृश्यादैकत्वव्यवहार इत्येवावान् विशेष इति सम्यगाभासः ॥१४॥ यदि वा रूपादयोऽर्थान्तरभूता मधुरौ नित्यत्वाभ्यामाविष्टो घटोऽभ्युपगम्यः, विना कल्पनाविशेषं भिन्नप्रतीतिविषये विशेषण विशेष्यभावाभावात्, अनेकान्ते तु कथञ्चिदेकाभ्यः ॥१५॥ अथवा घटोऽर्थान्तरभूत उपयोगस्तु नित्यत्वाभ्यामाविष्टोऽभ्य कल्प्यः । य उपयोगः स घट इत्युक्तौ उपयोगमात्रस्य घटत्वप्रसक्तेः, यो घटः स उपयोग इत्युक्तावुपयोगस्यार्थत्वप्रसक्ते-र्घटस्याव्याप्यत्वात्, अनेकान्ते तु कथञ्चिद्व्याप्यत्वे दोषाभावादिति दिग् ॥ १६ ॥ " भङ्गाः षोडश योगतर्कविदिमे भूयो विचारक्षमाः, साकल्येन च तैर्निपन्यत इदं भङ्गत्रयं वस्तुनि ॥ तेनैतान् सुधियो वदन्ति सकलादेशान् विपक्षावशा-देशस्यामिगुरुः परांस्तु विकलादेशाभिषेशात् गुरोः ॥ १ ॥ एतदन्यतरेणैव सप्तभङ्गीकथमिष्यते ॥ साम्यसाम्येन नैकस्य तत्त्वतः षोडशैव ताः ॥ २ ॥ इत्यर्थे कोटिशो भङ्गा निर्दिष्टा मल्लवादिना ॥ मूलसम्मतिटीकायामिद विस्मयावहम् ॥ ३ ॥ " एत एव सप्तभङ्गाः स्यात्पदलाञ्छनविरहिणोऽवधारणैकस्वभावा विषयाभावाद्दुर्नया भवन्ति । धर्मान्तरोपादानप्रतिषेधाकरणात्, स्वार्थमात्रप्रतिपादनपराः स्वात्ममहिम्ना विवक्षितैकधर्माः पारम्परा वा सुनया इति विभागः । एवं निरवयववाक्यात्मकं भङ्गत्रयं प्रतिपाद्य सावयववाक्यरूपं चतुर्थं भङ्गं प्रतिपादयितु माह—" अह देसो सब्भावे देसोऽसब्भावपज्जवे णियओ । तं दवियमत्थिणत्थिय आएसविसेसियं जम्हा ॥२॥" अथेति यदा देशो वस्तुनोऽवयवो धर्मो वा, सद्भावेऽस्तित्वे, नियतो विवक्षितः, देशश्चापरोऽसद्भावे नास्तित्वे, तदा तद्रूप्यमस्ति च नास्ति चेति युगपदेव द्वारेण वाच्यम् । अविरोधिधर्मकत्वसंस्पर्शयोगात् कामक्रोध इव देवदत्तः तदाह—यस्मादादेशविशेषितम्

उभयप्रधानावयमामेवेनार्पितं स्वाश्रयसमवायित्वरूपपरम्परासम्बन्धावच्छिन्नधर्मद्वयप्रकारतानिरूपितैकविशेष्यताकौपादानिक बोधेच्छाविषयीकृतमिति यावत्, यथाभूते घटपदस्य देशपरस्याद्रव्या प्रकारताद्वयनिरूपितविशेष्यताद्वयशालिन एव बोधस्य जननादौपादानिकबोधपर्यन्तमनुधावनम्, एवमग्रेऽपि बोध्यम् ॥ उक्तन्यायेन पंचमभङ्गप्रदर्शनायाह–'सब्भावे आइट्ठो देसो, देसो य उभयहा जस्स। तं अत्थि अवत्तव्वं च होइ दवियं वियप्पवसा ॥३॥" सद्भावेऽस्तित्वे यस्य घटादेर्धर्मिणो देश आदिष्टो देशोऽपर उभयथाऽस्तित्वनास्तित्वप्रकाराभ्यामेकदैव विवक्षितः तद्द्रव्यमस्ति चावक्तव्यं च भवति, विकल्पवशादुक्तोभय धर्माक्रान्तदेशद्वारेण धर्मिणो विवक्षावशात्, तेन प्रथमतृतीयभङ्गसंयोगेनान्यथासिद्धिर्व्युदासः, केवलधर्मविवक्षाया देशाविशेषितद्रव्य एव सम्भवात्, देशद्वारा द्रव्ये उभयधर्मविवक्षाया एव युक्तत्वादिति बोध्यम् ॥ षष्ठं भङ्गं दर्शयितुमाह–'आइट्ठोऽसब्भावे देसो, देसो य उभयहा जस्स। तं णत्थि अवत्तव्वं च होइ दवियं वियप्पवसा ॥४॥' यस्य वस्तुनो देश एकोऽसत्त्वे नियतोऽपरश्च सत्त्वासत्त्वाभ्यां युगपदादिष्टस्तद्द्रव्यं तथा विकल्पवशान्नास्ति चावक्तव्यं च भवति, केवलद्वितीयतृतीयभङ्गव्युदासः प्राग्वद्भाव्यः॥ सप्तमं प्रदर्शयति–"सब्भावासब्भावे देसो, देसो य उभयहा जस्स। तं अत्थि णत्थि अवत्तव्वं च दवियं वियप्पवसा ॥ ५ ॥' यस्य देश एकः सद्भावेऽपरोऽसद्भावेऽन्यश्चोभयथा नियतस्तद्द्रव्यं तथा विकल्पवशादस्ति नास्त्यवक्तव्यं च भवति, विशिष्टविवक्षया केवलभङ्गत्रयव्युदासः ॥ न चाष्टमवचनविकल्पपरिकल्पनापि सम्भवदवतारा, तद्विभिन्नधर्माभावात्, सावयवात्मकस्य निरवयवात्मकस्य तद्विभिन्नस्य चतुर्थादिषु प्रथमादिषु चान्तर्भावात्, गत्यन्तरस्य चासत्त्वात्, न चावक्तव्यत्वस्यावक्तव्यत्वे नाष्टमेन भवितव्यम्, सम्प्रति यथामौलभङ्गजिज्ञासामूलजिज्ञासाविषयत्वेनावक्तव्यत्वाश्रयत्वेऽपि तद्विपर्ययेण वक्तव्यत्वाना

स्थितत्वादिति युक्तं पश्यामः। एतेन-"इच्छइ विसेसियतरं पच्चुप्पन्नं णओ सद्दो" इतिनिर्युक्तिप्रतीके ऋजुसूत्रादिशेषितवस्तु ग्राहकस्य सप्तभङ्ग्यामाक्रान्ततया यन्महाभाष्याद्युपदर्शितं तदविरुद्धमित्युक्तं भवति, अवक्तव्यत्वातिरिक्तस्थले सत्त्वास त्त्वतया न्याय्यत्वात्तत्तदवच्छिन्नार्थग्राहित्वेन च शब्दनयस्यार्पणानर्पणयोरिति भावनीयम् ॥१॥ यद्वा व्यञ्जनपर्याये व्य ञ्जनपर्यायग्राहिणि समभिरूढनये एवंभूताख्ये देशप्रदेशकल्पनारहितासम्बद्धस्याभ्युपगमपरे देशाभिधेयपरं भङ्गत्रयानुपपत्त्यायोगादाद्येषु त्रिष्वपि स्थितेषु एकस्मिन्नभिधानेऽपरस्मिन्नपि परमिति न्यायेन पदप्रधानोपस्थितानामर्थानामिवार्थप्रधानोपस्थितानां पदानामपि शब्दबोधप्रवेशयोग्येऽवक्तव्यत्वभङ्गस्य मूलत एव लोपात् सविकल्पो व्यतिरेकसहितो निर्विकल्पश्च तद्रहितो वचनमार्ग इत्ये वमाद्यभङ्गद्वयमेवाभिप्रेत इति व्याख्येयम् ॥२॥ यद्वा व्यञ्जनपर्याये विशेषापेक्षया स्थूलव्यञ्जनपर्यायग्राहिणि व्यवहारकल्प मेवसङ्ग्रहपरे शब्दनये सविकल्पो निर्विकल्पश्चेत्याद्यभङ्गद्वयात्मक एव वचनमार्गः, येरूपादिभिरवक्तव्यं तैरसत्त्वस्यैवाभय मात्, इत्थमेव निरुक्तघटत्वपटत्वाभ्यामभावस्य केवलान्वयित्वप्रवादोपपत्तेः, तथा जिज्ञापयिषया गुरोरपि शिष्यं प्रति तृतीयभङ्ग स्थाने द्वितीयभङ्गस्यैव प्रयोगार्हत्वात्, आद्यभङ्गे सामान्यबुबोधयिषारूपतया भङ्गद्वय एव वाक्यपर्याप्तौ च संनिवृक्षारूपतया सप्तभिप्रायात्मकमहावाक्यापारवैचित्र्योपपत्तेर्महावाक्यावान्तरवाक्यरूपनिमित्तभेदात्, देशाभिधा भङ्गा अपि चात्र देशिनिष्ठतया संग्राह्याः, अन्यथैकवचनबहुवचनादिनाऽपि विभ्रमापत्तेरिति सर्वमनवद्यम् ॥ ३ ॥ "मतद्वयेऽपि व्याख्याता, सप्तभङ्गी मिमां मया। बुधाः। सुधावदास्वाद्य, सन्तु सौहित्यशालिनः ॥ १ ॥ अमुष्मिन्नेतावत्यखिलनयसम्मर्द गहने, महातर्के कस्य प्रभवति परिच्छेदयिषणा ॥ तथाप्यन्तः श्रीमन्नयविजयविज्ञाङ्घ्रिभजने, न भग्ना

भक्तिश्चेत्कथय किमसाध्यं मम सम्ने ! ॥ २ ॥"  ॥ सप्तभङ्गीविमर्शः पूर्णः ॥

नन्वस्तित्वमेव वस्तुनः स्वरूपं, न पुनर्नास्तित्वं तस्य पररूपाश्रयत्वादन्यथातिप्रसङ्गादिति वदन्तं वादिनं प्रत्याहुराचार्याः ।

## अस्तित्वं प्रतिषेध्येनाविनाभाव्येकधर्मिणि । विशेषणत्वात्साधर्म्यं यथा भेदविवक्षया ॥ १७ ॥

एको धर्मी जीवादिः । तत्रास्तित्वं नास्तित्वेन प्रतिषेध्येनाविनाभावि, न पुनर्भिन्नाधिकरणम्, विशेषणत्वात् । यथा हेतौ साधर्म्यं वैधर्म्येण भेदविवक्षया सर्वेषां हेतुवादिनां क्वचिदनुमानप्रयोगे प्रसिद्धम् । सर्वस्य नित्यत्वानित्यत्वादिसाधने हेतौ साधर्म्यस्य व्यतिरेकाविनाभाविनोऽसंभवादनुदाहरणमिति चेत्, न, तत्रापि तदुभयसद्भावात् । तथा हि । सर्वं नित्यमनित्यं वेति प्रतिज्ञायाऽभिप्रेत्य वा प्रमेयत्वादिहेतूपादानेपि व्यतिरेकोस्त्येव, प्रमेयत्वस्य वस्तुधर्मत्वात् । परिणामी जीवः कथंचिद्वा नापरिणामीति वा, सर्वं चेतनमचेतनं वा विवादापन्नं नित्यमनित्यं वा प्रतिज्ञाप्रयोगवादी प्रतिपाद्यानुरोधतः प्रतिज्ञाय, सौगतप्रतिपाद्याश्रयतोऽभिप्रेत्य वा प्रमेयत्वात् सत्त्वात् कृतकत्वादर्थक्रियाकारित्वादित्यादिहेतूनामुपादानेपि वादिप्रतिवादिप्रसिद्धेऽर्थेऽन्वयवत्खपुष्पादौ साध्यधर्मनिवृत्तौ साधनधर्मनिवृत्तिलक्षणो व्यतिरेकोस्त्येव । खपुष्पादयोपि तत्र व्यवहारमिच्छता प्रमेयाः प्रतिपत्तव्या इति न किंचिदसमाधानम् प्रमेयाभावस्यापि तथाभावानुपपत्ते वाच्यत्वासमसङ्गात् । न चैतद्विरुद्धम्, स्वलक्षणमनिर्देश्यमित्यादिवत् । न हि स्वलक्षणस्यानिर्देश्यस्याप्यनिर्देश्यशब्देन निर्देशे विरोधोस्ति । नापि प्रत्यक्षं कल्पनापोढमपि कल्पनापोढत्वेन कल्पयतः किंचिद्विरुध्यते, सर्वथा तद्व्यवहारापह्नवप्रसङ्गात् । तथैव खपुष्पादयोऽप्रमेया इति व्यवहरतोपि न तेषामप्रमेयत्वं विरुध्यते, तत्प्रमितौ प्रमाणाभावात्प्रमेयाभाववत् । तदभावेपि खपुष्पादीनां प्रमेयत्वे प्रमेयाभावस्यापि प्रमेयत्वानुपपन्नः । तथा च प्रमेयत्वमावश्यकमा कथमाख्यायेत ? एतेन खपुष्पादयः प्रमेयाः शब्दयिकल्पविषयत्वा-

घटादिवदित्यनुमानं प्रत्युक्तम् हेतोः प्रमेयाभावेन व्यभिचारात्। प्रत्यक्षानुमानाभ्यां प्रमीयमाणत्वात्प्रमेयाः खपुष्पादय इति चेत्, न,
असिद्धत्वात्साधनस्य। तथा हि। ते न प्रत्यक्षेण प्रमीयमाणाः तत्र स्वाकारानर्पकत्वात्। नाप्यनुमानेन, स्वभावकार्यप्रतिबन्धाभावात्।
स्वभावेन केनचिदपो प्रतिबन्धे निःस्वभावत्वविरोधात्, कार्येण च प्रतिबन्धेऽर्थक्रियाकारित्वप्रसंगात् सत्त्वात् खपुष्पादयो व्यवह्रि-
येरन्। स्वस्मिन् स्वाकारमनर्पयता स्वभावकार्यप्रतिबन्धाभावे प्रमेयत्वं प्रमाणान्तरमपऽपमाकर्षति। ततो विप्रतिषिद्धमेतत् खपुष्पादीनां
प्रमेयत्वम् प्रमाणाद्यभिधानविरोधात्। न च प्रमाणान्तरेणापि प्रमीयमाणास्ते, प्रमाणविषयत्वधर्मस्यानाश्रयत्वात्। अन्यथा वस्तुत्वापत्तेः
सदसद्रूपत्वानुपपत्तेरप्रसरायमाणः। न च स्वरूपप्रमेयाभ्यां तयोः, सर्वथा विधिनियमयोरेकान्तत्वासंभवात्। पुष्परहितं खमेव खे
पुष्पाभावः खतारक एव च विषाणरहिताः शशादिषु विषाणाभाव इत्येकविषयौ खपुष्पादिषु विषाणविधिनियमौ संभवत एवेति
चेत्, न, गगनशशादीनां भावाभावस्वभावभेदाद्विधिनियमोपलम्भात्, अन्यथानुपलम्भाभावात्। तथाविकल्पविशेषात्संकेतविशेषापेक्षादेकत्र
विषये विधिनियमयोः संभव इति चेत्, न, संकेतविशेषस्य वस्तुस्वभावविशेषनिबन्धनत्वात्। तत्स्वभावभेदाभावे च संकेतविशेषानुप-
पत्तेरभिधानप्रत्ययविशेषोऽपि मा भूत्तदन्यवत्। तन्वनित्यत्वाभावेऽपि पदार्थे व्यवहर्तृसंकेतविशेषादिच्छाभिधानप्रत्ययविशेषदर्शनात् वस्तु-
स्वभावभेदाभिसम्बन्धः संकेतविशेषः सिद्धः, ततो वस्तुस्वभावभेदाभावे संकेतविशेषानुपपत्तिः, ततोऽभिधानप्रत्ययविशेषश्च न स्यात्
खमस्ति, खपुष्पं नास्तीति, तस्यानादिवासनोद्भूतविकल्पपरिनिष्ठितत्वात्, इति कश्चित्, सोऽप्यननुभूतवस्तुस्वभावः सम्यक्त्व सर्वार्थमपि-
पायम्प्रत्यक्षविषयप्रसिद्धेः, पदार्थस्य च सर्वस्य सर्वज्ञप्रत्यक्षत्वात्तच्छिन्नानभ्यासात् यथाच्छुन्नमाभावादभिधानप्रत्ययव्यवहारप्रसिद्धेः। कथमित्यथा-
र्थेऽनित्यत्वाभावेपीच्छाप्रत्यक्षत्वात्तच्छिन्नप्रमाणव्यवहर्तृसंकेतविशेषादिच्छाभिधानप्रत्ययविशेषसिद्धेर्वस्तुस्वभावभेदमभिसम्बन्ध एव संकेत-

र्धर्मिणि, यथा साधर्म्यं भेदविवक्षया हवकस्यादौ, विशेषणं चास्तित्वं, ततः प्रतिषेध्यधर्ममविषमपि इत्यनुमानमनवद्यमवतिष्ठते, हेतोरसिद्धताद्यनुपपत्तेः, साध्यसाधनधर्मविकल्पस्याभावाच्च निदर्शनस्य, प्रत्यक्षादिविरोधाभावाच्च पक्षस्येति भविपत्तव्यम् ॥ १७ ॥

अथ प्रकृतं–'अस्तित्वमिति' (२१२ १ ३) अस्तित्वं प्रतिषेध्येन नास्तित्वेन, एकधर्मिण्यविनाभावीति साध्यम्, एककालेऽविनाभावेन सिद्धसाधनवारणार्थमेकधर्मिणीति, विशेषणत्वादिति (२) हेतुः। अस्तित्वनास्तित्वोभयघटितधर्मिविशे षणत्वादित्यर्थः। अन्यथा नीलत्वाद्युत्पलादिविशेषणे चैतन्ये च जीवविशेषणेऽनीलाचैतन्याविनाभावस्य धर्मिण्यप्रसिद्ध्या लोक रूपया व्यभिचारस्य साध्यस्वात्मरूपेण तदविनाभावस्य च साध्यसमत्वादिति ध्रष्टव्यम्। यत् स्वस्वेतरयदुभयघटितयद्धर्मिविशे षणं तत्र तेनाविनाभावि, यथान्वयव्यतिरेकव्याप्तिद्वयघटितव्याप्यविशेषणमन्वयव्याप्तिरूपं साधर्म्यं व्यतिरेकव्याप्तिरूपवैध र्म्येणाविनाभावीति, दृष्टान्तप्रदर्शनम्, भेदविवक्षयेति साधर्म्योपन्यासनियमार्थम्, बहिर्व्याप्तिरूपमेदविवक्षया हि साधर्म्यमुप न्यस्यते, अन्तर्व्याप्तिरूपाभेदविवक्षया तु वैधर्म्यमिति, साध्ये व्यतिरेकोऽस्त्येवेति (२१३–१–७) तथा चैतन्मते केवलान्वयी नास्त्येवेति भावः। 'सर्थैवेति' (१२) अप्रमेयत्वव्यवहारस्य प्रमाणसन्यज्ञानविषयत्वरूपप्रमेयत्वासाधकत्वादेवेत्यर्थः, न च व्यव हारेण मेयत्वसिद्धौ प्रमेयत्वसिद्धिर्मोघ्यम्, एतन्मते मेयत्वस्य प्रमेयत्वाव्याप्यत्वात्। अनादिविपरीतवासनाजन्यविकल्पविषये व्यभिचारादिति, सन्तः खपुष्पादयो व्यवहृतेरस्तिति (२१३–२–३) खपुष्पादिषु सत्त्वव्यवहारः प्रसज्येतेति भावः। विप्रतिषिद्धमेतदिति (४) साध्यप्रतीके किमित्याकाङ्क्षायामाह वृत्ति कृत् खपुष्पादीनां प्रमेयत्वमिति(४) खपुष्पं प्रमेयं चेति वचनं परस्परविरुद्धमित्यर्थः। कस्मादित्याह–प्रमाणद्वयनियमविरोधादिति (५) तर्हि प्रमाणान्तरेण तेषु प्रमेयत्वं

सेत्स्यतीत्याशङ्कायामाह—'न चेत्यादि' (५) न चात्यन्तासत्यपीत्यादिग्रन्थोक्तरीत्या खपुष्पाद्यसत्त्वादिना शाब्दप्रमावि
षयत्वाविरोधः, अवस्तुनि तत्सम्बन्धायोगात्, खपुष्पमसदित्यादेर्वाक्याच्छाब्दानिकसम्बन्धेन कथञ्चिद्विशिष्टे वैशिष्ट्यमिति रीत्या
बोधोपपत्तावपि तस्याभयाभयविभावसम्बन्धेन भ्रमत्वधौव्यात् भ्रमस्य च वस्त्वसाधकत्वात्, वस्तुतः स्वरूपस्याभाववत् पुष्प
मित्येव तथास्त्वयीति भावः। आकाशाद्यात्मकस्वरूपं खपुष्पाद्यभाव इति न प्रतियोगिनः प्रमेयत्वव्याघात इति सौगतमत
माशङ्कते—'न च स्वलक्षणमेवेत्यादि' (२१२–२–६)॥ एकतानस्वासरूपयावेकाश्रयत्वासम्भवात्, तथा चास्य विकल्पस्य
पारम्पर्येणापि स्वलक्षणाविषयत्वान्न प्रामाण्यं प्रमाणं न वस्तुसिद्धिरित्युक्तं भवति, विधिनियमौ भावाभावौ, न्यमस्ति
तत्पूर्वं च नास्तीति (१२) निषेध्यप्रत्ययविशेषाकारप्रदर्शनम् 'तस्यानादीत्यादि' (१२) अनेन वस्तुस्वभावमेवनिबन्ध
नस्वनिषेधो दर्शितः। प्रधानगुणभावाविति (२१३–२–२) इन्द्रशब्दस्येन्द्रे प्रधानभावेन प्रवृत्तिरनिन्द्रे च गुणभावेनेत्यर्थः।
न चैवं सर्वत्र नानार्थत्वापत्तिः, इष्टत्वात्, व्यवहारविशेषस्य च क्षेत्रादिनियमितत्वेनानतिप्रसङ्गात्, अत एव न लक्षणोच्छेदः,
क्षेत्रादिनियमितलक्षणाभावे तदवकाशस्यापिरुद्धत्वादिति द्रष्टव्यम्॥ पररूपाणीति (२१४–१–३) पररूपाभावकानीत्यर्थः।
तेन पररूपावच्छिन्नाभावप्रयुक्तविकल्पसम्बन्धावच्छिन्नप्रतियोगिताकाभावा अपि सङ्गृहीता भवन्ति। स्वभावभेदा ( ४ )
इति भावरूपभावस्य समावस्थायस्य च प्रतियोगितावच्छेदकरूपसम्बन्धादिभेदेन भिन्नत्वादित्यर्थः, यत्तु पररूपावच्छिन्नाभावो
व्यधिकरणसम्बन्धावच्छिन्नाभावनैव गतार्थ इति भवषेयमतस्, तद्भ्रमतार्थमेव, विनिगमकाभावात्मसीवितत्कल्पनाभ्रमकल्पनाया
उभयत्र तौल्यात्, भूतले घटत्वेन पटो नास्ति न तु पट इत्यस्यायोग्यतापत्तेश्च, घटस्यापि घटत्वसम्बन्धेन तदभावाभावेरि

स्थिरैक सत्तायाम् । अधिकरणस्वरूपाभावैकान्तवादं सौगतस्य निरस्यति–'स्वलक्षणमेवेत्यादि' (४) तस्यान्यापोहस्य, तस्य रूपान्तरापेक्षत्वात् (४) तस्य रूपान्तरनिरूपणाधीननिरूपणत्वात्, तथा च सापेक्षनिरपेक्षत्वाभ्यां भेद आवश्यक इति भावः । तस्य रूपान्तराणां वस्तुस्वभावाभेदकत्वे क्षणिकत्वसाधकमूलयुक्तिविरोध इत्याह–यदीत्यादिना (५) कारणानि (७) सहकारिकारणानि, तत्तत्संनिधानात्मकानि (७) तत्तत्कार्योत्पादनस्वभावानि, इष्टापत्तिमाशङ्क्याह–'न चैवमिति' (९) अपि चमभित्यकारप्रश्लेषेण व्याख्येयम् 'स्वभावभेदस्येति' (१०) कुशूलनिहितबीजादङ्कुरो मुसबीजस्य क्षणिकत्वादिना भेदाभ्युपगमादित्यर्थः । प्रतियन्त्रमविनाभाव, वस्तुतः (११) परमार्थतः, भेद (११) स्वलक्षणं निरंशम्, न (२१४ १ १३) स्वलक्षणास्य भेदम्, तदनेकस्वभावाभावे (१३) तस्य वस्तुनोऽनेकस्वभावानभ्युपगमे, विनिर्भाससम्भवात् (१३) तस्य प्रतिनिर्भासवत्वात्, आत्मनि परत्र च (१३) विधौ प्रतिषेधे च, आदर्शयति (१४) संवृतिरिति शेषः। मुग्धायते (१४) इन्द्रजालायते, 'गुणानामिति' (२१४ २ २) गुणानां सत्त्वरजस्तमसाम्, सुमहदव्यापकं साम्यावस्थारूपम्, रूप न दृष्टिपथमृच्छति, (२) न दर्शनकर्मी भवति, तदव्याप्तचक्षुःसंयोगात्, यच दृष्टिपथप्राप्तं (२) ग्रामारामादि, तद्विकारित्वान्मायेवेन्द्रजालमिव, सुतुच्छक वाऽ मिथ्येति सांख्यमते व्याख्यानम्, वेदान्तिमते तु गुणानां नामरूपाख्यानाम्, सुमहत् तत्त्वाधिष्ठानत्वेन महत्तरम्, रूपमस्तित्वमात्रमानत्वप्रियत्वोपलक्षितमखण्डं ब्रह्म, न दृश्यतामायाति, पृथिव्याप्यत्वेऽपि तस्य फलाव्याप्यत्वादिति व्याख्येयं पूर्वार्द्धम्, उत्तरार्द्धं प्राग्वत् । आराम (२१४–२–३) भेदप्रपञ्चम्, तम् (३) अखण्डं पुण्यम्, व्यवहारनिर्भासान् (४) व्यवहारनिपातकान् भेदान्, व्यवस्थापयति (५) विरुद्धत्वेनावसादयति निराकरोतीत्यर्थः,

तामन्तरेण (५) अनेकरूपतां विना, सामान्यादिरूपप्रकारनिर्भासभूतः संवृतेरनुपपत्तेरिति योजनीयम्। संवृतेरनेकात्म-कत्वेऽभ्युपगते तद्दृष्टान्तेन भावानां स्वनिवारितमेवेत्याह—संवृतिरिति (५)॥ अशक्तेरिति, (७) अर्थक्रियाकारित्वे संवृते-र्मिथ्यात्वेनानेकसमानार्थतुल्योऽन्यतया दुर्वचत्वादिति भावः। प्रमेयाः स्युः (७) इत्यनन्तरमभावस्येनेति शेषः। एतदन्यतः (७) एतस्मादन्यतः, निर्णयस्याप्यात्मकस्येति (८) अतद्व्यावृत्त्यनवगाहितयाऽध्यवसायात्मन इत्यर्थः। निर्णयस्य (८) दर्शनोत्तरभाविनो विकल्पस्य ॥१७॥

भवतु तावदस्तित्वं जीवादौ नास्तित्वेनाविनाभावि। नास्तित्वं तु कथमस्तित्वाविनाभावि, खपुष्पादौ कथंचिदप्यस्तित्वासंभवा-दिति मन्यमानान्प्रत्याहुः।

**नास्तित्वं प्रतिषेध्येनाविनाभाव्येकधर्मिणि। विशेषणत्वाद्वैधर्म्यं यथाऽभेदविवक्षया ॥ १८ ॥**

कृतकत्वादौ हेतौ ह्यनित्यत्वादौ साधने सपक्षेण साधर्म्येणाविनाभावि विशेषणं विपक्षे वैधर्म्यमुदाहरणं प्रसिद्धं तावदत्र जीवादावेकधर्मिणि पररूपादिभिर्नास्तित्वं स्वरूपादिभिरस्तित्वेनाविनाभावि साधयत्येव, विशेषणत्वसाधनस्यानवद्यत्वात्, पक्षीकृते नास्तित्वे विशेषणत्वस्य भावादसिद्धत्वाभावात्, विपक्षे च स्वप्रतिषेध्याविनाभावरहिते क्वचिदप्यभावात् तथा तस्य विशेषणत्वानुपपत्तेरित्यसिद्धवि-रुद्धानैकान्तिकत्वदोषाभावात्, दृष्टान्तस्य च साध्यसाधनवैकल्यादिदोषासंभवात्, साधर्म्यस्येव हेतौ भेदविवक्षया, वैधर्म्यस्याभेदवि-वक्षयाऽविनाभावित्वनिश्चयात्, तत्र भेदविवक्षाभेदविवक्षयोः परमार्थसद्वस्तुनिबन्धनत्वात्। भेदाभेदविवक्षयोरवस्तुनिबन्धनत्वे विपर्यासोऽपि किं न स्यात्? अनित्यत्वसाधने कृतकत्वादिहेतौ पक्षादिभिर्भेदविवक्षा गगनादिभिरभेदविवक्षा हि विपर्यासः। स च

परैरेष्यते एव। तदिहो स्वकनित्यत्वसाधमारेवयोर्विपर्यासः स्यात्, विरुद्धत्वोपपत्तेः। सोयं द्रव्यस्यार्थः साधमस्यापि विवक्षत्वमुपपर्यस्यत्र भेदाभेदविषयोर्विपक्षेतरापेक्षयोर्वस्तुनिबन्धनत्वमुपगन्तुमर्हति। ततः समञ्जसमेतत्, यत्किञ्चिद्विशेषणं तत्सर्वमेकत्र प्रतिपक्षधर्मोविना भावि, यथा वैधर्म्यमभेदविवक्षया हेतौ, तथा च नास्तित्वं विशेषणमित्यनुमानम्, साध्यसद्भावे एव साधनस्य सद्भावनियमात्, अन्यथा व्यवहारसंकरप्रसङ्गात्, करभत्वस्य करभवदध्न्यपि सद्भावानुषङ्गात्, दधित्वस्य च दधीव करभेपि प्रसक्तेः। दधि खादेति चोदितः करभमभिधावेत्, करभाद्य दध्न्यपि नाभिधावेत्, अदधित्वस्याकरभत्वस्य च क्वचिदभावात्। इति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः संकीर्येत, सर्वस्य सर्वथा सद्भावात्। यदि पुनर्दधनि स्वरूपेण दधित्व, न करभरूपेण, करभे च स्वरूपेण करभत्वं, न दधिरूपेण, तत एव प्रवृत्त्यादिव्यवहारसंकरः प्रसज्यतेति मतम्, तदा सिद्धं दधित्वमदधित्वेन प्रतिषेध्येनाविनाभावि, करभत्वं चाकरभत्वाविनाभावि, तद्वत् सर्वं विशेषणं स्वप्रतिषेध्येनाविनाभावि इति सिद्धान्ताऽनुपपत्तिः, विपक्षे बाधकसद्भावात्। न हि स्वेच्छाप्रकल्पितधर्मधर्मिण्यव स्थायी परमार्थावतारः स्यात् यतः सर्वं एवायमनुमानानुमेयव्यवहारो बुद्ध्यारूढेन धर्मधर्मिन्यायेन बहिः सदसत्त्वमपेक्षते इति युक्तं भवेत्। तत्समीक्षिततत्त्वार्थैर्लोकप्रतीतिवशाद्भेदाभेदव्यवस्थितिस्तत्त्वप्रतिपत्तये समाश्रीयते इति प्राभाकरमिश्रापकल्पम्, मावस्वभावोपरोधात्सर्वत्र भेदाभेदव्यवस्थितेः, अन्यथा तत्त्वप्रतिपत्तेरयोगात्।

नास्तित्वमित्यादिकारिका (२१६-२-८) प्रागवृत्त्याऽध्येया, अभेदविवक्षया (८) अन्वयविवक्षया, व्यतिरेकव्याप्तिर्यथे त्रान्वयव्याप्त्यविनाभाविनी तथा नास्तित्वमस्तित्वेनेत्यर्थः। विपक्षेतरापेक्षयो (२१७-१ २) र्वस्तुसद्भेदाभेदापेक्षयोरित्यर्थः। हेतावपीति (३) साधर्म्येणाविनाभावीति शेषः। तथा च नास्तित्वं विशेषणमित्यस्तित्वेनाविनाभावीत्यर्थः, स्वरूपेणास्ति

१

त्वस्य पररूपेण नास्तित्वाविनाभावव्यतिरेके बाधकमाह अन्यथेत्यादि (२१७-१-३) 'सदा सिद्धमिति' (७) ननु कथमेवम्, यावता प्रवृत्तिविषयेऽनिष्टतावच्छेदकरूपावच्छिन्नज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वात्करभत्वाभावो दधि प्रवृत्त्यङ्गत्वयोपयुज्यताम्, न तु करभरूपेण दधित्वाभाव इति चेत्, न, अनिष्टतावच्छेदकरूपसांकर्यज्ञानस्यापि प्रवृत्तिप्रतिबन्धकत्वेन करभरूपेणादधित्वस्यापि दधि प्रवृत्त्यङ्गतया न्यायप्राप्तत्वात्, ननु च हेतोरन्यथानुपपत्तिसिद्धावपि धर्मधर्मिव्यवस्थायाः कल्पितत्वादनुमानस्यापि कल्पितत्वेन कथं सामञ्जस्यं स्यादित्याशङ्कायामाह 'स्याद्वादसिद्धान्ती भाष्ये, न हि स्वेच्छेत्यादि' (८) तथा च सर्वसिद्धस्याद्धर्मधर्मिभावो नाप्रामाणिक इति भावः। तदाह—यत इत्यादि (९), बुद्ध्यारूढेन (९) कल्पितेन, यदि सदसत्त्व (९) इत्यत्र स्वलक्षणा पव्यादिरूपम्, तदेवं परेषां भेदाभेदादिविरस्करणं शास्त्रोक्तितुल्यमित्याह भाष्यकृत् तत्समीक्षितेत्यादि (१०)॥ १८ ॥

ननु चास्तित्वं नास्तित्वं च विशेषणमेव न तु विशेष्यम्। ततो न साध्यसाधनधर्मयोः परमार्थसतोरधिकरणम्, येन प्रकृतमनुमानद्वयं वास्तवं धर्मधर्मिन्यायेन स्यादित्येके। न तत्सर्वथाभिलाप्यम्, वस्तुरूपस्यानभिलाप्यत्वादिति चान्ये। जीवादेर्वस्तुनोऽत्यन्तमर्थान्तरमेव तत् प्रतिभासभेदाद्घटपटवत्। न पुनरस्तित्वनास्तित्वात्मकं वस्तु, धर्मधर्मिसंकरप्रसङ्गादिति चापरे। तत्रत्याचार्याः प्राहुः।

**विधेयप्रतिषेध्यात्मा विशेष्यः शब्दगोचरः । साध्यधर्मो यथा हेतुरहेतुश्चाप्यपेक्षया ॥ १९ ॥**

विधेयमस्तित्वम्। प्रतिषेध्यं नास्तित्वम्। विधेयं च प्रतिषेध्यं च विधेयप्रतिषेध्ये। ते आत्मानौ स्वभावौ यस्य स विधेयप्रतिषेध्यात्मा, अर्थः सर्वो जीवादिरिति पक्षः। विशेष्यत्वादिति हेतुः विशेष्य इति हेतुनिर्देशात्, इष्टको राजमाना न मद्यपीता इति यथा।

साध्यो धर्मी, साध्यधर्माधारतया तस्य साध्यव्यपदेशात्, तथोपचारस्य दृष्टान्तधर्मिव्यवच्छेदार्थत्वात्। तस्य धर्मो विवादे ऽस्तित्व-
प्रत्यादिः। स यथा हेतुरनित्यत्वसाध्यापेक्षया, नित्यत्वसाध्यापेक्षया ऽहेतुश्च, गमकत्वागमकत्वयोगात्, तथा साध्याविनाभावेतरसम्भ-
वादिति द्रष्टव्यम्। इत्यनुमानात्स्वेतरात्मकः कश्चिज्जीवाद्यर्थः सिद्धस्येव। हेतोर्विशेष्यत्वस्यासिद्धिरिति चेत् न, विशेष्योऽसौ, शब्द-
गोचरत्वात् घटादिवदनुमानात्तस्य विशेष्यत्वहेतोः साधनात्। शब्दगोचरत्वमसिद्धमर्थस्येति चेत्, न, शब्दगोचरो जीवादि, विशेष्यत्वा-
द्घटादिरित्यनुमानात्तस्य साधनात्। न चैवमितरेतराश्रयदोषः, सर्वथानभिलाप्यवस्तुवादिनः प्रति शब्दगोचरत्वे साध्ये विशेष्यत्वस्य हेतु-
त्ववचनात्, सर्वथा ऽविशेष्यत्ववादिनः प्रति शब्दगोचरत्वस्य साधनत्वाभिधानात्, तदुभयासत्त्ववादिनस्तु प्रति वस्तुत्वस्योभय-
प्रसिद्धस्य हेतोः सामर्थ्यतः प्रयोगात्। विधेयप्रतिषेध्यात्मकत्वस्यापि तान्प्रति तत एव सिद्धिः। इति समासतः कारिकार्थः समवतिष्ठते। ननु
च प्रत्यक्षबुद्धौ वस्तु स्वलक्षणमेव प्रतिभाति, न पुनरस्तित्वादिविशेषणम्, तस्य सकलविकल्पविकलत्वात्, विकल्पबुद्धौ तद्व्यवहारप्रसिद्धे-
रिति चेत्, न, वस्तुनोऽस्तित्वाद्यनेकविकल्पात्मकस्य साक्षात्प्रतीतेः। किञ्चित्केनचिद्विशिष्टं गृह्यमाणं विशेषणविशेष्यतत्सम्बन्धलोकस्थि-
तिसंकलनेन गृह्येत नान्यथेत्यभिनिवेशेऽपि वस्तुनो विधिप्रतिषेधस्वभावयोः प्रत्येकं दर्शनमवश्यंभावि, वस्तुन एव दर्शने, न तद्विधि-
प्रतिषेधस्वभावयोर्विशेषणयोरिति वक्तुमशक्यम्, सदसत्त्वस्वभावशून्यस्य स्वलक्षणस्य दर्शने तत्पृष्ठभाविविकल्पेनापि सदसत्त्वयोरध्यव-
सायायोगात्, पीतदर्शनपृष्ठभाविना विकल्पेन नीलस्याध्यवसायायोगवत्। ततो विधिप्रतिषेधात्मानौ विषयस्य सविकल्पकस्य सम-
मतौ, सर्वथा तस्य भेदाभावे सदिदमसदिदमिति प्रत्येकं दर्शनाभावानुषङ्गात्, तदनुपलम्भे नेदमिति विकल्पोत्पत्तिविरोधात्। ततः
सामान्यविशेषात्मकं वस्तु स्वलक्षणं, न पुनः सकलविकल्पातीतं विशेषमात्रं सामान्यमात्रं वा परस्परनिरपेक्षं, तदुभयं वा स्वलक्षणं,

तस्य तेन रूपेणाव्यवस्थितत्वात् सामान्यविशेषात्मन एव जात्यन्तरस्य वस्तुस्वरूपत्वात्, तेनैव कथ्यमानस्य स्वलक्षणत्वप्रसिद्धेः, सकलबाधकवैधुर्यात्। कः पुनर्विशेषणविशेष्ययोर्धर्मी स्यादाश्रयभूतः कश्च तयोस्तेन संबन्धो येन विशेषणविशेष्यभावः स्यादिति चेत्, उच्यते। अस्तित्वनास्तित्वयोर्धर्मी सामान्यम्। तत्र तादात्म्यलक्षणः संबन्धः, संबन्धान्तरकल्पनायामनवस्थाप्रसङ्गात्। तदेतत्सारं, नास्त्यादिमतामेवास्य संभवत्येवेति, तदभावे तथासंभवात् विशेष्यविशिष्टवस्तुग्रहणस्य, विशेषणं सत्त्वादिसामान्यं पूर्वं गृहीत्वा तदनन्तरं विशेष्यं गृह्णाति तदुभयसंबन्धं समवायं लोकस्थितिं च विशेषणविशेष्यव्यवहारनिबन्धनां, तदसत्संकल्पनेन सर्वं वस्तु इति प्रतीतिक्रमस्यैव दुर्घटत्वात्, विशेषणविशेष्यात्मकस्य सामान्यविशेषरूपस्य वस्तुनो जात्यन्तरस्य यथाक्षयोपशमं प्रत्यक्षे परोक्षे च विज्ञाने निर्बाधमनुभवाद्विपरीतस्य चाप्रतिपत्तेः। तथा सति नैकान्तेन दर्शनविकल्पाभिधानानां विषयभेदोऽस्ति कथंचित् विभासभेदेऽपि प्रभासभेदवत्पुरुषदर्शनवत्, प्रतिभासभेदाद्विषयभेदे योगीतरप्रत्यक्षयोरेकविषययोरपि भिन्नविषयत्वप्रसङ्गात्। एतेन धूमादिकृतकत्वादिसाध्यधर्मिधर्मस्य साध्येतरापेक्षया हेतुत्वाहेतुत्वविशेषणात्मकस्य निर्धर्मतयोपन्यस्तस्य प्रत्यक्षविषयत्वं निवेदितम्। यथा हि। धूमादयः कृतकत्वादयो वा कथंचिद्भिन्नाभिन्नयोर्विनाशेतरयोर्वा साधनेतरस्वभावाभ्यां साक्षात्क्रियेरन्, इतरथा विशेष्यप्रतिपत्ते नाम, नापि कृतकत्वादीनां विनश्वरत्वे साध्ये साधनत्वं सत्त्विनश्वरत्वसाधनत्वं च विशेषणमप्रतिपद्यमानो विशेष्यान्धूमादीन् प्रतिपत्सेद्धुमीशो यतोऽन्यादिविनश्वरत्वप्रादीन् साध्यानपि विशेष्यान्प्रतिपद्येत, प्रत्येति च तान् ततोऽवसर्वं साधारणमिति तदेतून् साध्येतरापेक्षायां सत्यां साधनेतरस्वभावाभ्यां तत्साक्षात्करणे विरोधाभावात्। अनपेक्षायां तु विरोधः स्वभिरेकत्र साध्ये हेतूनां

साधनस्येतरयोरनुपलम्भात्। यतश्चैव प्रसिद्धमुदाहरणं, वादिप्रतिवादिनोर्बुद्धिसाम्यात्, तस्मात्तदभिधेयं तद्विशेष्यम्, यथोत्पत्त्यादिर पेक्षया हेतुरहेतुश्च साध्येतरयोः, तथा च विमत्यधिकरणं सत्त्वाभिधेयत्वादि, तस्मात्साध्यसाधनधर्मविशेषणापेक्षया विशेष्यम्। इत्यनुमानारेकस्य विशेषणविशेष्यात्मकत्वविरोधनिरासः। यद्वा विशेष्यं तदभिलाप्यं, यथोत्पत्त्यादि, विशेष्यं चास्तित्वादिवस्तुरूपं, तस्मादभिलाप्यम्, इति वस्तुस्वरूपस्यानभिलाप्यत्वव्युदासः। यद्वा यत्तु वस्तुसर्वं विधेयप्रतिषेध्यात्मकं, यथोत्पत्त्यादिरपेक्षया हेतुरहेतुश्च साध्येतरयोः, तथा च विमत्यधिकरणं सत्त्वाभिधेयत्वादि। इत्यन्त्यदीपकं सर्वत्र योज्यं साधनं, यत्तु च जीवादि, तस्माद्विधेयप्रतिषे ध्यात्मकम्। इति स्याद्वादितत्त्वस्योभयात्मकत्वसाधनम् ॥ १९ ॥

माध्यसाधनधर्मयोः (२१७-२९) प्रतिषेध्याविनाभावित्वविशेषणत्वयोः, प्रकृत (९) पूर्वकारिकाद्वयप्रोक्तम्, द्वितीये तत्(१०) विशेष्यं, तृतीये तत्(११) अस्तित्वं नास्तित्वं च। हेतुनिर्देशादिति, (१४) हेतुगर्भविशेषणनिर्देशादित्यर्थः। तत्र दृष्टान्तमाह–गुरव (१४) इत्यादि, तत्रापि हि गुरव इति हेतुगर्भविशेषणमहिम्नैव गुरुत्वात्तदाज्ञा न मथनीया इति लभ्यते, तद्वत् प्रकृते विशेष्य इति हेतुगर्भो विशेषणनिर्देशो द्रष्टव्य इत्यर्थः। साध्यस्याग्न्यादेर्धर्मत्वं हेतोर्धूमादेर्दृष्टमिति प्रसिद्धार्थधाराद्विशेष परतया व्याचष्टे साध्यो धर्मीत्यादिना, (२१८ ११) धर्मी पक्षः पर्वतादिर्जीवादिर्वा। गमकत्वागमकत्वयोगादिति, (२) यथाऽनित्यत्वसाध्यापेक्षयोत्पत्तिमत्त्वं गमकत्वाद्धेतुर्नित्यत्वसाध्यापेक्षया चागमकत्वादहेतुस्तथा जीवादेर्दृष्टान्तीभूतस्यापेक्षया सत्त्वेतरात्मकत्वं सिद्ध्यतीति समुदायार्थः। अथ किमगमकत्वमहेतोः, न पक्षे साध्यप्रत्ययाजनकत्वम्, अहेतुनापि हेतुत्वेन ज्ञानद् धारां पक्षे साध्यभ्रमजननात्, अव्याप्यपक्षधर्मादिना व्याप्यपक्षधर्मत्वादिना ज्ञातेन वस्तुतः साध्यप्रत्ययावगाहितया क्वचित्

साध्यप्रमाया अपि जननाच्, कदाचित्तज्जनकत्वस्य सद्धेतावपि सत्त्वात्, न चैतत्काले साध्यविशिष्टपक्षज्ञानाजनकत्वं तत्, न हि तुल्यबलज्ञानकाले पक्षे भ्रमरूपाप्यनुमितिरिति वाच्यम्, सत्प्रतिपक्षस्थानकाले पक्षे साध्यविशिष्टप्रत्ययाजनकत्वमस्तीत्यनन्तरमसत्प्रतिपक्षदशायामपि हेतोरगमकत्वप्रसङ्गात्, तुल्यबलत्वस्यागमकत्वतुल्ययोगक्षेमत्वाच्च, नाप्येतत्कालीनैतत्पक्षीयत्वावच्छिन्नप्रतियोगिकैतत्साध्यप्रमाकरणत्वाभावस्तत्, एतत्कालीनत्वैतत्पक्षीयत्वयोर्व्यधिकरणयोरेव प्रतियोगितावच्छेदकत्वाच्च न विशिष्टप्रतियोग्यप्रसिद्धिरिति वाच्यम्, सद्धेतोरेव कदाचित्तादृशप्रमाकरणत्वाभावेनागमकत्वापत्तेः, नाप्यनुमितिहेतुभूताभावप्रतियोगिज्ञानविषयत्वं तत्, सद्धेतावपि कदाचिद् व्यभिचारित्वादिज्ञानस्यानुमितिप्रतिबन्धकस्य सम्भवात्, नाप्यनुमितिप्रतिबन्धकप्रमाविषयत्वं तत्, सद्धेतौ च व्यभिचारादिभ्रमस्य प्रतिबन्धकस्याभावादव्याप्तिरिति वाच्यम्, सत्प्रतिपक्षयोर्विरुद्धयोर्वास्तवतुल्यबलत्वाभावेन तत्र भ्रमस्याप्रतिबन्धकत्वात्, नापि समीचीनसाध्यपक्षविषयानुमित्यजनकत्वं तत्, बाधविरुद्धासिद्धेषु साध्यानधिकरणे पक्षे सत्यसाध्यप्रतीत्यसिद्धेः, वह्निमति बाष्पे धूमभ्रमादनुमितेः सत्यत्वाच्च, न चान्य एव वह्निस्तत्र भासते, मानाभावात्, तद्वह्नेरेव प्रत्यभिज्ञानात्, एकव्यक्तिके तदभावाच्च, न च साऽनुमितिर्लिङ्गविषयत्वेन भ्रमः, अनुमितौ नियमतो लिङ्गभाने मानाभावात्, अथ यथा धूमलिङ्गे वह्निव्याप्यत्वमेव प्रतीयते तथा वह्नौ धूमलिङ्गव्यापकत्वमेवेत्यपीति साऽनुमितिरसत्येति चेत्, न, धूमलिङ्गस्यानुमितौ साध्यप्रकारकत्वेन तदभेदस्यासंसर्गत्वात्, वह्निव्याप्यालोके धूमारोपात्तत्रानुमितिस्तत्रासिद्धमेदेऽसत्यत्वाभावापत्तेश्च, आलोकव्यापके धूमव्यापकत्वमेवसाम्राज्यात्, एतेन परामृश्यमानलिङ्गव्यापकताभिमतीयत्वविशिष्टसंसर्गेण साध्यस्यानुमितौ भानाभ्युपगमेऽपि न क्षतिः। लिङ्गोपरिस्थितेनिश्चीयमानत्वेऽपि च दैवात्तत्र धूमसत्त्वे कथं तदंशेऽप्यप्रमत्वता, अत एवार्धेऽन्वय-

प्रमवनबेरेव धूमव्यापकत्वाधद्रूपेण वह्रेरनुमितौ मानाभ्युपगमेऽपि न कूटलिङ्गजानुमितेरसत्यत्वम्, दैवात्तत्र धूमसत्त्वेन सत्य-
त्वादिति चेत्, अत्र वदन्ति, स्वज्ञानदशायां पक्षे साध्यप्रत्ययाजनकत्वमगमकत्वम्, भवति हि विरुद्धत्वादिज्ञानकालीनं लिङ्ग
पक्षे साध्यप्रत्ययाजनकम्, विरुद्धत्वादीति पक्षविशेषणमहिम्ना तद्दशायां पक्षे साध्यप्रत्ययाजनकत्वसिद्धिः, साध्यप्रत्ययाजनकत्व
साध्यप्रत्ययजनकतावच्छेदकरूपविरहः, स च कदाचित् सत्प्रतिपक्षोत्तीर्णेऽपीति स्वज्ञानकालीनत्वं विशेषणम्, स च न तादृशो
ऽन्यदा तज्ज्ञानरूपविशेषणाभावेन विशिष्टाभावात्, स्वज्ञानकालस्य पक्षतावच्छेदकत्वेन साध्यमप्यप्रवेशाद्विरुद्धत्वादेः स्वज्ञा
नविरहकाले विशिष्टाभावाच्च व्यभिचारित्वम्, न च कदाचिदजनकत्वादेः केवलान्वयित्वमादाय व्यर्थविशेषणता, विपक्षितसा-
ध्यस्यासार्वत्रिकत्वात्, न च सर्वो वह्निव्याप्यवान् वह्निमान् तत्त्वादित्यनुमानेन स तदभाववान् मेयत्वादित्यादिना सत्प्र
तिपक्षेण सर्वस्यैव सत्प्रतिपक्षितत्वात्तस्य सार्वत्रिकत्वमेवेति वाच्यम्। सर्वत्र सर्वस्यैवमवतारामावात्। यत्राऽनुमितिप्रतिब न्ध
कतावच्छेदकरूपवत्त्व तत्, तद्वत्त्व च तद्वर्तमानत्वमतो न सत्प्रतिपक्षोत्तीर्णेऽतिप्रसङ्गः, तस्यासार्वत्रिकत्वाच्च न विरुद्धत्वादौ
व्यर्थविशेषणता, तच्च रूपं ज्ञाने विषयतयाऽनैकान्तिकत्वादिकमेवेत्यनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकरूपवत्त्वमगमकत्व
मिति पर्यवसितोऽर्थः, न च साध्याप्रसिद्ध्यव्यापकमिदमिति शङ्कनीयम्, स्वज्ञानदशायामिति वचनादेव तदसंभवत्वला
भात्, तस्याः शुद्धापार्थकमध्ये परिगणनेन हेत्वाभासेभ्यः पृथक्करणात्, नाय पन्थाः, एवं सति हेत्वाभासत्वमेवागमकत्व
मित्यस्य प्राप्तेः, सोपाधिकत्वादिना ज्ञातेऽगमकत्वव्यवहारानापत्तेः, किन्तु सर्वानुगतमखण्डमेव तत्, तथानैकान्तिकत्वादिना-
नुमीयते, सत्प्रतिपक्षविषये तदुत्तीर्णे च गमकागमकत्वसमावेशविरोधः स्याद्वादाभयणादेव निरसनीयः, अस्तु वा सत्प्रतिप

बोधीर्येऽप्यमकत्वस्य कालविशेषघटितस्वरूपसम्बन्धाभाव एव, घटानयनवाक्यार्थे भूतले घटाभावस्यैवेति युक्तम् ॥ अत्र चाहु-
र्दोषगमकत्वागमकत्वेन सदुत्तरत्वं, कालभेदेनां च स्वासाधकत्वासाधारण्येन परासाधकत्वासाधकतया स्वव्याघातकत्वादसदु-
त्तरत्वमिति विभागं वदन्ति तार्किकाः । न च विरुद्धत्वाविज्ञानादेव स्वानुमितेरिव परानुमितेरपि प्रतिबन्धे किमसाधकत्वानु-
मानेन, यद्यपि चाधुकदूषणावगतिः स विपरीत इति समयबन्धेन कथाप्रवृत्तौ हि दूषणमात्रमुद्भाव्यं, न त्वन्यत् साधनीय-
मर्थान्तरापत्तेरिति वाच्यम्, परेण चामनुमितिसाधनस्य प्रयोगः स्वसत्प्रतिपक्षेण स्थापनायामसाधकत्वसाधनेन च द्विधा
दूषणस्य व्यवस्थितेः, आद्यस्य दूषणमात्रभानादुपपत्तावपि द्वितीयस्य लिङ्गस्थापनं विनाऽसम्भवात्, यद्यप्यसाधकत्वानुमितिरना-
वश्यकी, तदभावेऽपि स्वपक्षसिद्धेस्तद्व्याघातकतया च परानुमितेः प्रतिबन्धकोपन्यास एवावश्यकः, तथापि दूषणस्य प्रकारा-
न्तरापेक्षायां कालिकस्तदुपन्यासः सामयिक इति निगर्वः । अथागमकत्वसाधने नियमतः पञ्चावयवप्रयोगापेक्षा स्यात्, अन्यथा
न्यूनत्वापत्तिरिति चेत्, न । दूषणस्यासाधकत्वव्याप्यत्वमङ्गीकृत्य कथेति तत्स्वधर्मतामात्रस्यैवोद्भाव्यत्वात्, अन्यथाऽऽकाङ्क्षि-
तविरोधिकमभिधानेनार्थान्तरापत्तेः । अथासाधकत्वव्याप्तिप्रतिसन्धानममकत्वेन तत्त्वम्, अनुमितिप्रतिबन्धकतावच्छेदकस्वरूप-
व्यत्वविषयस्यैव तत्र तन्त्रत्वात्, न चानुमितिप्रतिबन्धकतावच्छेदकमनुमित्यभावनियतं यज्ज्ञानं तत्त्वम्, तथा च यत्र विरुद्ध-
त्वाविज्ञानं तत्रानुमित्यभाव इति व्याप्तिज्ञानमौव्यमिति वाच्यम्, अनुमित्यभावस्यासाधकतारूपत्वाभावात्, अनुमित्यभावप्र-
योजकज्ञानविषयतावच्छेदकरूपस्यैव तथात्वव्याप्तेश्चाप्रतिसंहितत्वादिति चेत्, न । तद्रूपस्य विरुद्धत्वादिना सद्धारणीये-
ष्वेव व्याप्तिप्रतिसन्धानस्यामित्यत्र तात्पर्यात् । अत एव साध्यनियमे सत्यनुमित्साधीनतया पक्षतया तदनुमितिरिति प्रान्चिकाः ।

इत्येवं कृतकत्वेनानित्यत्वानुमानेऽपि व्याप्तिर्नाभिधेया, तस्या उभयसिद्धत्वादिति चेत्, न। कथादशायां समयबिषयतया एवोभयमकत्वाभ्यामुपस्थितिध्रौव्यात्, कृतकत्वेनानित्यत्वानुमाने तु तथानियमाभावात्तद्व्याप्तिमनङ्गीकृत्यापि कथासम्भवात्। यस्तु कथारम्भे साधकस्यासाधकत्वव्याप्तिं नाङ्गीकरोति, तं प्रति तद्भ्रमस्य प्रसाध्य पञ्चावयवप्रयोगः कर्त्तव्य एव। तद्व्याप्त्युपगमनियतसमयबन्धे तु न पञ्चावयवप्रयोगयावत्तामभ्रतीति। वयं तु ब्रूमः, साधकत्वेऽसाधकत्वेऽन्यत्र चास्मेये ऽवयवप्रयोगः प्रतिपाद्यानुसारेणैव विधेयः, अत एवैकावयवाद्या दशावयवान्ता अधन्यमध्यमोत्कृष्टभेदभिन्ना कथा प्रसिद्धा, तथा चास्माकमाकरग्रन्थः। "लिङ्गं केवलमेव यत्र कथयन्त्येषा जघन्या कथा, दृष्टान्तादीन् यत्र निषेधयन्त्यवयवानेषा भवेन्मध्यमा॥ उत्कृष्टा दशभिर्भवेदवयवैः सा जल्पितैवेत्यमी, जैनैरेव विलोकिताः कृतधियां वादे त्रय' सत्पथाः॥ १॥" इति। यदा हि प्रतिपाद्यः क्षयोपशमविशेषाभिर्णीतपक्षो गृहीतव्याप्तिकश्च भवति, तदा तं प्रति हेतुप्रतिपादनमेव कार्यं, धूमोऽत्र दृश्यत इति, यदा त्वस्य नाद्यापि पक्षनिर्णयस्तदा तं प्रति पक्षोऽपि प्रयुज्यतेऽग्निरत्र धूमान्यथानुपपत्तेरिति, यः प्रतिबन्धग्राहिप्रमाणस्य न स्मरति तं प्रति दृष्टान्तोऽप्युपदिश्यतेऽग्निरत्र धूमाद्, यत्र धूमस्तत्राग्निर्यथा महानस इति, दार्ष्टान्तिके हेतुं योजयितुमजानानं प्रत्युपनयः, एवमपि साकाङ्क्षं प्रति निगमनं, पक्षादिस्वरूपविप्रतिपन्नं प्रति पक्षशुद्ध्यादयश्चेति, तत्केयं प्रक्रियाऽसाधकत्वानुमाने यथा विप्रतिपत्त्यवयवप्रयोगोऽन्यत्र तु पञ्चावयवप्रयोग एवेति, प्रतिपाद्यानुरोधेनैकावयवप्रयोगस्यापि सम्भवात्, अवयवान्तरैकवाक्यत्वादेस्तत्रार्थिकस्यैव सम्भवात्, पञ्चावयवैकवाक्यताया अपि यथाकथञ्चिदेव दीधित्यादावुक्तत्वात्, अवयवप्रयोगे स्याद्वादस्यैवाश्रयणीयत्वात्, तदिदमाहु—'अन्यथानुपपत्त्येक—लक्षणं लिङ्ग-

भिप्पते। प्रयोगपरिपाटी तु, प्रतिपाद्यानुसारतः ॥ १ ॥" इति, समयत्र योऽपि प्रसिद्धाप्रसिद्धी एवानुरूपवीति शिवम् ॥ सद्देवमपेक्षया गमकागमकस्यैकस्य हेतुत्वाहेतुत्वव्यवहारपेक्षया सत्त्वेतरात्मकत्व निर्मूलम्। प्रकृतं प्रस्तुमः—तद्वयिति (२१८-१-५) हेतुवदित्यर्थः, वस्तुत्वस्योभयप्रसिद्धस्येति (६) विशेषणविशेष्यभावविपर्यासादुभयप्रसिद्धस्य वस्तुत्वस्य हेतोरित्यर्थः। सामर्थ्यतः (७) पक्षदृष्टान्तवचनमप्युक्ताक्षेपात्, तान् प्रति (७) तदुभयासत्त्ववादिनः प्रति, तत एव (७) जीवादयो विधेयप्रतिषेध्यात्मा वस्तुत्वादित्यनुमानादेवेत्यर्थः। विकल्पबुद्धौ (८) सविकल्पकज्ञाने, तद्रूप्यव्यवहारप्रसिद्धेः (८) व्यवहारोपयिकत्वाकारोपलम्भात्, सांशस्य (९) विधिनिषेधविशेषणविशिष्टस्य, सविकल्पकस्य साधयत इति (१२) ज्ञानमात्रस्य विधिनिषेधान्यतमविशिष्टविषयकत्वनियमादित्यर्थः, यस्य (१२) स्वलक्षणस्य, भेदाभावे (१२) विशेषणोपरागाभावे, सामान्यम् (२१८-२ ३) ऊर्ध्वतासामान्यं विशेषादेशे घटादिद्रव्यम्, एतत् (४) प्रत्यक्षेण ग्रहणम्, असम्भवादित्यस्य (४) ग्रहणस्येत्यनेनान्वयः। इति प्रतीतिक्रमस्यैवेति (६) सौगतप्रयुक्तस्येति मन्यम्, निर्बाधम् (७) इत्यनन्तरमाविव एवेति शेषः। तद्विपरीतस्य (७) विशेषणविशेष्यभावादिशून्यस्य, जातुचिदप्रतीतेरिति (७) निर्विकल्पकस्य निरासादित्यर्थः, येन च तत् स्वीक्रियते तस्य सविकल्पकोत्पत्तिकाले तदापत्तिर्दुर्निवारा, न च निर्विकल्पकत्वस्य कार्यतानवच्छेदकत्वादेवम्, तथाऽप्य वैवक्षाद् तदापत्तेः, निर्विकल्पके घटत्वपद् द्रव्यत्वपृथिवीत्वसत्त्वादीनामपि सम्भृतसामग्रीकतया भानाभ्युपगमे घटसविकल्पके नियमाद्यापद्धर्ममानापत्तेश्च, तदभिमतप्रकारकप्रत्यक्ष एव क्षयोपशमविशेषहेतुताकल्पने तु विशेषहेत्वभावादेव न निर्विकल्पकमिति दिग्। प्रत्यासन्नेतरपुरुषदर्शनवदिति, (८) अनेकपादप इति शेषः। एतेन (८) सामान्यविशेषात्मकवस्तुनः प्रत्यक्षस्-

प्रतिपादनेन, साध्यधर्मिधर्मस्य ( २१८–२–९ ) पक्षस्य, तस्मादिति (२१९–१–१) यदभिधेय तद्विशेष्यमित्यनया व्याप्त्या यथा जीवादेर्धर्मित्वं तथाऽस्तित्वादिविशेषणस्यापि तदापादितं योज्यम् । अन्तदीपकं ( ५ ) अन्तस्थं सर्वत्रान्वयं प्रकाशयतीति हेतोः, सर्वत्र योज्य साधनमिति (५) धर्मिणं विविच्येत्यर्थः, तथाहि-यदभिधेय तद्विशेष्यमित्यत्रास्तित्वं धर्मि, यद्वा विशेष्यं तदभिलाप्यमित्यत्राभिधेयं धर्मि, यद्वा वस्तु तत्सर्वं विधेयप्रतिषेध्यात्मकमित्यत्र विमत्याधिकरणस्याभिधेयत्वा दिशब्देन लब्धं जीवादीति, तेषु धर्मिष्वभिधेयत्वविशेष्यत्ववस्तुत्वहेतवो योजनीयाः । निगमयति वस्तु चेति (५) ॥ १९ ॥

शेषभङ्गाः कथं नेतव्याः सूरिभिरित्याहुः ।—

शेषभङ्गाश्च नेतव्या यथोक्तनययोगत । न च कश्चिद्विरोधोस्ति मुनीन्द्र ! तव शासने ॥ २० ॥

स्यादस्ति स्यान्नास्तीति भङ्गद्वयमुपयुक्तम् । तदपेक्षया शेषत्वं भङ्गत्रयापेक्ष वा । विधेयप्रतिषेध्यात्मेत्यनेन तृतीयभङ्गस्य स्वप्रति षेध्येनाविनाभाविनोऽसाधने साधने चापेक्ष्यमाणे इत्यर्थः । यथोक्तनययोगत इति विशेषणत्वादीनाक्षिपति । तदनभिलाप्यादयोपि कथि-ञ्चित्सिन्ति प्रत्यनीकस्वभावाविनाभाविनः प्रतीयन्ते, विशेषणत्वादिभ्यः । पूर्वोक्तमुदाहरणम् । यथैव हि वस्तुनोस्तित्वं नास्तित्व तदुभयं च प्रतिषेध्येन स्वप्रत्यनीकेनाविनाभावि विशेषणत्वाद्विशेष्यत्वाच्छब्दगोचरत्वाद्वस्तुत्वाच्च साधर्म्यवद्वैधर्म्यवत्कचिद्धेतौ हेतुत्वेतरत्वयच साध्यते, तथैव चाऽवक्तव्यत्वं वक्तव्यत्वेन प्राच्यभङ्गत्रयरूपेण, सदवक्तव्यत्वमसदवक्तव्यत्वेनासदवक्तव्यत्वमपि सदवक्तव्यत्वेन, सद सदवक्तव्यत्वमपि प्रथमपञ्चभङ्गात्मनानुभयावक्तव्यत्वेनाविनाभावि साधनीयम्, यथोक्तानां हेतूदाहरणरूपनयानां घटनात् । न चैवं सति किञ्चिद्विप्रतिषिद्धम्, धर्म्यवैव विरोधात् । अवक्तव्यत्वादेः स्वप्रत्यनीकस्वभावाविनाभावाभावप्रकारेणैव हि प्रत्यक्षादिविरोध सम्भव

यते यथा सकलमनुपलम्भात् । तदनेन "न च कश्चिद्विरोधोऽस्ति मुनीन्द्र तव शासने," अन्वयासमेभ्येव विरोधसाधनादिति व्याख्यातं प्रतिपत्तव्यम् ॥१०॥

असाधने साधने चापेक्ष्यमाण इत्यर्थ इति (२२२-१-९) विधेयप्रतिषेध्यासमकृतसाधनानपेक्षायां तृतीयादिभङ्ग-स्तोमस्य तदपेक्षायां च तुर्यादिभङ्गस्तोमस्य क्षेपत्वं विवक्षणीयमित्यर्थः । पूर्वोक्तमुदाहरणमिति ( १० ) साधर्म्यं यथा वैधर्म्येण वैधर्म्यं च साधर्म्येणाविनाभावीत्यर्थः, अनुभयावक्तव्यस्त्वेनेति (१२) उभयावक्तव्यत्वरूपसप्तमभङ्गार्थपर्युदास शालिनेत्यर्थः । हेतूदाहरणरूपनयानां (१३) हेतूदाहरणस्वरूपविमर्शिनाम् ॥ २० ॥

साम्प्रतमव्यवस्थितानेकान्तात्मकं वस्तु सप्तभङ्गीविधिभागेऽर्थक्रियाकारि न पुनरन्यथेति स्वपरपक्षसाधनदूषणवचनमुपसंहरन्तः प्राहुः ।—

एवं विधिनिषेधाभ्यामनवस्थितमर्थकृत् । नेति चेन्न यथा कार्यं बहिरन्तरुपाधिभिः ॥ २१ ॥

एवं प्रतिपादितनीत्या सप्तभङ्गीविधौ विधिनिषेधाभ्यामनवस्थितं जीवादि वस्तु सर्वथासदेव चेत्(न्न)वस्थितमर्थकृत् कार्यकारि प्रतिपत्तव्यम् । नेति चेदेवं वस्तु परैरभ्युपगम्यते तर्हि 'यथाभ्युपगतं कार्यं बहिरन्तरुपाधिभिः' सहकार्युपादानकारणैर्निर्वर्त्यं तथा न स्यात् भावाद्येकान्ते सर्वथा कार्यमविशेषात् । तत पर्वेमध्याख्यानान्तरमुपलक्ष्यते । एवं प्रतिपक्षप्रतिक्षेपप्रकारेण विधिनिषेधाभ्याम-नवस्थितं कर्यचिद्विधिप्रतिषेधावस्थितमेवार्थकृत् नेति चेन्न यथा कार्यं (च) बहिरन्ता स्याद्युपाधिभिरनन्तविशेषणैर्विशिष्टम्, सर्वथा भिन्नं वस्तुनि सकलविशेषणावस्थितेः । सत्त्वाद्यन्यतममात्रे एव भङ्गे समवस्थितं कुतो नार्थकृदिति चेत्, उच्यते सप्तभङ्गीविधौ स्याद्वादे

विधिप्रतिषेधात्मकं समारब्धं वस्तु उत्पादात्मकमर्थक्रियाकारि, कथंचित्तत एव सामग्रीसन्निपातिनः स्वभावातिशयोत्पत्तेः, सुवर्णस्येव केयूरादिसंस्थानम् । सुवर्णं हि सुवर्णत्वादिद्रव्यार्थादेशात् सदेव केयूरादिसंस्थानपर्यायार्थादेशादसदिति तथापरिणमनशक्तिलक्षणायाः प्रतिविशिष्टान्तःसामग्र्याः सुवर्णकारकव्यापारादिलक्षणायाश्च बहिःसामग्र्याः सन्निपाते केयूरादिसंस्थानात्मनोत्पद्यते तथा सदसदात्मकमेवार्थकृत् । तदनीत्यादिवस्तु प्रत्येयम् । नेति चेदित्यादिनैकान्तेऽर्थक्रियां प्रतिक्षिपति । न तावत्सतः पुनरुत्पत्तिरस्ति, तत्कारणापेक्षानुपरमप्रसङ्गात् । न चानुत्पन्नस्य स्थितिविपत्ती, सर्वथाप्यसत्त्वात्खपुष्पवत् । नाप्यसतः सर्वथोत्पत्त्यादयस्तद्वत् । तस्मान्न सदेकान्तेऽसदेकान्ते चार्थक्रिया संभवति । यदि पुनः सामग्र्याः प्रागविद्यमानस्य जन्म स्यात् को दोषः स्यात् ? तन्निरन्वयविनाशेतरपक्षयोस्तदेकान्ताभावः प्रसज्येत । तथा निरन्वयविनाशे निष्कारणस्य सर्वथोत्पत्तिर्न स्यात् । न हि निराधारोत्पत्तिर्विपत्तिर्वा, क्रियारूपत्वात्स्थितिवत् । नैतत्सारं 'नोत्पत्त्यादिः क्रिया, क्षणिकस्य तदसंभवात् । ततोऽसिद्धो हेतुः' इति, प्रत्यक्षादिविरोधात् । प्रत्यक्षादिविरोधस्तावत् प्रादुर्भावादिमत्पदार्थपरिच्छित्तौ प्रतिभासनात् तद्युक्तं प्रादुर्भावविनाशावस्थानक्रियारहितसत्तामात्रोपगमस्य बाधनात् । अन्यथा तद्विशिष्टविकल्पोऽपि मा भूत् । न हि दण्डपुरुषसंबन्धादर्शने दण्डीति विकल्पः स्यात् । तथाविधपूर्ववासनाप्रबोधात्प्रादुर्भावाद्यदर्शनेऽपि तद्विशिष्टविकल्प इति चेत्, न, नीलसुखादेरदर्शनेऽपि तद्विकल्पप्रसक्तेः, तद्व्यवस्थापनविरोधात् । निरालम्बनविज्ञानमात्रोपगमेऽपि संतानान्तरस्वसंतानपूर्वापरक्षणाज्ञानेऽपि तद्विकल्पोत्पत्तौ कुतस्तद्व्यवस्था ? संवेदनाद्वैतोपगमेऽपि संवित्प्रतिभासाभावेऽपि तद्वासनावशात्संवित्स्वरूपप्रतिभाससंभवात्कथं स्वरूपस्य स्वतो गतिः सिध्येत् ? तत एव संवित्स्वरूपस्य तथावासनाभ्यासेन स्वतो गतौ स्वसंतानपूर्वापरक्षणसंतानान्तरबहिरर्थजन्मादिक्रियाविशेषाणां सतामेव दर्शनात्तद्विकल्पोत्पत्तिर्युक्ता । इति नोत्पत्त्यादीनां क्रियात्वमसिद्धं, यतस्तानि

याधारत्वप्रतिषेधो न सिध्येत् । ततो न गगनस्योत्पत्तिः संभवति । निरन्वयप्रविनाशे गगनस्य उत्पत्तिरित्ययमपि पक्षो न क्षेमङ्करः, स्याद्वादाभ्युपगमसद्भावात्, असत्कार्यवादविरोधात् । तत्र सूक्तं 'यद्येकान्तेन सतस्तदसतो वा नोत्पत्तुमर्हति, व्योमवन्ध्यासुतवत्' इति । न ह्येकान्तेन सद्व्योमोत्पत्तये नाप्येकान्तेनासत् वन्ध्यासुत इति न साध्यसाधनविकलमुदाहरणम् । कथमिदानीमनुत्पन्नस्य गगनस्य स्थितिरिति चेत्, न अनभ्युपगमात् सर्वथा गगनानुत्पादस्य । केवलमिह व्योम्नो द्रव्यनयापेक्षया परमसिद्धा योदाहरणे प्रतिपादितम्, ततो न पूर्वापरविरोधः पूर्वं सर्वथानुत्पत्तिमतः स्थितिप्रतिषेधसाधनात्, द्रव्यतोऽनुत्पद्यमानस्यैव स्थितिप्रवदनात् । ततो यदर्थक्रियाकारि तद्विधिप्रतिषेधकल्पनोपकल्पितसप्तभङ्गीविधौ समारूढं विध्येकान्तवादी मानवस्थितं, तदर्थेकान्ते सर्वथार्थक्रियाविरोधादिति सूरिमतम् । नन्वेवं सुनयार्पितस्य विधेयस्य निषेधांशस्य चार्थक्रियाकारित्वे तेन व्यभिचारी हेतुः, तस्य सप्तभङ्गीविधावसमारूढत्वादन्यथानवस्थानात्, तस्यानर्थक्रियाकारित्वे सुनयस्यावस्तुविषयत्वप्रसक्तेः, वस्तुनोऽर्थक्रियाकारित्वादिति कश्चित्, तदयुक्तम्, सुनयार्पितस्यापि विधेरनिराकृतप्रतिषेधस्यार्थक्रियाकारित्वादन्यथा दुर्नयार्पितत्वापत्तेः । न चासौ सप्तभङ्गीविधावसमारूढः, भङ्गान्तराप्रतिक्षेपात् । तथा च मन्तव्या नाम, विधावपि विध्यन्तरादिविकल्पनाऽभावात् । केवलं विधिभङ्गे नास्तित्वादिभङ्गान्तरगुणीभावाद्विधिप्राधान्यम्, प्रतिषेधभङ्गे चास्तित्वादिभङ्गान्तरगुणीभावस्य प्रतिषेधप्रधानतेति प्रमाणार्पितप्रधानरूपाक्षेपभङ्गात्मकवस्तुवाक्यमात्रपदवाक्यस्य विशेषः प्रतिपादितप्राय एव । यदप्याह 'जीवादिवस्तुनि सत्त्वद्वारेण प्रथमभङ्गात्मप्रतिपत्तौ द्वितीयादिभङ्गानामानर्थक्यम्, असत्त्वादिधर्माणामपि तदात्मनां तत एव प्रतिपत्तेः अन्यथा तेषां वस्तुनोऽन्यत्वापत्तेः, विरुद्धधर्माध्यासात् घटपिशाचवत् । तथा च तस्येति व्यपदेशाभावः, संबन्धाभावात् । सत्त्वादिधर्माणां धर्मिणा सहोपकार्योपकारकभावे धर्मिणोपकारो धर्माणां धर्मैर्वा धर्मिणः स्यात् ?, प्रथमपक्षे किमेकया शक्त्या धर्मी

धर्मानुपकुरुतेऽनेकया वा ? यद्येकया स्वात्मनोनन्यया धर्मी धर्माननुपकुरुते, तदैकधर्मद्वारेण नानाधर्मोपकारनिमित्तभूतशक्त्यात्मनो धर्मिणः प्रतिपत्तौ तदुपकार्यस्य सकलधर्मकलापस्य प्रतिपत्तेः सकलग्रहः स्यात्, उपकार्याप्रतीतौ तदुपकारकाप्रतीत्ययोगात्। यदेनानेकया स्वात्मनो-ऽनन्यया शक्त्या धर्मी धर्मानुपकरोतीति पक्षान्तरमपि प्रतिक्षिप्तम्। धर्मी धर्मैरुपक्रियते इत्यस्मिन्नपि पक्षे किमेकोपकार्यशक्त्यात्माऽनेको-पकार्यशक्त्यात्मा वेति पक्षद्वितयमप्यनेनैव निरस्तम् सकलधर्मकलापस्योपकारकस्याप्रतिपत्तौ तदुपकार्यशक्त्यात्मनो धर्मिणः प्रतिपत्त्य-घटनात् सकलनिश्चयस्याविशेषात्। तदुक्तं 'नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे। सर्वात्मनोपकार्यस्य को भेदः स्यादनिश्चितः ॥१॥ एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे। दृष्टे यस्मिन्नदृष्टास्ते तद्ग्रहे सकलग्रहः ॥२॥" इति। यदि पुनर्धर्माणामुपकारिकाः शक्तय उप कार्याश्च धर्मिणो भिन्ना एव तदा ताभिस्तस्योपकारः क्रियते न वा तासां क्रियते न वेति पक्षद्वयम्। तत्र न तावदुत्तरः पक्षः, व्यपदेश विरोधात्। प्रथमपक्षे तु शक्तिभिः शक्तिमत उपकारेणार्थान्तरभूते स एव कृत स्यात्। तथा च न शक्तिमानसौ, तत्कार्यत्वात्। तदो-ऽर्थान्तरत्वेऽनवस्थाप्रसङ्गः, तद्व्यपदेशसिद्ध्यर्थमुपकारान्तरपरिकल्पनात्। शक्तिमता शक्तीनामुपकारे शक्त्यन्तराणां कल्पनेऽनवस्थैव। तदकल्पने प्राच्यशक्तीनामप्यव्यवस्थितिः। इति न शक्तिशक्तिमद्व्यवहारः सिध्येत्। तदप्युक्तं "धर्मोपकारशक्तीनां भेदे तास्तस्य किं यदि ?। नोपकारस्ततस्तासां तथा स्यादनवस्थितिः ॥३॥" इति ॥ २१ ॥ तदपि सर्वमपाकुर्वन्त्यः सूरयः प्राहुः ॥

अव्यवस्थितानेकान्तात्मकं ( २२२–२–७ ) परोक्तैकान्तव्यवस्थारहितम्, अव्यवस्थितपदस्यैकान्तव्यवस्थारहित त्वार्थत्वे तस्य कथञ्चिदवस्थितत्वाविनाभावित्वात्तल्लक्षणा यथागूरित्यत्रैवपर्युदासेन नञा कथञ्चिदवस्थितार्थपरतयापि व्याख्यानं घटत एवेत्याह तत्र प्रथमम् ( १२ ) इत्यादिना, एकान्तव्यवस्थायां कुतो नार्थक्रियाकारित्वमिति शङ्कते—सत्स्वात्यन्तमे

नमाद्योपगमेऽपि (२२३-१-११) योगाचाराभिमतबाह्यार्थनिरपेक्षसाकारज्ञानवादेऽपि, तद्विकल्पोत्पत्ताविति (१२), अनन्तरं स्वीक्रियमाणायामिति शेषः। कुतस्तद्व्यवस्था (१२) सन्तानान्तरस्वसन्तानपूर्वापरक्षणव्यवस्था, तदनुरोधेन तथा सत्त्वाङ्गीकारे चोत्पादादिविशिष्टज्ञानव्यवस्थानुरोधेनोत्पादादेरपि वास्तवस्य बलादेव सिद्ध्यति, संवेदनाद्वैतोपगमेऽपि (१२) माध्यमिकदृष्ट्या सन्तानान्तरस्वसन्तानाद्यन्तक्षणरहितमध्यमक्षणमात्रविश्रान्तज्ञानस्वीकारेऽपि, स्वतो गताविति, (१३) अभ्युपगम्यमानायामिति गम्यम्, निरन्वयमविनाश इति (२२३-२-१) सान्वयविनाशस्वीकार इत्यर्थः। कथमिदानी (३) मिति न चानुत्पन्नस्य स्थितिविपत्ती इति पूर्वमुक्तत्वादिति भावः। अन्यथानवस्थाना (७) विति सुनयार्पितस्यैकस्यैव भङ्गस्य सप्तभङ्गीत्वप्राप्तौ मर्यादालक्षणस्यावस्थानस्याभावादित्यर्थः, यद्वा विधावपि विध्यन्तरादिविकल्पप्रासादनवस्थानं बोध्यम्। न चासौ सप्तभङ्गीविधावसमारूढ (९) इति। यद्यपि सप्तभङ्गीविधिसमारूढत्वं सुनयार्पितत्वं वा नार्थक्रियाकारितावच्छेदकम्, तद्रूपज्ञानेऽपि पुरोवर्तिनीष्टतावच्छेदकरूपवैशिष्ट्यज्ञानादेव रजतादौ प्रवृत्तिदर्शनात्, नापि सप्तभङ्गीविधिसमारूढत्वनियतं रजतारजतोभयरूपत्वं तथा, “ सर्वस्योभयरूपत्वाविष्टानिष्टाव्यवस्थितौ ॥ अप्रवृत्तिनिश्चेष्टं जातं सर्वत्र ही जगत् ॥ १ ॥ इति मण्डनमिश्रकृतपूत्कारप्रत्युत्तरादानेन तस्यारण्यरुदितत्वप्रसङ्गात्। स्वरूपपररूपाभ्यामसङ्करोक्त्या तत्सङ्करनिवारणे च नियतैकरूपस्यैवार्थक्रियाकारितावच्छेदकत्वव्यवस्थितेः, तथापि सर्वस्य ज्ञानस्य प्रवर्तकत्वेऽगृहीताप्रामाण्यकत्वस्य तन्त्रत्वात् प्रवर्तकज्ञानाप्रामाण्यविघटनाय सप्तभङ्गीविधिसमारूढत्वमुपयुज्यत इति युक्तं पश्यामः। यद्यपि प्रामाण्येऽपि लोकसिद्धे तद्वति तत्प्रकारकत्वमात्रं तन्त्रम्, न तूक्तं सप्तभङ्गीविधिसमारूढत्वम्, तथापि लोके-

परप्रामाण्ये सप्तभङ्ग्योपन्यासपर्यालोचनावसरस्य तन्नयात् सर्वत्र तदाश्रयणं युक्तमिति तत्र तत्र व्यवस्थापितमस्माभि
रिति सर्वमवदातम् । 'नानोपाधीति' ( २२७–१–६ ) नानोपाधीनां सत्त्वादिधर्माणामुपकाराङ्गभूता या शक्तिस्तदभिन्न
आत्मा स्वरूपं यस्य तादृशस्य धर्मिणो ग्रहे, सर्वात्मना ( ६ ) धर्मिणा, उपकार्यस्य ( ६ ) धर्मकलापस्य, को भेदो
ऽनिश्चितः स्यात् ( ६ ) न कश्चिदित्यर्थः । एकस्य सत्त्वादिधर्मस्योपकारके धर्मिणि तस्मिन् दृष्टे सर्वे उपकारा दृष्टाः । ततो
ऽपरे उपकारा न सन्ति, ये तस्मिन् दृष्टे न दृष्टा इति, तद्ग्रहे एकोपकारकग्रहे, बलात् सर्वोपकार्यग्रहः स्यात् । 'धर्मो
पकारेत्यादि ( १० )' धर्माणां या उपकारशक्तयस्तासां भेदेऽङ्गीक्रियमाणे, तास्तस्य धर्मिणः, किं स्युर्न स्युरित्यर्थः ।
यदि ततो (११) धर्मिणः सकाशात्, तासां धर्मोपकारशक्तीनाम्, उपकारो न, तथोपकारे च स्वीक्रियमाणे, उपकारश
क्तिपरम्पराकल्पनेनाव्यवस्थितिः (११) अनवस्था स्यादित्यर्थः ॥ २१ ॥

**धर्मे धर्मेन्य एवार्थो धर्मिणोनन्तधर्मणः । अङ्गित्वेन्यतमान्तस्य शेषान्तानां तदङ्गता ॥ २२ ॥**

धर्मी तावदनन्तधर्मा धीवादिः, प्रमेयत्वान्यथानुपपत्तेः । ननु च धर्मेण व्यभिचारः तस्यानन्तधर्मत्वाभावेऽपि प्रमेयत्वसिद्धेः । तस्याप्यनन्तधर्मत्वे धर्मित्वप्रसङ्गान्न धर्मो नाम । तदभावे न धर्मीत्युभयाभावः । प्रमेयत्वस्य च साधनधर्मस्यानन्तधर्मशून्यत्वे तेनैवानेकान्त । तस्यानन्तधर्मत्वे धर्मित्वेन पक्षान्तःपातित्वान्न हेतुत्वम् । इत्युपालम्भो न श्रेयान्, धर्मस्यैव सर्वथा कस्यचिदसम्भवात्तेन व्यभिचाराभावात् साधनस्य । न हि स्वधर्म्यपेक्षया यो धर्मः सत्त्वादिः स एव स्वधर्मान्तरापेक्षो धर्मी न स्यात्, ततोऽनन्तधर्मा न भवेत् । न चैवमनवस्थानम्, अनादिनन्तत्वात् धर्मधर्मिस्वभावमेदव्यवहारस्य बीजाङ्कुरवदनवस्थासारत्वात् । न च धर्मिणो धीवादेरपोद्ध्रियमाणो धर्मः प्रमेयं, तस्य मय

विशेषविषयत्वात् प्रमाणविषयत्वात्। इति न तेनानेकान्तः। एतेन प्रमेयत्वस्य धर्मस्य नयविषयस्य भेदस्तेनाप्रमेयत्वाद्येन व्यभिचारो नि
रस्तः। प्रमाणविषयस्य तु प्रमेयत्वस्य हेतोः स्वधर्मापेक्षयानन्तधर्मत्वेन धर्मित्वात्पक्षत्वेपि न हेतुत्वव्याघातः, स्वपरानन्तधर्मत्वे साध्येऽन्य
थानुपपत्तिसद्भावात्। तथोनन्तधर्मा धर्मी सिद्धस्तथैव। तस्य धर्मे धर्मेऽस्तित्वादौ भिन्न एवार्थः प्रयोजनं विधानादिः प्रवृत्त्यादिर्वा तद
ज्ञानविच्छित्तिर्वा, न पुनरेक एव, येन प्रथमभङ्गादेवानन्तधर्मात्मकस्य वस्तुनः प्रतिपत्तेः शेषधर्माणामानर्थक्यं प्रसज्येत। न च धर्मो
धर्मिणोऽर्थान्तरभूत एव, नाप्यनर्थान्तरमेव, येन तदभावविरूपणप्रसङ्गः, कथंचिद्भेदाभेदात्मकत्वाद्धर्मिधर्माणां तदात्मकवस्तुनो जात्यन्तर
त्वाच्चित्राकारैकसंवेदनवत्, तत्र विरोधादेरनवकाशात्। भेदव्यावृत्ते प्रधानत्वेऽस्तित्वादिषु धर्मेष्वन्यतमस्यान्यस्य धर्मस्य, शेषाणां
स्यात्कारसूचितान्यधर्माणां तदङ्गतया तद्गुणभावः, तथा प्रतिपत्तुर्विवक्षाप्रवृत्तेरर्थित्वविशेषात्। ततो भङ्गान्तरप्रयोगो युक्त एव, प्रति
धर्मं धर्मिणः कथंचित्स्वभावभेदोपपत्तेः। यदि पुनः प्रत्युपाधि परमार्थतः स्वभावभेदो न स्यात्तदा दृष्टेऽभिहिते वा प्रमाणान्तरमुपन्यन्तरं
वा निरर्थकं स्यात्, गृहीतग्रहणात् पुनरुक्तेश्च। तथा हि। साक्षादुपलम्भे क्षणिकत्वानुमानं स्वार्थं न स्यात्, धर्मिप्रतिपत्तौ
कस्यचिदप्रतिपन्नस्वभावस्य साध्यस्याभावात्, सर्वथा स्वभावाविशेषाभावात्। परार्थे चानुमाने वचनात्मकं न युज्येत, धर्मिवचनमा
त्रेणैव साध्यनिर्देशसिद्धेः, साधनधर्मोक्तिसिद्धेश्च। तद्वचने पुनरुक्तत्वप्रसङ्गः, तस्य स्वभावाविशेषाभावादेव। तस्माद्दृष्टस्य भावस्य दृष्ट
एवाखिलो गुणः। भ्रान्तेर्निश्चीयते नेति साधनं संप्रवर्तते॥१॥ इत्येतदप्यनालोचितवचनमेव, दृष्टस्य स्वभावस्य स्वभावाविशेषाभावेऽखिल
गुणदर्शनस्य विरोधात्, धर्मिमात्रेप्यभ्रान्तौ साध्ये स्वभावे भ्रान्त्ययोगात् तद्भ्रान्तौ वा क्षणक्षयस्यापि भ्रान्तिप्रसक्तेः कुतः साधनं
संप्रवर्तेत यतोऽर्थनिश्चयः स्यात्? क्षणक्षयस्यादौ निश्चये कथमनित्यत्वादावनिश्चयः? स्वभावाविशेषप्रसङ्गात्, निश्चितानिश्चितयोरेक-

ल्पोत्पत्तिरेवास्तु, न चैवं, तदन्यस्याभावादेव विकल्पोत्पत्तेः । यदि पुनरसत्त्वादिव्यावृत्तीनामदर्शनेऽपि तद्वासनाप्रबोधादेव तद्विक-ल्पोत्पत्तिरङ्गीक्रियते तदा नीलादिरूपादर्शनेऽपि तद्वासनासामर्थ्यादेव नीलादिविकल्पोत्पत्तेस्ततो नीलादिरूपव्यवस्था मा भूत् । तदस्तु-न्यादिव्यवस्थितिरपि कुतः संभाव्येत ? स्वसंवेदनव्यवस्था च तन्निश्चयोत्पत्तेर्दुर्घटैव । तदनुत्पत्तौ सुतरां तद्व्यवस्था स्वग्राह्यग्राहकाद्या-दिवद्ग्राह्याकारविवेकवत् । स्वरूपस्य स्वतो गतिरित्यपि तथा निश्चयानुत्पत्तौ न सिद्ध्येद्ग्राह्याकारादिवत् । ततः कथंचिन्निश्चयाद्वस्तुस्व-भावभेदव्यवस्थायां सत्त्वादिनिश्चयाद्वस्तुनि परमार्थतः सत्त्वादिधर्मभेदव्यवस्थितिरभ्युपगन्तव्या, अन्यथा कथंचिदपि व्यवस्थानासिद्धेः । परमार्थतः सत्त्वादिधर्मव्यवस्थितौ च सत्यां साधीयसी सत्त्वादिसप्तभङ्गी सुनयार्पितत्वात् ॥ २२ ॥

'धर्मस्यैवेति' ( २२५ २ १२ ) द्रव्यभिन्नपदार्थान्तरीभूतधर्माभ्युपगम एव हि व्यभिचारः स्यात्, स तु नास्माकं विषयानुसारित्वाद्धर्मधर्मिभावस्येति नोक्तदोषोपनिपात इति भावः । 'न हीति' (१३) न चैवं सत्त्वादीनां प्रमेयत्वाद्यपेक्षया धर्मित्वे 'निर्गुणा गुणा' इति प्रवादो व्याहन्येतेति वाच्यम्, द्रव्यत्वनियामकसम्बन्धेन गुणे गुणाभावेऽपि सम्बन्धान्तरेण तदु-पगमे दोषाभावात् । न चाभेदैक्ये सम्बन्धाविशेषः, घटाभावे घटाभाव इति वत् घटे घट इति प्रतीत्यभावेन यथाप्रतीत्यभेदशक्ती-नामपि नानात्वोपगमादिति द्रष्टव्यम् । 'न चैवमिति' (१३) एष धर्मस्यानन्तधर्मप्रकारैर्धर्मित्वे धर्मिधर्मानन्तधर्म्यपेक्षया धर्मत्व इत्यर्थः । 'यत्नयत्वेति' (१४) भ्रमणकाले पटपस्य पूर्वभागो यथा भवत्यपरोऽपरश्च पूर्वस्तद्वदित्यर्थः, अभव्य संसारवद्वेति (१४) यथाऽभव्यस्य तदसंसारपर्यायैर्गृहीतमुक्तैर्नानवस्थितिस्तद्वदित्यर्थः, अनेन दृष्टान्तद्वयेन धर्मधर्मिभावा-नवस्थायाः प्रामाणिकत्वाददोषत्वमित्युक्तं भवति, धर्मिणो पृथक्ते धर्मे व्यभिचारमाशङ्क्य निषेधति—न च धर्मिण (१४)

इति, तत्र ज्ञेयत्वेऽपि प्रमेयत्वाभावान्न व्यभिचार इत्यर्थः । अनयैव रीत्या प्रमेयत्वेऽपि न व्यभिचारः, विशिष्टधर्मावच्छि-न्नाधिकरणताकाभावाभ्युपगमात्प्रमेयत्वविशिष्टप्रमेयत्वे प्रमेयत्वाभावात् व्यभिचारलक्षणे साध्याभाववद्वृत्तित्वस्य योरकावच्छेद प्रवेशेन चानतिप्रसङ्गाभयरक्षया वैज्ञानिकसम्मन्यगर्भत्वाच्च तस्येत्यभिप्रायवानाह–'एतेनेति' (२२६ । १) शुद्धप्रमेयत्वस्य तु पक्षान्तर्भूतत्वादेव तत्र न व्यभिचार इत्याह–प्रमाणविषयस्य त्विति (२) इदमापाततः, निरुक्तरीत्या शुद्धेऽपि तत्राव्यभिचा-रादिति बोध्यम् । पक्षत्वेऽपि हेतुत्वाव्याहतौ प्रकारमाह–'स्वपरानन्तेत्यादि' (२) साध्यान्यथानुपपन्नत्वमेव हेतुत्वप्रयोजकम्, न तु पक्षबहिर्भूतत्वमपि, पृथिवीत्वस्यैव तादात्म्येन पृथिव्याः पृथिवीतरभेदहेतुत्वप्रसिद्धेरिति न कोऽपि दोष इति भावः । विधानादिः (२) अभिलापादिः, प्रवृत्त्यादिः (३) तद्व्यापारेच्छाप्रयोज्यप्रयत्नादिः, तज्ज्ञानविच्छित्तिः (४) संस्कार विशेषाधानम्, तद्गुणभावः (७) सामान्यस्य धर्मित्वे प्रकृतेतरानन्तधर्मात्मकत्वस्य संसर्गतया भानात् असंसर्गत्वेनाप्रधा-नत्वम्, सेतरानन्तधर्मसंवलितत्वेन प्रकृतधर्ममात्राभ्युपगमे तु विशेषणतया तेषामेवापोद्धारेण धर्मित्वविवक्षायां तु प्रकारतया व्यासमानत्वेनेति बोध्यम् । स च प्रतिपत्तृविवक्षाधीन इति तत्त्वम् । युक्त एवेति (७) प्रकारभेदेन प्रज्ञान्वयबोधस्य वैलक्ष-ण्यात् समन्वयबोधसमानाकारबोधवैधुर्येलक्षणाया आकाङ्क्षाया सत्त्वादिति भावः, तदाह–'प्रतिधर्ममिति' (७) स्वभाव भेदोपपत्तेरिति (८) "अर्थेनैव धियां विशेषः" इति न्यायात्, तथाप्रकारस्वभावभेदे सत्येव तथाप्रकारिस्वभावधानोपपत्तेरि-त्यर्थः । व्यतिरेके बाधकमाह–यदि पुनरित्यादिना (८), भ्रान्तैः (१२) भेदवासनाजनितभ्रमशालिभिः । 'विरोधादिति' (१३) एकधर्मिविषयकज्ञाने अनेकगुणाभेदविषयकत्वस्यैकस्य धर्मिण्यनेकगुणात्मकत्वस्य च विरोधप्रसक्त्यादिति भावः । वस्तुगत्याऽसि-

लगुणात्मकस्यैकस्य भावस्य तथापि तत्त्वेनादर्शनाच विरोध इत्याशङ्क्याह–'धर्मिमात्रेऽपीत्यादि' (२२६ १ १२) न हि सम्य
दर्शने धर्म्यंशेऽभ्रान्तत्वं क्षणिकत्वांशे च भ्रान्तत्वमिति तत्साधनाय प्रवृत्तिरिति चक्तुं युक्तम्, निरंशे वस्तुन्यांशिकभ्रमत्वप्रमात्व
योर्दुर्वचत्वादिति भावः। स्वभावातिशयप्रसङ्गा (१४) दिति ज्ञानाकारभेदस्यार्थाकारभेदनियतत्वादिति भावः। यद्यपि पदा
र्थस्य स्वतः स्वभावातिशयो नास्ति तथापि विजातीयभेदात् स्वभावातिशयो भविष्यतीत्याशङ्कायामाह भाष्यकृत्–सत्त्वुत्पत्ती
त्यादि (२२६ २ १)॥ तत एवेति (४) असत्त्वादिभ्यावृत्त्यपेक्षया लाघवात् सत्त्वादेरेवाविद्याविशेषजन्यत्वकल्पनौचित्यादिति
भावः। अत एव त्रिविध सत्त्वमौपनिषदानामिष्टमिति मन्तव्यम्। यदि च तत्त्वज्ञानदशायामपि सत्त्वाद्यनुभवाच तस्याऽऽ-
विषयत्वम्, तदाऽस्तु प्रमाणसिद्ध एवानन्तगुणात्मकस्वभावभेदो धर्मिणः, तत्तज्ज्ञानिमित्तयानुभवादिति बोध्यम्। सदन्तरेति
(५) सदन्तरं यद् घटवद्भूतलं ततो विविक्तस्य, केवलस्य भूतलस्य, असत्त्वव्यपदेशात् (५) घटाभावत्वेन व्यवहारादित्यर्थः,
तथा च शब्दाद्यात्मनाऽनुत्पत्तिमद् घटादि प्रसिद्धं तद्व्यावृत्त्योत्पत्तिमत्त्वं शब्दे सुवचमिति भावः। एवमग्रेऽप्यतद्व्यावृत्ति
प्रसिद्धिर्विशेषादेशेन वाच्या। निःस्वभावेति (७) निषेधस्य विध्यवच्छिन्नत्वाद्विधिस्वभावभेदाभावे निषेधस्वभावभेदस्य
दुरापास्तत्वादिति भावः। 'सतां हीति' (७) गुणप्रधानभावो हि वैवक्षिकः, विवक्षा च सत्येव वस्तुनि नासतीति विधेय
निषेधयोरन्यतरप्रधानगुणभाव उभयस्वभावभेदमेवाक्षिपतीति भाष्यप्रतीकार्थः। 'तद्व्यवहारस्येवेति' (११) व्यवहारा
न्योन्याश्रयप्रधानादित्यादोषः, यत्प्रतियोगिकत्वं यत्र नोपस्थितं तत्र विधामेण प्रत्यप्रतिव धात्रेति मन्तव्यम्। ततो
(२२७-१ २) नीलादिविकल्पोत्पत्तेः, तद्धत (२) नीलादिरूपव्यवस्थावत्, सुखादिव्यवस्थितिरपि कुतः सम्भाव्येत? (२)

कथंचिदितिप्रतिभासात् । यद्यपि ते विशेषाः परस्परव्यावृत्तपरिणामाः कालादिभेदेपि सद्रूपाविशिष्टाश्चित्रज्ञानेनीलादिनिर्भासवत् ।
यथा हि चित्रप्रतिभासाप्येकैव बुद्धिः, बाह्यचित्रविलक्षणत्वात् । शक्यविवेचनं हि बाह्यचित्रमशक्यविवेचनाश्च बुद्धेर्नीलाद्याकारा इति
चित्रज्ञानमशक्यविवेचनं नीलादिनिर्भासभेदेप्येकमिष्यते, तथा जीवादिविशेषभेदेप्येकं द्रव्यम्, कालभेदेपि सद्रूपाशक्यविवेचनत्वात्,
सामान्य-विशेषेपि वा ततस्तेषां विवेचयितुमशक्तेराकारभेदवत्, ततस्तेषां कथंचित्कथंचिदपि विवेचने स्वरूपाभावप्रसङ्गात् ।
सद्रूपविवेचनासिद्धेः, विशेषसमवायवत्यागमाबाधितत्वात् सद्रूपाविवेचनेपि जीवादीनां नाभाव इति चेत्, न, तेषामपि सद्विवर्तत्वात्
अन्यथा प्रमेयत्वायोगादवस्तुत्वप्रसक्तेः, सर्वथा सत्त्वाद्भिन्नस्यासत्त्वनिर्णयात् । ततो जीवादिविशेषाः कालादिभेदेपि स्यादेकं द्रव्यम्,
सद्रूपाविशिष्टत्वान्नीलादिनिर्भासभेदेपि ज्ञानरूपाविशिष्टस्यादेकचित्रज्ञानवत् ॥ इति प्रथमो भङ्गः ( १ ) ॥

तथा जीवादिविशेषाः स्यादनेकत्वमास्कन्दन्ति, भेदेन दर्शनात् संख्यासंख्यावद्वत् । न हि संख्यासंख्यावतोर्भेदेनादृष्टौ विशेष(षि)-
पविदे(षि)ष्यविकल्पः कुण्डलिवत् क्षीरोदकवत्तद्वेदिनि, यतः सौगतस्तयोरभेदं मन्येत । न च भेदैकान्ते तद्वृत्ताऽस्ति, व्यपदेशनिमित्ता-
भावात् । संख्यावानयं इति व्यपदेशनिमित्तं समवाय इति चेत्, न, तस्य कथंचित्तादात्म्यरूपत्वे भेदैकान्तासिद्धेर्वैशेषिकमतविरोधात् ।
पदार्थान्तरत्वे संख्यासंख्यावतोः समवाय इति व्यपदेशनिमित्ताभावः । विशेषणविशेष्यभावो व्यपदेशनिमित्तमिति चेत्, न, तस्यापि
ततो भेदे व्यपदेशनिमित्तान्तरापेक्षणात्पर्यनुयोगानिवृत्तेरनवस्थाप्रसङ्गाच्च । तस्मादयं कथंचिदेव संख्यासंख्यावतोः स्वभावभेदं पश्यति,
तद्विशिष्टविकल्पनात्कथंचिन्निर्णयेप्यन्यत्र संशयादर्भेदसाविपर्यदिति । तदेव सर्वं सिद्धं स्यादनेकम् ॥ इति द्वितीयो भङ्गः ( २ ) ॥

क्रमार्पितद्वयात्स्यादुभयम् ( ३ ) ॥ सहावक्तव्यं, वक्तुमशक्तेः ( ४ ) ॥ स्यादेकावक्तव्यं, स्वलक्षणस्यैकस्य वक्तुमशक्यत्वात्

११

(५) ॥ स्यादनेकमवक्तव्यं, तस्यानेकस्यापि वक्तुमशक्तेः (६) ॥ तत एव स्यादुभयावक्तव्यम् (७) ॥ इति सप्तभङ्गीप्रक्रियायोजनमविशेषतवचनसामर्थ्यादवसीयते ॥ तत एव चैकत्वमेकधर्मिणि स्वप्रतिषेध्येनानेकत्वेनाविनाभावि विशेषणत्वाद्वैधर्म्याविनाभाविसाधर्म्यवद्धेतौ । अनेकत्वं स्वप्रतिषेध्येनैकत्वेनाविनाभावि विशेषणत्वात् साधर्म्याविनाभाविवैधर्म्यवद्धेतौ । एवं वक्तव्यत्वादयोऽपि स्वप्रतिषेध्येनाविनाभाविनो विशेषणत्वाद्विशेष्यत्वाच्छब्दगोचरत्वाद्वस्तुत्वाद्वा स्वसाध्येतरापेक्षया हेतुहेत्वाभासात्मकसाधनधर्मवदित्यपि नययोजनमविरुद्धमवबोद्धव्यम् । विशेषणत्वादेः साधनधर्मस्यापि स्वविशेष्यापेक्षया विशेषणस्य स्वप्रतिषेध्येनाविनाभावित्वसिद्धेर्न तेन विशेषणत्वादिहेतोर्व्यभिचारः । नापि विशेष्यत्वस्य, स्वविशेषणापेक्षया विशेष्यस्यापि स्वप्रतिषेध्येनाविनाभावित्वात् । शब्दगोचरत्वस्य च शब्दान्तरागोचरत्वस्य स्वप्रतिषेध्येनाविनाभावित्वात् वस्तुत्वधर्मस्य च वस्त्वंशत्वेन वस्तुस्वरूपस्य तत एव व्यभिचारित्वात् क्वापि न शङ्क्या, अनेकान्तवादिनां तथाप्रतीतेर्विरोधाभावात् । एवमेकत्वानेकत्वाभ्यामवतारितं सप्तभङ्गद्वयमारूढं जीवादिवस्तु, अर्थक्रियाकारित्वान्यथानुपपत्तेः । सर्वथैकान्ते क्रमाक्रमाभ्यामर्थक्रियाविरोधादित्यत्रापि योजनीयम् ॥ २२ ॥

प्रज्ञाधीशप्रपूज्योज्ज्वलगुणनिकरोद्भूतसत्कीर्तिसम्पद्-विद्यानन्दोदयायानवरतमखिलक्लेशनिर्णाशनाय ।
स्ताद्गौः सामन्तभद्री दिनकररुचिजित्सप्तभङ्गीविधीद्धा, भावाद्येकान्तचेतस्तिमिरनिरसनी वोऽकलङ्कप्रकाशा ॥१॥

इत्याप्तमीमांसालङ्कृतौ प्रथमः परिच्छेदः ॥

परम इति (...) ... तदभावेऽपि समूहबुद्धिकृतस्य सर्वद्रव्यगतैकत्वस्य न दुष्टत्वमित्युक्तं भवति । अत्र च कत्वस्य प्रत्यभिज्ञामात्रप्रमाणकत्वेऽपि तदभावेऽपि समूहबुद्धिकृतस्य सर्वद्रव्यगतैकत्वस्य न दुष्टत्वमित्युक्तं भवति । अत्र च व्यवहाररूपापेक्षाधीनत्वमेकत्वं तद्व्यक्तित्वावच्छिन्नम्, समूहकृतं च तद्वृत्तिजात्यवच्छिन्नम्, प्रतियोग्यनुयोगिवाचकपदसत्त्वे अन्यथा च धुवं सामान्यधर्मिणि प्रतीयते, सोऽयं सजातीयोऽयं सर्वो घट एकः सर्वमेकमित्यादिप्रयोगादिति विवेकः । अथ समूहबुद्धिकृतमेकत्वं कथं समूहबुद्धेर्विषयः स्यादिति चेत्, अनादित्वेनायं दोषः परिहरणीयः । पूर्वपूर्वसमूहबुद्धिकृतस्यैकत्व स्योत्तरोत्तरसमूहबुद्ध्या विषयीकरणसम्भवात् द्वित्वादिवदस्यैकत्वस्यापेक्षाबुद्धिव्यङ्ग्यत्वपक्षे तु नात्राशङ्कापदप्रसरोऽपि, यथा चैकत्वादिस्वादेः कथञ्चिदपेक्षाबुद्धिव्यङ्ग्यत्वं जन्यत्वं च तथा व्यवसापितमस्माभिर्नयामृततरङ्गिण्यां महता प्रबन्धेनेति तत एव तदवमन्तव्यम् । 'अपरे त्विति' (११) न परेऽपरे सङ्ग्रहनयमवलम्ब्याद्विपरिणामेन अद्वैता वेदान्तिन इत्यर्थः । तन्मत एव सकलभेदप्रपञ्चस्य बाधावधीभूतसद्रूपोपादानकत्वादिति ध्येयम् । स्याद्वादावष्टम्भे पुनरेतन्मतं न क्षोदक्षमम्, जीवादिभेदानां त्रैलक्षण्यान्वितत्वेन कथञ्चित्कार्यत्वे तदुपादाने सतीष्यमाणे तदन्तर्भावेनापि कार्यत्वस्य सदन्तरोपादानत्वस च कल्पनायामनवस्थाप्रसङ्गादूर्ध्वतासामान्यस्यैकस्य सम्भवो भावेऽपि व्याप्त्या तद्योगात्, अन्यथा तस्य जीवाजीवोभया त्मकत्वेन तृतीयराशिप्रसङ्गात्, यदि चेदमेकत्वं न द्रव्यत्वापादकं किन्तु सर्वाधारत्वापादकमिति नोक्तदोष इति विभाव्यते, तदा प्राचीनमतस्यैवायं पुनः प्रसवः, बुद्धिप्रत्यासत्त्या नगरादिवदेकत्वेन विवक्षितस्य सद्द्रव्यस्य जीवादिभेदाधिष्ठानत्वोपपा दनात्, एवं सत्यनपेक्षितद्रव्यार्थिकनयाभिमतं वर्णनाहेतुः कालास्यमेव सद्द्रव्यमुपतिष्ठते, युक्त चैतत्, कालस्वरूपेश्वरवादिनये

सकलमेवोपादानत्वेन सकलस्वरूपस्य सद्रूपस्यैवास्योक्तौ सकलनयमये भगवत्प्रवचने दोषाभावात्, विशेषितं चैतदर्थं सकर्दनु सारिभ्यां तत्त्वार्थटीकायामस्माभिः ॥ कथञ्चिद्विशिष्टप्रतिभासात् (२२९ १ १) चौर्देकस्यानुविद्धमेदप्रतिभासादित्यर्थः । विशिष्यत इति विशिष्टं भेदः, उक्तमेव कथञ्चित्प्रतिभासं भाष्येण समर्थयन्नाह–'यद्यपीति' ( २२९–१–१ ) यद्यपीत्युक्तो रूपसादिभेदेऽपीत्यत्र तथापीति गम्यम् । चाक्षुषविषयविलक्षणत्वात् (२) भावनानारूपभिन्नत्वात्, शाब्दविशेषणं दीति (१) भिन्नधर्मिकत्वादेकस्यापि च धर्मिणि स्फुटास्फुटैककमेवादित्यर्थः । अथास्यविशेषणतयेति ( १ ) अस्फुटास्फुटैककस्यादि त्यर्थः । विवेचने (४) सत्त्वात् पृथक्कृत्य विषयये, सत्सामान्येति (४) परामिमतसामान्यादिपदार्थः । यथा हि परामिमतः सामान्यादिपदार्थः सत्तासामान्याभिन्नस्वरूपस्तथा सत्त्वादिविशिष्टो जीवादिः स्यादिति तत्त्वम् । सविशेषत्वात् (५) सविशेष त्वात्, विशेषे च सर्वथा सामान्यभेदस्यासम्भवादित्यर्थः । विशे(शि)ष्यविकल्पः (९) इदमेवदिदं चेदमिति विभक्त्य नियमः । व्यपदेशनिमित्ताभावः (११) पदार्थान्तरभूतस्य समवायस्यैकत्वेनाभ्युपगमात् सकलस्यावस्थेव सकलस्यासमवायो नान्यत्रेति नियामकाभावादित्यर्थः । विशेषणविशेष्यभावः (११) आधाराधेयभावः, तथा च समवायस्यैकत्वेऽपि समवायसम्बन्धा-धिकरणतदाधारतया अतिरिक्तस्वाभावादिप्रसङ्ग इति भावः, तस्या अप्यतिरिक्तत्वे तत्सम्बन्धान्तरगवेषणयाऽनवस्था, अनति-रिक्तत्वे तु तादात्म्येन सम्बन्धतयाऽभ्युपगन्तव्यमिति प्रसज्यतानाद्यत्वस्यापीत्यादि (११)॥ अथ (१२) सौगतो वैशे षिको वा, वर्णरसादिवदिति (१३) यथैकत्र मातुलिङ्गे वर्णरसयोर्मेदेन सत्त्वमेकस्य निर्णयेऽप्यन्यस्य संशयात्तथा सकलस्या सकलस्याभावयोरित्यर्थः, क्रमार्पितद्वयात् स्यादुभयमित्यादि (१४) भङ्गयोजनं प्राग्वदुपयुज्य विधेयमिति भावः ॥ २२ ॥

विततविधिनिषेधैकत्वनैकत्वमार्ग–प्रसृतनयतरङ्गा सप्तभङ्गी भवन्ती ।
इयमुरुगमभङ्गीरक्षितवाक्प्रमोघा, जयति मुनिमराली सर्वतः सेव्यमाना ॥ १ ॥
परतर्कास्तु विसम्वदव्यसनितां व्यालोकनं विद्रुपद–
ग्रन्थानां सितवाससां च समये निःशङ्कसङ्कीर्त्तनम् ।
जानन्तु प्रतिवादिनः सहृदयाध्यानन्विनः सन्त्वितः, ।
सम्भाव्येति कृतो विनोदरसिकैरस्माभिरेषः श्रमः ॥ २ ॥

इति शाहिश्रीअकब्बरप्रदत्तजगद्गुरुविरुदधारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यशिरःकोटीरहीर महोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंसपण्डितश्रीलाभविजयगणिशिष्यमुख्यपण्डितश्रीजीतविजय गणिसतीर्थ्यालङ्कारपण्डितश्रीनयविजयगणिचरणकमलचञ्चरीकेण पण्डितश्रीपद्मविजयगणिसहोदरेण महोपाध्यायश्रीयशोविजयगणिना विरचितेऽष्टसहस्रीतात्पर्यविवरणे प्रथमः परिच्छेदः ॥

॥ अष्टसहस्रीतात्पर्यविवरणे प्रथम परिच्छेद समाप्त ॥

भेदप्रत्यक्षादिभिः । एकस्मिन्नपि क्रियाकारकभेदप्रत्ययप्रादेः संभवात् स्वप्नसंवेदनवत् कथमद्वैतं विरुद्धमिति चेत्, न, स्वप्नसंवेदनस्याप्यै भेदप्रत्यक्षादिभिः कस्ये तद्विरोधस्य व्यवस्थत्वात् । तत्रान्यदेव हि क्रियाविशेषसंवेदनं स्वप्नासमोत्थम् अन्यदेव च कारकविशेषसंवेदनं प्रत्यक्षमनुमानादि वा, न पुनरेकमेव तदेकतानासनामेवाभावप्रसङ्गात्, जाग्रद्दशायामिव स्वप्नादिदशायामपि पुंसोऽनेकस्यारमकस्य क्रियाकारकविशेषप्रति भासवैचित्र्यव्यवस्थितेः । कस्यचिदेकरूपस्यात्मगगनादेरप्यनेकान्तवादिनामनेकक्रियाकारकविशेषप्रतिभासात्मकत्वसिद्धेर्विरुद्धमेवत्प्र- लक्षणादिभिरद्वैतम् । न हि करोति कुम्भं कुम्भकारो दण्डादिना, भुङ्क्ते पाणिनौदनमित्यादिप्रत्यक्षं भ्रान्तम्, येनाद्वैतस्य विरोधकं न स्यात् । सर्वत्र क्रियाकारकादिरूपं कथंचिद्भिन्नम्, भिन्नप्रतिभासित्वान्यथानुपपत्तेरित्यनुमानं वा नाना जीवा इत्यादिप्रवचनं वा न विभ्रमाक्रान्तम्, येनाद्वैतं न विरुन्ध्यात् । स्यादाकूतं 'विवादापन्नं प्रत्यक्षादि मिथ्यैव, भेदप्रतिभासित्वात् स्वप्नप्रत्यक्षादिवत्' इति, तदसत् । प्रकृतानुमाने पक्षहेतुदृष्टान्तभेदप्रतिभासस्याभिमिथ्यात्वे तेनैव हेतोर्व्यभिचारात्, तन्मिथ्यात्वे तस्मादनुमानात्साध्याप्रसिद्धेः । पराभ्युपगमात्पक्षादिभेदप्रतिभासस्याभिमिथ्यात्वे न दोष इति चेत्, न, स्वपराभ्युपगमभेदप्रतिभासेन व्यभिचारात् । तस्यापि पराभ्युपग मान्तरादमिथ्यात्वाद्दोषाभावे स एव तदेकप्रतिभासेन व्यभिचार इति न कश्चित्प्रत्यवतिष्ठेत । कश्चिदाह 'ब्रह्माद्वैतस्य संविन्मात्रस्य स्वतः सिद्धस्य क्रियाकारकभेदप्रत्यक्षादीनां बाधकस्य भावादेषां भ्रान्तत्वम्, ततो न तद्विरोधकत्वम्' इति, तदपि न साधीयः, तथा सति बाध्य- बाधकयोर्भेदात् द्वैतसिद्धिप्रसङ्गात् । न च परोपगममात्रादनयोर्बाध्यबाधकभावः, परमार्थतस्तदभावापत्तेः, प्रतिभासमात्रवत्प्रतिभास मात्रविशेषस्यापि सत्यत्वसिद्धेरनेकान्तव्यवस्थानात् । तदेकान्ततः पुरुषाद्वैतं प्रत्यक्षादिविरुद्धमेव ॥ २४ ॥

यत्तीर्थे विमले क्रियोत्थसगुणैः संसेविते साधुभिः, गच्छः स्वच्छतरस्तपाह्वय इह भासः प्रसिद्धिं पराम् ।

समार्यार्येपि यास्तामयकलत्तयैव मैत्रीपदे, तं श्रीवीरजिनेन्द्रमभतिहतानन्दाय वन्दामहे ॥ १ ॥
सप्तपोत्मेक्षयाऽऽकम्य-सम्मदायाभयान्मम ॥ स्याद्वादानुर्जैनतत्त्वानां विघ्न हरतु भारती ॥ २ ॥

अद्वैतैकान्तनिरासपूर्वमेकत्वपृथक्त्वसप्तभङ्गीसाधनायोपक्रमते-अद्वैतैकान्तपक्षेऽपीत्यादिना ॥ नन्विदमित्यादिर्भो-ऽयतात्पर्यार्थो वृत्तिकृतैव प्रकाश्यते, तेन मनुरक्षमार्थो, न तु पूर्वपक्षार्थः, तदुपमर्दामापादिति मन्तव्यम् । इदमद्वैतै-कान्तवापुकम्, तस्मिन्नपि स्याद्वाद्यावद्वैतस्वीकारेऽपि, क्रियाकारकभेदप्रतिभासो बाधितो भविष्यतीत्यत आह-' तव्यभ्युपगममात्रस्येति ' अद्वैताभ्युपगममात्राय तद्वापोऽन्यत्र बाधकं न पश्याम इत्यनाश्रितक्रियाकारकभेदप्रतिभासाद्वैतपक्षो मिथ्यैवेति भावः । पारमार्थिकेऽद्वैते औपाधिकः क्रियाकारकसम्बन्धभेदो न विरोधमावहतीत्याशङ्कते-न हीत्यादिना, अपरोऽद्वैतवादी, परमार्थतो भेदाभावे प्रपञ्चप्रपञ्चिनोः कार्यकारणभावो दुर्घट इति वक्तुमुपक्रमते-सोऽप्येष प्रपञ्चस्येत्यादिना ॥ कथमेति, न च कार्यं मद्यैव ब्रह्म च कार्यदशायां कार्यमन्यदा चाकार्यमित्येवमभेदेऽपि सुवर्णवद्विकारवत् कार्यकारणभाव इति वक्तव्यम् । एवं सति भेदाभेदवादप्रसङ्गात्, कार्यदशायामपि तदभिन्नत्वे कूटस्थत्वव्याघाताच, तर्हि प्रपञ्चोऽविद्याजन्मास्त्वित्याशङ्क्य निषेधति-परस्मादित्यादिना ॥ ' अकिञ्चिद्रूपस्येति ' अविद्याया असत्याया द्वितीयायाः कारणभूताया अभ्युपगमेऽपि सद्वैताभ्युपगमेपादित्यर्थः । माहेन्द्रादिविद्यादिति उशीरादिप्रभ्यप्रसिद्धेन्द्रजालादिकर्मसु, तद्विषयाकारयोरिति अतद्रूपयोरपि तद्रूपत्वेन प्रतीयमानयोरित्यर्थः । ' तद्विषयस्येति ' अन्यदेशेऽसम्भवात् सर्वथा मायामयत्वमिति भावः । प्रतिपत्त्युपायाभावादिति, न चाकस्माद्बोधोत्पत्तेरप्यदोषः, तद्वचनस्य " हेतु

भूतिनिषेधो न " इत्यादिना पञ्चभिर्विकल्पैरुपपनाविनिर्दूषितत्वात्, न चानुपाख्याद्युत्पत्तिपक्षोऽप्यः, साध्यावेनाविधा
विलासात् प्रपञ्चोत्पत्त्यभ्युपगमादिति वाच्यम्, अविद्यातत्कार्यस्यानुपाख्यत्वे तन्निवृत्तेरनात्मस्वरूपत्वेनानिर्मोक्षापातात्,
अतिरिक्तायास्तस्यास्तत्सम्बन्धस्य चात्मन्यभ्युपगमे तु मुक्तावपि द्वैतप्रसङ्गादिति न किञ्चिदवद्यम् । एकस्मिन्नपीति यथैक
स्मिन् स्वप्नज्ञाने गजतुरगादीनामनेकेषां प्रतिभासनं तथा परब्रह्मण्येकस्मिन् घटपटादिभेदानां मानमद्वैतपक्षेऽप्यविरुद्ध
मिति भावः । एकत्वे सर्वैकत्वे, तद्विरोधस्य क्रियाकारकभेदप्रत्यक्षादिविरोधस्य, अनेकशक्त्यात्मकस्येति अन्यथा
जाग्रत्स्वप्नविशेषस्य स्वभावान्तरविशेषस्य चानुपपत्तेरिति भावः । न च जाग्रत्स्वप्नारम्भकाज्ञानविशेषात् स्वप्नविशेषात्
म्भकतद्विशेषाच्च तदुपपत्तिर्मूलाज्ञाननिष्ठशक्तिविशेषाद्वेति वाच्यम्, तस्य कर्मतच्छक्त्यतिरिक्तत्वे मानाभावात्, तत्कार्य-
क्रियाकारकप्रतिभासभेदानामन्तःकरणधर्माणामात्मनि मानाभ्युपगमेऽन्यथाख्यात्यापत्तेः, आत्मनिष्ठानामनिर्वचनीयानां तेषा
मभ्युपगमेऽन्तःकरणात्माधारभेदेन तस्येतरविवेकस्य विना शपथं दुष्करत्वात्, विविधप्रतिभासादितदधिष्ठानन्तधर्मादिकल्प
नायां महागौरवेणात्मनिष्ठानामेव तेषां परिकल्पनौचित्यात्, आत्मनि कौटस्थ्यस्य ब्रह्माद्वैतस्य च विलुप्तधीर्यत्वादिति दिग् ।
अथैकस्य निरंशस्यात्माकाशादेरनेककारकाधालम्बनत्वं यथा तथा ब्रह्मणोऽपि भविष्यतीत्याशङ्कायामाह-' कस्यचि-
दित्यादि ' ॥ तथा चानेकान्तावलम्बनं विनात्माकाशादेरप्यनेककारकालम्बनत्वमयुक्तमिति न तद्दृष्टान्तेनाद्वैताधि
रोध इति सिद्धम् । क्रियाकारकभेदप्रतिभासस्य मिथ्यात्वाधेन नाद्वैतधीविरोध इत्याशङ्क्य निराकरोति–स्याद्वादकुसमित्या
दिना ॥ पराभ्युपगमादिति एवं हि तत्र प्रातिभासिकमभिथ्यात्वं सिद्धं साध्यते च पारमार्थिकं मिथ्यात्वमिति

यस्मादेवाम्नानामप्रामाण्यं यदुक्तं तेन तस्य दूरत एव वर्जनात्। आश्रयतां वा माध्यमत बलाद् व्यवहारतो वेदान्ती, तथापि सर्गनरकादेर्व्यावहारिकपदार्थस्याविद्याजन्यस्योपगमे तत्कस्याविद्यानाशे सर्गनरकादुष्कोदाभिदुःखसमुद्रं जगत् स्यात्, तत्कल्पितस्यान्यतरस्य सर्गनरकाद्यभ्युपगमे आपेक्षिकत्वेन तस्य प्रातिभासिकत्वमायातं, न व्यावहारिकत्वम्, मूलाज्ञानजन्य पापतत्पार्थनाशः सर्वसुखायेन, तद्विलासमन्यस्त्वन्यतरापीत्यदोष इत्यपि न चोद्यक्षमम्। एवं सत्यध्यारोपापवादक्रमेण प्रतिपुत्सं मोक्षोपायनानाशेन प्रतिपुत्सं समस्तवृत्तिभेदापत्तेरसमाधानात्, कथं चास्मिंस्तव व्यावहारिकपदार्थाभ्युपगमे वै पारमार्थिकत्वेन यष्टव्यो योगिनां नात्यन्तभ्रान्तत्वम्, योगिनः प्रत्यविद्याशक्तिविशेषेण तत्र प्रतिभाससत्त्वमेव सत्यत्व इति चेत्, न, यमिक वारिद्वैतत्वम्ये तत्र तद्दैत्यस्य वाच्यत्वात्, तथाऽप्यन्यं प्रति व्यावहारिके उभयप्रतिभासप्रसङ्गात्, तस्मादापेक्षिकत्वं मुधायो ज्ञानमात्रमभ्युपगम्य भेदमात्रमपह्नुवानो वेदान्ती माध्यमिकं नातिशेतीति सुनिश्चिता नः प्रतीतिः ॥ २५ ॥

स्यान्मतं 'न प्रमाणैः प्रमाणमननीकरणात् स्वमनीषिकाभिरारचितं, तस्मादनुमानप्रमाणात् प्रमाणात् सिद्धेः। तथा हि। यत्प्रतिभाससमानाधिकरणं तत्प्रतिभासान्तःप्रविष्टमेव। यथा प्रतिभासस्वरूपम्। प्रतिभाससमानाधिकरणं च सर्वम्। इति हेतोः पक्षधर्मसिद्धिः। न चायमसिद्धः सुखं प्रतिभासते रूपं प्रतिभासते इति सर्वत्र प्रतिभाससमानाधिकरणत्वस्य प्रतीतेरन्यथा सद्भावासिद्धेः। न प्रतिभासमानस्यापि सद्भावे सर्वस्य मनोरथसिद्धिप्रसङ्गान्न किंचित्सत्त्वं स्यात्। अथ प्रतिभासव्यतिरिक्तस्य प्रतिभास्यस्यार्थस्याभ्युपगमे चोपचारात्प्रतिभाससमानाधिकरणत्वव्यवस्थितेः प्रतिभासस्वरूपस्य मुख्यतोपपत्तेरसिद्धो हेतुरिति मतम्, तदप्यसम्यक् प्रतिभास्यप्रतिभासकयोरत्यन्तभेदानुपपत्तेः। प्रतिभासस्य हेतुत्वात्प्रतिभास्योऽर्थ इति चेत्, न, प्रतिभासमात्रस्याहेतुकत्वात्कस्यचित् हेतुत्वायोगात्। यदप्युक्तम्

साधनत्वापत्तेः, प्रत्यक्षानुमानागमयोरिव स्वसंवेदनप्रत्यक्षस्यापि साधनस्याभावात्, स्वतः सिद्ध मस्तीत्यभ्युपगमे द्वैतमपि स्वतः सकल-
साधनाभावेऽपि किं न सिध्येत्? तत्त्वोपप्लवमात्र वा? नैरात्म्यं वा? स्वाभिलापमात्राविशेषात्, सर्वस्य सर्वमनोरथसिद्धिरपि दुर्नि
वारा स्यात्। एतेनैतदपि प्रत्याख्यातं यदुक्तं बृहदारण्यकवार्तिके "आत्मापि सदिदं ब्रह्म मोहात्पारोक्ष्यदूषितम्। ब्रह्मापि स तथैवात्मा
सद्वितीयतयेक्ष्यते ॥ १ ॥ आत्मा ब्रह्मेति पारोक्ष्यसद्वितीयत्वबाधनात्। पुमर्थे निश्चितं शास्त्रमिति सिद्धं समीहितम् ॥ २ ॥" इति, मोह
स्याविद्यारूपस्याकिंचिद्रूपत्वे पारोक्ष्यदूषितत्वाघटनात् सद्वितीयत्वदर्शननिबन्धनत्वासंभवात् तस्य वस्तुरूपत्वे द्वैतसिद्धिप्रसक्तेस्तत एव पारो-
क्ष्यसद्वितीयत्वयोर्बोधनात्, पुमर्थे निश्चितं शास्त्रमित्येतस्यापि द्वैतसाधनत्वात्, शास्त्रपुमर्थयोर्भेदाभावे साध्यसाधनभावासंभवात् ॥ २६ ॥

तदभावानुपपत्तेः प्रतिभासस्वरूपाभावानुपपत्तेः, 'तर्हीति' प्रतिभासविषयतया अभेदनियतत्वादिति भावः। यदि
पुनरागमोऽपीति मृन्मयगजमानेऽपि मृज्ज्ञानवत् सर्वत्र ब्रह्ममानेन तद्विषयत्वेनैवागमज्ञानस्यापि सत्यत्वादिति भावः।
'ऊर्ध्वमूलमिति' ऊर्ध्वं शुद्धबुद्धस्वरूपावस्था मूलं यस्य स तथा तम्, अधोऽविद्याजन्यप्रपञ्चविशिष्टावस्था शाखा यस्य
स तथा तम्, असिद्धस्य स्यादिति विशिष्याज्ञानादित्यर्थः, सामान्यज्ञानं तु सन्देहाविरोधि, सर्वं ज्ञानं धर्म्यमविपर्ययं चेति
सन्देहस्याप्यन्ततः सम्भवादिति समर्थ्यम्, स्वविषयस्य प्रतिभासस्य, सर्वथा भेदवत् सर्वथा भेदपक्ष इव। कथञ्चिद्भेद-
पक्षसिद्धेरिति स्वरूपपदस्य विशेषपरत्वादिति भावः। साध्यस्यैव साधनस्यापत्तेर्भेदान्तर्भावात्, साधनस्य पृथक्सा
धनत्वेन विवक्षितस्याभावादित्यन्वयः। किं न सिध्येदिति, श्रुतेरद्वैतविषयिण्या इव द्वैतविषयिण्या अपि बहुश उपल
म्भादित्यर्थः। स्वस्याभ्युपगममात्रेण चान्योऽप्यतिप्रसङ्गो दुर्निवार इत्याह—तत्त्वोपप्लवमात्र वेत्यादिना, आत्मापीति

विक्षेपस्याभावादित्यर्थः, ' परब्रह्मणीत्यादि ' अविद्यावति विद्याभावेनैव विद्याया विरोधः, तद्रहिते चाविद्यानिवृत्ति प्रयोजनाभावे विद्याया आनर्थक्यमित्यर्थः, ' अविद्यायामेवेति ' असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते इति वच नादित्यर्थः, ' ब्रह्माधारायाश्चेति ' ब्रह्माश्रयायामित्यर्थः, नहि स्वतः स्फुरद्रूपं ब्रह्म विद्याया आश्रयो भवितुमर्हति, दीप ज्योतिरिव तिमिरस्येति भावः, अस्तु तर्हि ब्रह्मविषया जीवाश्रयाऽविद्येति मतम्, तत्राह–' यतश्चेति ' यदैवाविद्याऽस्तीति जीवब्रह्मानुभूतिमकुरुते तदैव सा नश्यति, प्रमाणबाध्यस्वरूपत्वादस्या इत्यप्रामाणिकैवेयम् । अविज्ञात इति विक्षेपश्च ज्ञानाभावादित्यर्थः तदपाधनाद्विद्याया अबाधनात्, अव्यवस्थानमविद्याया इत्यर्थः । अबाधितायाः बुद्धेर्विद्यायाः, भूयात्स्यायोगादविद्यात्वस्य वस्तुमशक्यत्वात् । मानाघातासहिष्णुत्वं प्रमाणप्रवृत्त्यसहिष्णुत्वम्, स्वानुभवाश्रयत्वा दिति, अहं मां न जानामीत्यनुभवस्यैवानिर्वचनीयभावरूपाज्ञानसाधिस्वादिति भावः । कथञ्चिद्वस्तुत्वादिति पर्युदासा श्रयणस्यान्यथानुपपत्तेरिति भावः । तथा वस्तुत्वेऽविद्याया, यथा यत्रेति, स्वसंवेदनापेक्षया सर्वत्राविद्यायां विद्यात्वमि- ष्टमेवेत्यर्थः, न च कथञ्चिदिति कालमेदाद्विषयमेदाद्वैकत्राप्यात्मनि विद्यात्वेनाविद्यात्वमविरुद्धमिति भावः । तत्फ लस्य मतिज्ञानश्रुतज्ञानादिरूपपूर्वविद्याफलस्य, सकलविद्यालक्षणस्य केवलज्ञानस्वरूपस्य, तभिन्नफलत्वं त्विष्टमेव, तद्य परस्य ज्ञानरूपफलस्याभावात्, तदाहुः–श्रीसिद्धसेनदिवाकरपादाः–" दोषपक्तिर्मतिज्ञानाच्च किञ्चिदपि केवलात् ॥ तमः- प्रचयनिःशेषविशुद्धिफलमेव तत् ॥ १ ॥ ' श्रीहरिभद्रसूरयस्त्वस्यापि परममुक्तिरूपफलमधिकृत्य परापरफलत्वं स्वी- चक्रुः । तदुक्तं षोडशप्रकरणे–" एतद्योगफलं तत्परापरं दृश्यते परमनेन ॥ तत्त्वं पदृष्ट्वा निवर्तते दर्शनाकाङ्क्षा

॥ १ ॥" इति कथञ्चित्प्रमाणोत्थेति ज्ञानेन विषयस्याबाधनादित्यर्थः । सैव कथञ्चिदित्येव, स्वसंवेदनविज्ञाना दित्यर्थः, कथञ्चिद्गुरुमतिप्रमेयापेक्षया, कथञ्चिद्बाधितताया इति मायाप्रमेयापेक्षयाऽबाधितताया अपि परिप्रमेयापेक्षया बाधिताया इत्यर्थः । अहं मां न जानामीति प्रतीतिश्च विशेषज्ञानाभावविषया, न भावरूपाज्ञानविषया, अन्यथाऽहमहं किमपि न जानामीति प्रतीत्या सर्वविषयज्ञानसिद्धेस्तदभिलापये सर्वविषयकं तत्त्वज्ञानमेष्टव्यम्, तच्च तवानिष्टमिति विपरीतसिद्ध्यापत्तेः, तस्मादज्ञाननिमित्तकप्रपञ्चप्रतिपादकमद्वैतदर्शनं प्रामाणिकं नाम । स्यादेतत्प्रपञ्चसत्यत्वनादेवामेवपर्यवसानेऽद्वैतसिद्धिर्भविष्यति, तथा च भीरुर्यः—कोऽसौ भेदो नाम? यदीयोऽद्वैतविरोधित्वमुच्यते, स हि स्वरूपं वा स्वावधितरेतराभावो वा धर्मान्तरं वा, नाद्यो भिन्नेऽभिन्नभ्रमानुत्पत्तिप्रसङ्गात्, भ्रान्त्यापि धर्मिस्वरूपावगाहनात्, न भ्रान्तत्वादेवाविषयविभ्रमानुपपत्तिः, तदुपादानाज्ञानाभावात्, मतस्मिन् स एवायमिति प्रत्यभिज्ञाभासार्थस्यैवात्र यथान्वयेनेष्टत्वात्, अत्रापि धर्मारोपोपगमे तादात्म्याभावस्य संसर्गाभावप्रवेशापत्तेः, स्वरूपमेवाग्रहेऽभेदधर्मस्याप्यारोपत्वात् । नापि द्वितीयः, प्रतीतावन्योन्याश्रयप्रसङ्गात्, प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिविषयस्य भावत्वेनास्मृतौ प्रतियोगिस्मृतिश्च तद्ग्रहणकारणमतो नान्योन्याश्रय इति चेत्, न, वस्तुतोऽन्योन्याभावस्य कुम्भपटोभयप्रतियोगिकाभयत्वेन पटे निषिध्यमाने कुम्भस्यापि निषेधापत्तेः । प्रत्येकप्रतियोगिताभयतयोर्भिन्नत्वादेकस्य प्रतियोगिताभयतान्यतरनिरूपकत्वेऽन्यस्य तदपेक्षाभावान्न दोष इति चेत्, न, अन्योन्याभावाधिकरणप्रतियोगितया प्रतीतेरन्योन्याभावग्रहात् पूर्वमयोगाद्विशिष्टप्रतीतौ विशेषणप्रतीतेर्हेतुत्वात्, यस्य कस्यचित् प्रतियोगितयाऽधिकरणतया च प्रतीतेर्हेतुत्वात्, यत्र भिन्नेऽभेदभ्रमस्तत्रान्यपदस्थे भ्रमविषयस्य स्वाभावप्रतियोगित्वेन तदेवे

च धर्मिणः सत्त्वाधारतया प्रतीतावप्यन्योन्याभावप्रतीत्यनुपपत्तेः, प्रतियोगिबुद्धौ स्मृतिस्तस्य प्रयोजकत्वेऽपि योऽसौ तत्र नासीत् सोऽयमिति स्मर्यमाणाभावप्रतियोगित्वेऽपि वस्तुगत्या भिन्नस्याभिन्नतया भ्रमेणोल्लिख्यमानस्यान्योन्याभावप्रतीत्यनुदयात्। दोषाभावोऽपि हेतुः स भ्रमोदाहरणे नास्तीति चेत्, न। पूर्वदृष्टस्मृतिमता ततो वस्तुगत्याऽन्यस्यैवानन्तरदृष्टस्य पूर्वदृष्टाभिन्नाभिमतयाऽनिरूपितस्यापि सम्भवेन तत्रेतरेतराभावबुद्ध्यापत्तेः। दुष्यत एव तत्र स इति चेत्, न, पश्चात्तत्र संशयस्य दर्शनात्, विशेषधीरपि तत्र हेतुरिति चेत्, न, विशेषत्वस्यान्योन्याभावनिरूपण विना दुर्निरूपत्वात्। एतेन वस्तुगत्या प्रतियोगिनः स्वरूपेण स्मृतिर्वस्तुगत्या चाधिकरणस्य स्वरूपेण प्रतीतिर्हेतुरित्यपि निराकृतम्, भिन्नस्याभिन्नतया शुक्त्यादेः प्रतीयमानस्यान्योन्याभाववत्तया ग्रहणप्रसङ्गात्। नापि तृतीयः, अभावस्य निर्धर्मकत्वापक्षे तस्य विश्वाभिन्नत्वप्रसक्तौ विश्वस्याभावरूपत्वेन निर्धर्मकत्वयाऽन्योन्यभेदविरहेण ऐकरूप्यापत्तेः। अभावे धर्माभावात् स्वरूपमेव भेद इति चेत्, न। तस्य निष्प्रतियोगिकत्वेन भेदत्वस्य वक्तुमशक्यत्वात्, निष्प्रतियोगिकेनापि तेन सप्रतियोगिकव्यवहारजननाभ्युपगमे च प्रतियोगिनियमाभावात् स्वस्मादपि भेदव्यवहारोत्पत्तिप्रसङ्गात्। किञ्च धर्मान्तरं भेद इति ब्रुवतः कोऽभिसन्धिः, किं घटत्वादय एव भेदाः, उत भेदो नामान्य एवैकः कश्चिद्धर्मः, आद्ये घटत्वादीनां सप्रतियोगिकत्वप्रसङ्गः, भेदस्य सप्रतियोगिकत्वात्, न च घटत्वादयस्तथा, पटाद्यनपेक्ष्य तेषां प्रतीतेः। यदा पटाद्यपेक्षया प्रतीयन्ते तदा भेदव्यवहारं कुर्वन्तीति चेत्, प्रतीतौ कस्य पटाद्यपेक्षेति वाच्यं, किं घटत्वादेरुत तद्धर्मस्य कस्यचित्, आद्ये पटाद्यपेक्षामन्तरेण कदापि घटत्वप्रतीत्यनुपपत्तिप्रसङ्गो, न हि यदन्तरेण यदुत्पद्यते तत्तत्कारणकं नाम, यथाविधामान्तरभाविभेदेन कारणभेदस्य

परिहार्यीकर्तुमशक्यत्वात्, साक्षात्कारवादिना सह परापरभावानुपपत्तेः, जात्योः परस्परं संकरभिन्नतामपि मते पञ्चम्याऽभिधानः प्रतिपाद्यमानः केन समन्वियात्, न तावद् घटत्वेन, तस्यावधिघटितत्वे तथैव घटं प्रतीत्यापत्तेः। तद्भेदेति चेत्, तर्हि द्वितीयो विकल्पः, तत्र च स एव सापेक्षप्रतिपत्तिर्भेदो ननु घटत्वादिः, घटत्वादेश्च स भेदः स्यात् तद्धर्मः स्यात्, घटादेस्तु भेदपर्यनुयोगे तदभिधानमसङ्गतम्, कथं च मिथोऽनुगतभेदव्यवहारः स्यात्, तथा सति वा किं न तैरेव सत्तादिव्यवहारोऽपि स्यात्। नापि द्वितीयोऽनभ्युपगमात्, सप्तपदार्थ्यनन्तर्भावप्रसङ्गात्। ननु घटत्वादय एव भेदो घटत्वादिज्ञानाविशेषेऽपि च प्रतियोगिभिज्ञानसहकारिवशाद्विचित्रव्यवहारोपपत्तिरिति चेत्, न, व्यवहारसत्यत्वार्थं वास्तवार्थमतविशेषस्यावश्यं स्वीकर्तव्यत्वे तत्रैव पर्यनुयोगानुवृत्तेः, अनन्तभेदपरम्पराभ्युपगमे च तत्क्रमभेदपदायां प्रतीत्यपर्यवसानात्, तद्युगपद्भेदतायामनन्तत्वात् दुःसाध्यतया कस्यचिदन्यभेदस्यान्यधीयतयाऽपि प्रहसम्भवादिना सर्वत्र प्रामाण्यानाश्वासप्रसङ्गात्। किञ्च घटत्वादेर्भेदत्वेऽभिभूतघटत्वादिसापेक्षप्रतिपत्तिकत्वायां घटत्ववत्पटत्वस्यापि भेदरूपस्य भेदावधिप्रतिपत्तिसापेक्षतयाऽवश्यं घटत्वादिनो घटत्वादिप्रतीत्यपेक्षायामन्योन्याश्रयप्रसङ्गः। भेदरूपत्वे घटत्वादरवधिप्रतीत्यपेक्षा न तु स्वरूपमात्रप्रतिपत्तौ, स्वरूपमात्रेण चावधित्वं तद् क्व एकमिति चेत्, भेदरूपता यदि तस्य स्वात्मैव, तदा स्वरूपमात्रप्रतिपत्तौ नावध्यपेक्षेति सत्यं वचनम्, अथ धर्मान्तरं, तदा स एव भेदोऽस्तु, कृत तद्रूपता घटत्वादेर्भेदरूपतेति प्रक्रियाकल्पनया। अस्तु स एव धर्मान्तरं भेद इति चेत्, न, दूषितत्वात्। अथास्तु स्वरूपादित्रयं भेद इति चेत्, न, तद्व्यवहारस्यैकाकारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकारप्रतीतेरपि कथमेकनिमित्तसिद्धौ प्रमाणत्वं, व्यभिचारात्, सामान्य

विशेषैरेव परसामान्यस्य बुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्तेः । किञ्च भेदे भेदान्तरमस्ति न वा, आद्येऽनवस्था, द्वितीये सद्भाव एव स्यात्, तद्धर्मिण्येव तत्प्रवेशात् । भेदस्वभावत्वात् स्वात्मन्यपि स्वयमेव तद्व्यवहारमयं करोति सत्तेव सद्व्यवहारमिति चेत्, न, अस्य भेदस्य स्वात्मप्रतियोगित्वेन स्वाश्रयत्वेन चाङ्गीकारे स्वस्मादपि स्वस्य भेदप्रतीतिव्यवहारयोः प्रामाण्यप्रसङ्गात् । न वयं स्वात्मा स्वाधिकरणं स्वावधिरित्यभ्युपगच्छामः, किन्तु धर्मान्तरे तत्प्रतियोगिके तदाधारके वा स्वीकृतौ यौ बुद्धिव्यवहारावुत्पद्येते तावनवस्थाभयाद्धर्मान्तरमन्तरेणैव स्वभावभेदः करोतीति ब्रूम इति चेत्, यद्यन्यत्र स्वीकृतौ यौ बुद्धिव्यवहारावुत्पद्येते तावन्तरेणात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता स्यात्, यस्य च स्वभावस्य बलेनेदृशी सा यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र विना धर्मान्तरमुत्पद्यत इति भ्रान्ता भवति, जायते स दोषः स्यात्, यथा सत्यरजते रजतत्वप्रतीती रजतत्वादुत्पन्ना विनापि धर्मान्तरमन्यत्रोत्पद्यत इति भ्रान्ता भवति, यस्य च सामर्थ्यादीदृशी जायते स दोष इत्युच्यते । तत्र रजतत्वं नास्ति अत्र धर्मिरूपोऽपि भेद एव समवलम्बनमिति चेत्, नैवम्, भिन्नप्रतीतिर्विशिष्टविषया भेदत्वाश्रयरूपोभयवस्तुविषयाऽन्यत्र यादृशी सत्याङ्गीकृता ततो मात्रयाऽप्यन्यूनार्थाया इह जायमानाया यदि द्वयं विषयं नाङ्गीकुरुषे तदा गीर्वाणगुरुणापि दुर्निवारं भ्रान्तत्वम्, अथाङ्गीकुरुषे, तदाऽनवस्थाप्रसङ्गः । अथ तदुभयव्यतिरेकेणैवात्र सा सत्या, अन्यत्र तर्हि ततोऽन्यादृशविषया मिथ्या स्यादित्यलं पल्लवेन ॥ अत्रोच्यते—"श्रीहर्षं हर्षेस्त यत्वपवनेऽस्मिन् भेदस्य चेदस्य कटुर्विपाकः । अतन्निधानां भविता पितानैर्ब्रह्मस्तुतौ किं न कृतान्तकोपः ॥१॥" किं चैतेन भेदखण्डनेनाभिमतम्, किं भेदज्ञानमेव नास्ति, सदपि वा नित्यम्, अनित्यमपि वा निर्हेतुकम्, सहेतुकमपि वा निर्विषयम् सविषयमपि वा बाध्यमानविषयम्, तत्र प्रथमः सर्वतो विरोधादनुत्तरः, द्वितीयः सुषुप्त्यवस्थानुरोधादुपेक्षणीयः, तृती

शून्यं ग्राह्यं तत्त्वमिति चेत्, न, तस्य खपुष्पप्रायत्वात्, तद्ग्राहकत्वेनाभिमतस्य ज्ञानस्य सुषुप्तज्ञानतुल्यस्याप्रमाणत्वात्, सुषुप्तज्ञानमप्युत्थानानन्तरसत्यविकल्पदर्शनेन प्रमाणमिति चेत्, तर्हि स्वविषयविकल्पाजननात्ततोऽपि त्वदीयं ग्राह्यज्ञानं हीनतरमस्तु, तदभावे तस्यामेयविषयत्वं भेदविषयत्वं चेत्यत्र संशयानिवृत्तेः वेदान्तवासनामात्रेण तत्प्रामाण्ये पिटकत्रयादिवासनयाऽपि क्षणिकादिज्ञानमपि प्रमाणं स्यादिति न किञ्चिदेतत्, "यस्त्वपरान मण्डनहेतुरस्मिन्मते रते सद्दर्शनक्षतामम्। येषान्तवादेऽपि च शून्यवादे यथा भवन्तस्य विडम्बनं तत् ॥ १ ॥ एतोऽस्तयः स्यात्परसंकथानां स्याद्वादयूनः किल यस्मानेत्। यथाः सहन्ते रतियुद्धमेतम महायुद्ध परतीर्थिकानाम् ॥ २ ॥" प्रमाणैतदूप्यं सर्वादेतेऽप्यतिदिशति–'सर्वेतेनेत्यादि' ॥ २७ ॥

इत्यनैकान्त्यापवारणम् पृथक्त्वैकान्तानङ्गीकरणादिति मावनीयम्। यस्मात्,—

**पृथक्त्वैकान्तपक्षेऽपि पृथक्त्वादपृथक् तु तौ। पृथक्त्वे न पृथक्त्वं स्यादनेकस्थो ह्यसौ गुणः ॥ २८ ॥**

पृथगेव द्रव्यादिपदार्थाः प्रमाणादिपदार्थाश्च, पृथक्प्रत्ययविषयत्वात् सह्यविन्ध्यवदित्येकान्तः पृथक्त्वैकान्तः, सजातीयविजातीयव्यावृत्ता निरन्वयविनश्वरा बहिरन्तश्च परमाणवः इत्यभिनिवेशश्च। तत्र येषां पृथक्त्वगुणयोगात् पृथक् पदार्थाः इत्यागमस्ते एवं तावत्प्रष्टव्याः—किं पृथग्भूतपदार्थेभ्यः पृथक्त्वं गुणः पृथग्भूतोऽपृथग्भूतो वा ?, न तावदुत्तरः पक्षो गुणगुणिनोर्भेदोपगमात्। नापि प्रथमः पृथग्भूतपदार्थेभ्यः पृथक्त्वस्य पृथग्भावे तेषामपृथक्त्वप्रसङ्गात्। पृथक्त्वस्य तद्गुणत्वात् पृथगिति प्रत्ययस्य तदालम्बनत्वात् तेषामपृथक्त्वप्रसङ्ग इति चेत्, न, तस्य कथञ्चित्तादात्म्यापत्तेः पृथक्त्वैकान्तविरोधात्। तद्गुणगुणिनोरतादात्म्ये घटपटवद्व्यपदेशोऽपि मा

वीति' आदिनानुयोगिपरिग्रहः। तथा च घटप्रतियोगिकत्वपटानुयोगिकत्वाभ्यां घटपटसंयोगयोर्भिन्नत्वम्, न त्वेकत्वम्, घटे
पटाभ्यवधानात्मनः पटे घटाभ्यवधानात्मनश्च संयोगस्यैकत्वायोगादित्युक्तं भवति, सादृश्योपचारादिति, तच्च घनीभूता
वृत्तिरेव च पर्याप्तिः, अन्यथा प्रत्येकावृत्तेः समुदायवृत्तित्वायोगात्, कथं चान्यतरकर्मजत्वमन्यतरकर्माभावजत्वमन्यतरकर्मजे
उभयकर्मजे च तत्तत्कर्मजत्वेन भेदकम्, अन्यथोभयकर्मजन्यतावच्छेदिकाया इव त्र्यकर्मादिजन्यतावच्छेदिकाया अपि जातेर
भ्युपगमप्रसङ्गात्, नो चेत्, कर्मत्रयस्थले उभयकर्मजसंयोगद्वयापत्तेः, एवमत्रेऽपि नानासंयोगस्वीकारे आदित एव किं न
तत्स्वीकारः। यदि च समवायिकारणभेदेऽपि संयोगाद्यैक्यं स्वीक्रियेत, तदा घटादौ यावदवयवरूपमप्येकं स्यादेकत्वप्रतीत्य
विशेषात्। यावदाश्रयबुद्धिसापेक्षत्वासापेक्षत्वाभ्यां विशेष इति चेत्, न, रूपादिप्रतीतेरप्याश्रये पर्याप्तत्वापर्याप्तत्वानवगाहने न
द्विविधरूपत्वादित्याद्यधिकं वादमालायां निरूपितमस्माभिः। 'द्वित्वादिरिति' एकत्वद्वयादिनैव द्वित्वादिबुद्धिव्यवहा
रोपपत्तेरिति भावः। तथा च न पृथक्त्वं नाम गुणः स्यादिति। नन्वत्रेदापत्तिः, नैयायिकमूर्धाभिषिक्तेन शिरोमणिमहाचार्येण
पृथक्त्वस्यान्योन्याभावरूपस्यैव स्वीकारात्, तथा च तद्ग्रन्थः। पृथक्त्वमपि न गुणान्तरम्, अन्योन्याभावादेव तद्व्यवहा
रोपपत्तेः, पृथक्त्वप्रतीतिस्तु न सावधित्वालम्बना, मानाभावात्, घटात्पटः पृथगितरोऽन्यो भिन्नोऽर्थान्तरमित्यादौ तदवच्छिन्न
विशेष्ययोगे पञ्चम्यानुशासनिकीति अन्यारादित्यादिसूत्रेऽन्यपदं विशिष्य पृथगादिपरं न त्वन्योन्याभावविशिष्टबोधकपदसा-
मान्यपरमिति पृथक्त्वस्यान्योन्याभावरूपत्वेऽपि घटात्पटः पृथगित्यस्येव घटाच्च पट इत्यस्य नापत्तिरित्येतदर्थं इति चेत्, सत्यम्,
पृथक्त्वस्यान्योन्याभावरूपत्वेऽप्यमेवसंवलितत्वेन तदेकान्तायोग इत्यत्र ग्रन्थकृतस्तात्पर्यात्, वस्तुतो मूले वृक्षः कपिसंयोगी

न शक्यमिति प्रतीत्यनुरोधेनान्योन्याभावाभ्युपगमवादिनो दीधितिकृतो मते श्यामाद्रक्तो विधर्मा न तु पृथगिति प्रती त्यनुपपत्तेः पृथक्त्वं नान्योन्याभावः सम्पद्यते, किन्तु प्रविभक्तप्रदेशत्वम्, इत्यमेव तन्तुभ्यः पटो न पृथगित्यस्योपपत्तेः। न च श्यामाद्रक्तो विधर्मा न तु पृथगित्यत्र पृथक्त्वस्य तद्वृत्त्यवच्छिन्नभेदपरत्वानुपपत्तिः सम्भवति, प्रकारान्तरे तथाभावस्यातिप्रसक्तत्वात्, श्यामात् पटात् रक्तो पटो न पृथक्त्वं किन्तु पटादित्यत्र श्यामपटाप्रविभक्तपटाप्रविभक्तप्रदेशत्वापेक्षविशेष्यवाक्योपस्यस्मत्तुल्यप्रकारं विनानुपपत्तेरेति विचारणीयं सुधीभिः ॥ २८ ॥

सांप्रतं निरन्वयक्षणिकपक्षे दूषणमाविर्भावयितुमनसः सूरयः प्राहुः—

सतानः समुदायश्च साधर्म्यं च निरङ्कुशः । प्रेत्यभावश्च तत्सर्वं न स्यादेकत्वनिह्नवे ॥ २९ ॥

जीवादिद्रव्यैकत्वस्य निह्नवे संतानो न स्यात्प्रसंतानाभिमतवदन्वयात्। नवैकस्कन्धावयवानामेकत्वपरिणामापह्नवे समुदायो न स्यात्सामान्यसमुदायवत्। तथा सधर्मस्वामिमतानां सदृशपरिणामैकत्वापह्नवे साधर्म्यं न स्याद्विसदृशार्थवत्। मृत्वा पुनर्भवनं प्रेत्यभावः। सोपि न स्यादनवस्थानुभाव्यैकात्म्याऽपाकरणे नामास्मवत्। तत्सम्यादत्यभावि सर्वं न स्यादनुम्। न च तदभावः शक्यः प्रतिपादयितुम्, सकलजनप्रसिद्धस्यापेक्ष निराकृतत्वात्। ननु चापरापरोत्पादेषुः कार्यकारणभूता एव संतानः। स चैकत्वनिह्नवेपि घटते सर्वेष्वपि ये समानसंताने तेषामपि कार्यकारणयोः पृथक्त्वैकान्ते कार्यकालमात्मानमलभमानः कारणत्वासंभवादनुपपत्तेः कुतः संततिः? नतु कार्यकाले स्तोपि कारणत्वे तत्कारणस्यानभिमतस्य कार्यकालमात्मानं लभतः सर्वस्य तत्कारणत्वप्रसङ्गः। कार्योत्करेण प्रागसतः सद्भावादिरूपेण प्राक्पर्यकाले च सततत्कार्यस्योत्पत्तौ कारादिमत्त्वे विपाद्यमेदत्वपि किन्न स्यात्? गवादिविशिष्टीव तथापि तस्य

मेचकज्ञाननिर्भासविशेषैरणकरणाभिरनुग्रहसाधिता ॥ २९ ॥

सन्तानो न स्यादिति मुक्तास्थानीयानां क्षणानां मालास्थानीयस्यानुगमकस्याभावादित्यर्थः । नानास्कन्धावय-
यवादिति, न च धान्यराशिवदुपपत्तिः, पुद्गलवादेकत्वादवयवमन्वकत्वस्यैकत्वस्य विलक्षणत्वात्, साधर्म्यं न स्यादिति,
तथा च समानपरिणामैकत्वमाश्रित्य सोऽयं शब्द इति प्रयोगो न स्यादित्यतो च तदुभयकत्वैक्यं समानपरिणामैक्यं चादाय
सोऽयमित्येव प्रयोगस्तद्द्रव्यकत्वाभिमोऽयं तज्जातीयोऽयमिति विषयद्वैविध्येऽपि प्रयोगैक्यादिति द्रष्टव्यम् ॥ 'सकलेत्यादि'
तथा च निरङ्कुशत्वं बाधारहितत्वं विशेषणं यथास्थितं विचारितं वा सर्वत्र योजनीयम्, तेन न तत् सर्वमित्यनेन सर्वत्र सत्वरा
मर्माद्यनुपपत्तिरिति बोध्यम् ॥ पूर्वं सतीति अव्यवहितप्राक्काले सामग्रीसत्त्वं कार्योत्पत्तिप्रयोजकं न तु कार्यस्य प्राक्सत्त्वमसत्त्वं
वेति भावः । 'स्वकाले इति' स्वाव्यवहितप्राक्काल इत्यर्थः, स्वदेशे सति कारणे यथा कार्यमुत्पद्यते तथा स्वकालेऽपीति देशि
कालिकव्याप्तिगर्भमेकं कारणत्वमिति भावः । 'तथा मुक्तेतरेति' अनुभवकाभावेन देशस्यापि क्षणत्वाद्दैशिककालिक-
व्याप्त्योरभेदपर्यवसानादित्यर्थः । 'सन्तानान्तरेत्यादि' सन्तानान्तरविषयकारणे साकारणे सन्ताने मुद्धचित्तस्यासर्व-
ज्ञत्वप्रसङ्गादित्यर्थः । अविरुद्धपात्मनोः पर्यायस्वरूपयोः, अन्वयः द्रव्यात्मनैकत्वम्, कथञ्चिदैक्यमेवेति नीलाद्यने
कनिर्भासपर्यायज्ञानात्मना तत्काले तदात्मद्रव्यपरिणामकत्वमैक्यमित्यर्थः । समनन्तरोपलम्भनियमादनुभवस्मरणयोरेकवि
षयस्पर्शनियमात्, कथञ्चिदैक्यं कथं न स्यादिति निश्चितैकप्रकारकं विशेषणानामैक्यं स्यादेवेत्यर्थः, कालसमनन्तरो
पलम्भनियमात् सादृश्यप्रत्यासत्तिमदनुभवनियमात्, देशासमनन्तरोपलम्भनियमाभेदप्रत्यासत्तिलक्षण

यमानवमुपामम्यः पृथक्स्वैकाम्यवार्या वायागवामां वैशेषिकमत् ॥ १० ॥

समुदायत्वमिव यस्य न, सवन्तरस्य स्थिति, यथस्यैकपटापेक्षयाऽन्यपटे पटान्तरत्वव्यवहारवत् मेयापेक्षया ज्ञाने सवन्तरत्वव्यवहारोऽपि सम्भवी तथापि प्रतिनियतप्रतियोगिसञ्ज्ञापकपदसमभिव्याहारामावादयं निषेधो द्रष्टव्यः। प्रागुद्दिष्टधर्मविशिष्टान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यान्वयितावच्छेदकमस्य चान्तरपदार्थत्वात्। वास्तवसत्सामान्यात्मनेति सत्सामान्यनिष्ठप्रतियोगितामिमज्ञेयनिष्ठप्रतियोगिताके मानाधिकरणके भेदोऽभ्युपगम्यमान इत्यर्थः। परैरपि हि प्रतियोगितावच्छेदकावच्छिन्नसत्त्वसामान्यविरोधित्वात् सामान्यरूपेण विशेषाभावो न स्वीक्रियते तथाऽस्माभिरपि सामान्यात्मना विशेषाभाव इति मन्तव्यम्। तथा चेति यावद्विशेषभेदस्य सामान्यभेदनियतत्वादिति भावः। तादात्म्यमित्यनन्तरमेष्टव्यमिति शेषः। सामान्यस्यावास्तवत्वे दोषान्तरं समुद्भावयितुमाह ॥ २० ॥ किञ्च,—

## सामान्यार्था गिरोन्येषां विशेषो नाभिलप्यते। सामान्याभावतस्तेषां मृषैव सकला गिरः ॥ २१ ॥

सामान्यमेवार्थोऽभिधेयो यासां ताः सामान्यार्था गिरो भवतामिर्विशेषो नाभिलप्यते इत्यन्ये, तेषां मृषैव सकलाः स्वयं सत्यत्वेनाभिमता अपि गिरः स्युः, सामान्यस्य वास्तवत्वाभावात्। कुतः पुनः सामान्यस्यैवाभिधेयत्वमिति चेत्, विशेषाणामनन्त्यसमवत्वात्। न समस्ता विशेषा शक्याः संकेतयितुं ततो नाभिधीयेरन्, असंकेतितानभिधानात्। विशेषदर्शनमवग्रहणप्रतिभासनार्थसन्निधानापेक्षणात्। न हि स्वलक्षणे दर्शने यथा संकेतनिरपेक्षो विशेषः प्रतिभासते तथा शब्दमुखादपि, तस्याः स्वलक्षणसंनिपातानपेक्षत्वात्, तदपेक्षत्वेऽतीतानुत्पन्नादिषु शब्दवृत्तेरभावप्रसङ्गात्। यथैवं स्वलक्षणमनभिधेयं सामान्यमपरमुच्यते इति यस्तु

अभिधानस्य स्वाभिधानं मुक्त्वा विशेषस्यासंभवात् । न वै परमार्थैकतानत्वमभिधाननियमः, परमार्थैकतानत्वे शब्दानामभिनिबन्ध
न स्यात् प्रवृत्तिरर्थेषु समयान्तरभेदिष्विति वचनात् । किं तूपादानविशेषादित्यपि वार्तम् अविकल्पेऽपि तथैव प्रसङ्गात् । शक्यं हि
वक्तुम् अविकल्पकप्रत्यक्षस्य न परमार्थैकतानत्वनियमो द्विचन्द्रादिदर्शनाभावप्रसङ्गात् किन्तूपादानस्य सवासनाविशेषस्य भेदात्
इति । तदेवमयथार्थसमर्थं वस्तु स्वरूपमयापनीयमेव विकल्पेनेवाविकल्पेनाप्यवधारयितुमशक्तेः । निर्विकल्पकस्यार्थसन्निधानान
पेक्षत्वादक्षजत्वात् परमार्थैकतानत्वमिति चेत्, न, तदसिद्धत्वात् । तथा हि । नायनमिन्द्रियज्ञानमर्थसन्निधानमपेक्षते विद्युदाभा
प्रसङ्गात् । नापि विशदात्मकत्वेन दूरेऽपि तथावभासप्रसङ्गापायाऽऽयात् । न हि यादृगेवार्थे निर्विकल्पकमिन्द्रियज्ञानम् न पुनर्दू
इति शक्यं वक्तुम्, इन्द्रियान्वयव्यतिरेकानुविधानाविशेषात् । दूरार्थेपीन्द्रियज्ञानं विशदात्मकत्वेन तत्रावैशद्यस्याक्षज्ञानान्तरवि
कल्पेन सहैकत्वाध्यारोपादेव प्रतीतेरिति चेत्, न, आसन्नार्थेऽपि तद्वैशद्यप्रतीतिप्रसङ्गात् । न हि तत्राविकल्पानन्तरं चिरविकल्पस्यसं
त्वपि पुरोवर्तिन्यर्थेऽप्रमाणकविकल्पवैशद्यस्य तन्मुखनिबन्धनत्वाभावप्रसङ्गात् ' विमूढो लघुवृत्तेर्वा तयोरैक्यं व्यवस्यति " इति
वचनविरोधात् । यदि पुनरासन्नार्थे निर्विकल्पकस्य वैशद्यस्यात्मीयवैशद्येनानन्तरविकल्पावैशद्यस्याभिभवाद्वैशद्यप्रतिभासो न पुनर्दू
विप्रकर्षादिति मतम्, तदा पुरोवर्तिगोदर्शनवैशद्येनाश्वविकल्पावैशद्यस्याभिभूतिप्रसङ्गात् तत्र वैशद्यप्रतीतिः किं न स्यात् ? गोदर्शनभिन्नवि
षयत्वादश्वविकल्पस्य नैवमिति चेत् न नीलदर्शनविकल्पयोरपि भिन्नविषयत्वात्तद्वैशद्यप्रतीतिप्रसङ्गात् । न हि तयोरभिन्नविषयत्वम्

स्वलक्षणसामान्ययोस्तद्विषययोर्भेदात् । तत्र दृश्यविकल्प्ययोरेकत्वाध्यवसायात्तीतविकल्पे वैशद्यप्रतिभास इति चेत्, न, तत एव दूरेऽपि वैशद्यप्रतिभासप्रसङ्गात् । स्यान्मतम् प्रत्यासन्नेऽर्थे विकल्पे दृश्यस्याध्यारोपाद्विकल्पवैशद्यं दूरे तु दृश्ये विकल्प्यस्याध्यारोपात् दर्शनावैशद्यं प्रतीयते व्यामिश्रिभ्रमात् इति, तदप्यसारम्, चन्द्रार्कादिष्वतिदूरे दृश्ये विकल्प्याध्यारोपादवैशद्यप्रतीतिप्रसङ्गात्, प्रत्यासन्नतरे च चक्षुषः करतलरेखादौ विकल्प्ये दृश्याध्यारोपाद्वैशद्यप्रसङ्गात् । यदि पुनरदृष्टविशेषवशाद् दृश्यविकल्प्ययोरेकत्वाध्यारोपविशेषेऽपि क्वचिद्वैशद्यमवैशद्यं च यथाप्रतीत्यभिधीयते तदा तत एवेन्द्रियजत्वाविशेषेऽपि क्वचिद्वैशद्यप्रतिभासोऽन्यत्रान्यथेति नैकान्तेन दर्शनस्य विशदात्मकत्वमर्थसन्निधानापेक्षस्य वा यतः परमार्थैकतानत्वानियमः स्यात्, न पुनः सम्यक्श्रुतस्योपादाननियमादिति । न सम्यक्श्रुतस्य वस्तुविषयत्वेऽप्युपादाननियमाविशेषः परार्थानुमानस्य वक्त्रभिप्रेतसमये त्रिरूपहेतुसूचितत्वादविसंवादादिवचनाद्विशेष इति चेत् न तथापि क्षणभङ्गादिसाधनवचनमप्यत्र न किंचित् सत्यं स्याद्वक्त्रभिप्रेतमात्रसूचितत्वात् प्रधानेश्वरादिसाधनवाक्यवत् । न हि वक्त्रभिप्रेतमात्रसूचितत्वाविशेषेऽपि क्षणभङ्गादिसाधनं प्रतिपक्षदूषणं वा सत्यं न पुनः प्रधानेश्वरादिसाधनमिति सम्यग्व्यवस्थम्, यतस्तदेव संवादि स्यात्, सर्वथा विशेषाभावात् । तदर्थप्रतिपादनाद्धि न क्षणभङ्गादिसाधनवचने विपक्षदूषणवचने वा सत्यम्, प्रसिद्धार्थीकरणवत् । ननु च व्याख्यातारः खल्वेवं विवेचयन्ति न व्यवहर्तारः । ते हि दृश्यविकल्प्यावर्थावेकीकृत्य यथेष्टं व्यवहरन्ति । क्षणभङ्गादिसाधनवचनमप्यत्र सत्यम्, न प्रधानेश्वरादिसाधनवाक्यम् । परमार्थतस्तु न किंचिद्वचनमवितथम् । इत्यभ्युपगमेऽपि दृश्यविकल्प्यावर्थावेकीकरणयोः कथंचिदप्यतादात्म्ये सत्यकार्यं सर्वथानवधारितरूपं ज्ञानादिचेतोपमाविषयवत् कथं संवीक्षितमितिवर्तेत ? निर्विकल्पकदर्शनात्तदध्यवसायासंभवात् विकल्पानां भावनामात्रविषयत्वात् । सोऽयमविकल्पेतरयोरर्थैकत्वविषयत्वमन्यत्र स्वांशमात्राव

क्षणिका विकल्पान्तरेण प्रत्येतीति सुपरिशोधमप्रो वेषात्मयिषः । न ह्यविकल्पेतरयोरर्थयोरेकार्थविषयत्वं विशेषेणासत्य नाभ्युपगम्य-
वेतररूपत्वं वा येन विकल्पान्तरेण प्रत्येति । तद्युक्तिविषयं युक्तम्, तस्य विकल्पसाधनार्थविषयेनुप्रवेशात् । स्वत एव विकल्पसंविदो
विषयि स्वलक्षणविषयोपि विकल्पः स्यात् । परतश्चेद्व्यवस्थानादप्रतिपत्तिः अतोर्थविकल्पोपि मा भूदित्यवकल्पं जगत् स्यात्,
स्वयमनिश्चयात्मनो विकल्पार्थनिश्चयानुपपत्तेः । न चार्थं परोक्षबुद्धिवादमविशेषे, सर्वार्थचिन्तनोपपत्तेरविशेषात् । यथैव ह्यप्रत्यक्षो
पलम्भस्य पर्यन्तेभिः प्रसिध्यति तथा स्वयमपि भिन्नतात्मोपलम्भस्यापि । स्वयमनिर्णीतेन नामात्मना बुद्धिरर्थं व्यवस्थापयतीति सुष्ठ
वर्णितं तत्त्वम् । न वै स्वरूपं पररूपं वा बुद्धिरध्यवस्यति निर्विकल्पत्वाद्भ्रान्तेः स्वप्नबुद्धिवदिति विभ्रमैकान्तवादिवचनम् । इत्यतो
भ्रान्तत्वं, बहिरन्यत्र सद्भावासिद्धेः । तत्प्रतिभासमानं हि बहिरर्थासत्त्वादेव, न पुनः स्वरूपासत्त्वात् । इदं तु विभ्रमैकान्तसंवेदनं
बहिरन्तरर्थासत्त्वादिति कथं न तद्विशेषे ? न चास्य स्वरूपसत्त्वं, तद्व्यवस्थानस्य विपक्षव्यवच्छेदेन प्रतिपत्तिपथमुपनेतुमशक्तेः ।
स्वपरसमावप्रतिपत्तिशून्येन स्वपरपक्षसाधनदूषणमप्यवस्थो प्रत्येतीति किमपि महाद्भुतम् । संवृत्या प्रत्येतीति चायुक्तम्, कथंचिदपि
परमार्थप्रतिपत्त्यभावे संवृतिप्रतिपत्त्ययोगात् परमार्थविपर्ययरूपत्वात्संवृतेः । अन्यथा परमार्थस्य संवृतिरिति नामकरणमात्रमवाधाकर
मेव परेषामनुषज्येत । सोयं संवृत्या विभ्रमैकान्तसाधनमविभ्रमदूषणं च प्रत्येतीति परमार्थतो न प्रत्येतीति उपेक्षणीयवचन एव ।
तमन्येऽप्यत्यनुमन्यन्ते इत्यचिन्त्यमनस्पतमतमोनिबन्धनमक्षयपर्यन्तगमनमिद्युक्तम् ॥ ११ ॥

किमेतस्यादिना, इत्यन्ये इति, अन्ये सौगताः, स्वयमिति अन्यगिरामसत्यत्वे इष्टापत्तिवारणाय अभिधेयस्वमि-
त्यनन्तरं युक्तिसिद्धमिति शेषो ग्रन्थः । 'समयान्तरमेवेप्सिति' तत्पक्षाप्रसिद्धेषु प्रधानेश्वरापर्येष्वपारमार्थिकेष्वि-

स्पर्शः । उपादानविशेषादितिपक्षविकल्पात् । प्रत्यासत्तेऽर्थ इति दर्शनविषयाध्यारोपाधिष्ठानविषयकत्वं विकल्पस्य वैशद्यं विकल्पविषयाध्यारोपाधिष्ठानविषयकत्वं च दर्शनस्यावैशद्यमित्यर्थः, यद्यप्यत्र दर्शनविकल्पयोरन्तराध्यारोपानवकाशः, औत्तर कालिकमारोपो धर्मिणं विना धर्मानुत्पत्तेरभित्तिचित्रायितः, तथापि सन्निकर्षविप्रकर्षकृतो भेदाग्रह एव वैशद्यावैशद्यव्यवहार हेतुः स्वरूपतो वैशद्यं तु सलक्षणविषमत्वेनेत्यत्र तात्पर्यम्, यथाप्रतीत्यभिधीयत इति तथा व्यवहारस्य तथा प्रतीति-साध्यत्वाक्षेपाग्रहस्य च विशिष्टज्ञानमात्रोच्छेदकत्वेन व्यवहारानन्त्यादिति भावः ॥ परमार्थैकतानत्वाद्वस्त्वेकावलम्बन त्वात्, नियमः स्याद्दर्शनेऽर्थप्रकाशकत्वस्येति गम्यम् । उपादाननियमाद्वासनाविशेषव्याप्तेः । भाष्ये प्रसिद्धालीकवच-नवदिति नदीतीरे मोदकराशयः सन्तीति विप्रतारकवचनवदित्यर्थः । ननु वक्त्रभिप्रायविषयकत्व तदवच्छेदकार्थानुमापकत्वं, तथा चैतानि पदानि वक्तृतात्पर्यविषयसंसर्गप्रमापूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वा ग्रामस्याम दण्डेनेत्यादिपदवदित्यनु मानविषया शब्दप्रामाण्यं ताथागतानां न दुर्वचं काणादसौगतयोः प्रत्यक्षानुमानप्रमाणद्वयवादित्वात्, एवमपि वक्त्रभि प्रायसम्भावनामात्रहेतुतया शब्दप्रामाण्यप्रतिक्षेपे धूमादपि वह्निसम्भावनयैव प्रवृत्तिसम्भवादनुमानमात्रोच्छेदेन चार्वाकमत प्रवेशापत्तेरिति चेत्, नानुमितमसाक्षात्कृतं ध्रुवमिदं मयाऽवगतमिति प्रतीत्या शाब्द्याः प्रमाया अतिरिक्तत्वे तत्करणस्या-नुमानातिरिक्तत्वात्, व्युत्पत्तिज्ञानादेः स्वातन्त्र्येण शाब्दबोध एव हेतुत्वाच । विलक्षणानुमितावेव तद्धेतुत्वोपगमे च लिङ्ग ज्ञायमानस एव तद्धेतुत्वं किं न स्यात् येन शाब्दत्वे मानसत्वव्याप्य न भवेत्, व्याप्त्यप्रतिसन्धानेऽपि व्युत्पन्नस्य शब्दश्र वणेन शाब्दबोधाच नानुमानं शब्द इति दिक् । स्वांशमात्रावलम्बिनेति स्वमेवांशो भागस्तन्मात्रावलम्बिना परमार्थवि

द्दष्टान्तचतुष्टयप्रतिपादनपरे प्रतीके साधनपदं हेतुसंवेदनघटाद्यर्थविप्रधानपरतया भेदपदं च हेतुरूपनीलाद्याकारस्यारम्भकाव-
यवसत्त्वादिपरतया व्याचिख्यासुराह भाष्यकृत्—" सपक्षविपक्षयोरित्यादिना परस्परनिरपेक्षरूपविशिष्टे न वस्तुत्वमिति
व्यतिरेकं प्रद(र्श्य)र्शयित्वा परस्परसापेक्षरूपविशिष्ट एव तत्त्वमित्यन्वयं प्रदर्शयति—तादृश इत्यादिना वीरणादृष्टान्तादिकाया
इत्युत्तरयोरर्थक्रियाप्रदर्शनं सविषयज्ञानेत्यादयो। हेतुना स्वविषयज्ञानसाक्षाभिवृत्तिरूपस्य संवेदनेन चानुव्यवसायस्य जननादिति
बोध्यम्। स्वप्रकाशत्वात्संवेदनस्य न स्वविषयज्ञानजननलक्षणाऽप्यर्थक्रियेति चेत्, तर्हि व्यवहारजननलक्षणा साऽस्त्रियतां,
यथा कथञ्चिदर्थक्रियाकारित्वस्यैव वस्तुत्वव्यवस्थापकत्वादिति तत्त्वम्। भाष्ये तदन्तरेणापीति तत्प्रसिद्धसाधनम्,
अन्तरेण विनापि, इव तुरीयपादलक्षणं पाठान्तरम् एकपाठत्वेऽप्यावृत्त्यपेक्षया नानाप्रयोगरूपं बहूनां सत्स्वपीत भावे
स्वप्रत्ययात् सप्तमो यत्र तथा, सहार्थसप्तार्थके भवतीत्यर्थः। कारिकायामिति, अवयवावयविभावेन वृत्तित्वे सप्तमी ॥३३॥

ननु नैकत्वप्रत्ययाख्यपक्षत्वमस्त्ययाथ कथमेकत्वं पृथक्त्वं च वीतादीनामुपपन्नं तस्य निर्विषयत्वादित्याशङ्कायां तस्य सविषयत्वमा-
दर्शयितुमनसः स्वामिनः प्राहुः—

सत्सामान्यात्तु सर्वैक्य पृथग्द्रव्यादिभेदत । भेदाभेदविवक्षायामसाधारणहेतुवत् ॥ ३४ ॥

तु विशेषणे। तेन सत्सामान्यं विशेष्यमाश्रित्य सर्वेषां वीतादीनामैक्यमिति नैकत्वप्रत्ययो निर्विषयः, तस्य सत्सामान्यविषय-
त्वात्। पृथक् सर्वं वीतादि द्रव्यादिपदार्थभेदमाश्रित्यानुभूयते। ततो न पृथक्त्वप्रत्ययोऽपि निर्विषयः, तस्य द्रव्यादिभेदविषयत्वादिति
निवेदितं बोद्धव्यम्। हेतुरत्र ज्ञापकः कारकश्चोच्यते। स चासाधारणो यथाऽस्य प्रत्यादिभिर्विशेषेणेष्टत्वात्। स च यथा स्वभेदानां

पक्षधर्मत्वादीनां स्वारम्भकावयवादीनां वा भिन्नानां यथैव हेतुत्वेन घटत्वकम्बुग्रीवादित्वेन वा तद्भेदविवक्षायामेक एव तथा सर्वं विश्वाकाराभासितमिति व्याख्यातार्थैक्यकल्पनात् । कश्चिदाह, सर्वार्थानां समानपरिणामेऽपि कथमैक्यं तेषां स्वभावसाङ्कर्यानुपपत्तेः । न हि भावाः परस्परेणासमाने भिद्यन्ते भेदप्रतीतिविरोधात् । तेषामेककार्यकारणत्वात्तथा समानव्यवहारभाक्त्वेऽपि परमार्थतोऽसङ्कीर्णस्वभावत्वात् । तदुक्तं ' सर्वे भावाः स्वभावेन स्वस्वभावव्यवस्थितेः । स्वभावपरभावाभ्यां यस्माद्व्यावृत्तिभागिनः ॥ १ ॥ तस्माद्यतो यतोऽर्थानां व्यावृत्तिस्तन्निबन्धनाः । जातिभेदाः प्रकल्प्यन्ते तद्विशेषावगाहिनः ॥ २ ॥ ततो यो येन धर्मेण विशेषः संप्रतीयते । न स शक्यस्ततोऽन्येन, तेन भिन्ना व्यवस्थितिः ॥ ३ ॥ " इति । अत्राभिधीयते । नीलादिभेदानामैक्यं सर्वैकभेदस्य स्वभावविश्लेषाभावात् । न हि स्वभावविश्लेषाभावादृते नीलस्वरूपस्य संवेदनस्य वा कस्यचिदेकस्य स्वयमिष्टस्याप्येकत्वनिबन्धनं किंचिदस्ति । नापि सर्वथा भिन्नानामपि भावानां सत्सामान्यस्वभावेन विश्लेषोऽस्ति तथा विश्लेषाभावस्यानुभवात् । अन्यथैक सदन्वयस्तत् स्यात् । ततः समवाये सर्वमेकं सदविशेषादिति, सदात्मना सर्वभावानां परस्परमभिन्नत्वेऽपि साङ्कर्यप्रसक्तेः चित्रैकज्ञाननीलादिनिर्भासानां संविदात्मनैकत्वेऽपि साङ्कर्यप्रसक्तिवत् । नहि तेषामनेकत्वे चित्रज्ञानसिद्धिः सर्वथैकत्ववत् । तत एव न किंचिद् ज्ञानं चित्रसंवेदनाद्वैतोपगमादिति चेत् न तत्रापि वेद्याकारविवेकसंविदाकारयोः परोक्षप्रत्यक्षयोरेकसंवेदनत्वेऽपि साङ्कर्यानिष्टेरन्यथा संविदाकारस्यापि परोक्षत्वप्रसङ्गात् वेद्याकारविवेकवत् । तस्य वा प्रत्यक्षत्वे संविदाकारवत् स्यात् । न चैवं तद्विप्रतिपत्तिविरोधात् समारोपस्यापि सर्वथाप्यविज्ञेये कथंचिदसंभवाभिप्रायवत् । तस्यैव सतो द्रव्यादिभेदात् पृथक्त्वमुदाहरणं पूर्ववत् । तथा च बहिरन्तश्च भावानां सदात्मनैकत्वं द्रव्याद्यात्मना पृथक्त्वं च स्वस्वभावः सिद्धो न पुनरसाधारणं भिन्नं रूपम् । तेन च स्वस्वभावेन व्यवस्थितेः

स्वभावपरभावाभ्यां भावाः स्वभावेनानुवृत्तिव्यावृत्तिभागिनो, न पुनरेकान्ततो व्यावृत्तिभागिनः । तस्मादतो यतोऽमी व्यावृत्ति स्तन्निबन्धना भेदविषया एव प्रकल्प्यन्ते, न जातिविशेषाः, प्रतीतिविरोधात् । यतो यदनुवृत्तिस्ततस्ततो जातयः प्रकल्प्यन्ते, तासामेवानुवृत्तिप्रत्ययनिमित्तत्वात् । यतो यो येन धर्मेण विशेषोऽविशेषश्च संप्रतीयते न स तमतिवर्तते । तत्र भिन्नाऽभिन्ना च व्यवस्थितिः पदार्थानां, तथा प्रतीतेर्बाधकाभावात् । तथा स्थितमेतत् सत्तासामान्यविवक्षायां सर्वेषामैक्यम्, द्रव्यादिभेदविवक्षायां पृथक्त्वमेव, इतरस्याविवक्षायां गुणभावात् ॥ २४ ॥

उक्तमेव विवृणोति इत्यिङ्क्त्—स्वभेदैरित्यादिना, सत्सामान्यात्विति सर्वस्य वस्तुनः सत्त्वेनैक्यं द्रव्यादिभेदेन पार्थक्यं यथाऽसाधारणः भूस्थादिक्रयाऽभिहितः सन्नादिहेतुत्वहेतुत्वेनाभेदविवक्षयैकः पक्षधर्मत्वाद्यपेक्षया च पृथग्रूप इति । तथा चैकत्वं पृथक्त्वं च वैवक्षिकमेव ननु क्वचन विश्रिष्यविभान्तं द्रव्यार्थिकनयेनैकीकृतस्यैव पर्यायार्थिकनयेन पृथक्करणात्, तेन पृथक्कृतस्यैव चान्येनैकीकरणात्, सम्मतो द्रव्योपयोगस्यापभिमविकल्पनिर्वचनत्वोक्तेः, कार्यकारणभावप्रवाह पतितानां द्रव्यपर्यायाणां तत्र विभान्त्या सम्भवेऽपि सामान्यवस्त्वविभामात्, नीलादिस्वलक्षणज्ञानस्वलक्षणयोरपि रूपरसा विपर्यासित्वभिर्भासभेदेन पृथक्त्वेन सर्वैकत्वायोगात्, तदात्मनि तत्परभावौ च द्रव्यैक्येऽपि पर्यायविवक्षाप्रयुक्तद्रव्य विवक्षाया एव शरणत्वात्, देशप्रदेशकल्पनाविनिर्मुक्तवस्तुगोचरैर्भूतनयप्रवृत्तेरपि नयान्तराविवक्षाहेतुकत्वात्, द्रव्यार्थिक-पर्यायार्थिकोभयप्रवृत्तेरपि सर्वत्र नियमस्य भजनामात्रेण च क्वचन तदपवादस्य शास्त्रसिद्धत्वात्, सर्वेषां नयानां स्वस्ववच-नीयसत्यत्वेऽपि च परविचारप्रवृत्तौ मोघत्वादित्यादिरहस्यं सहृदयैः स्वयं बोध्यम् । ज्ञापकः साध्यज्ञानजनकज्ञानविषयः,

कारकोऽन्यथासिद्धनियतपूर्ववर्ती, जातिभेदा मनुष्यत्वादिरूपास्तुच्छा, तद्विशेषोपाधयस्तादृशास्तद्विशेषाभावाभिधानवि-
धयाः, यथाशुक्लेऽज्ञानादिः, तस्य ज्ञानधर्मस्य जातिभेदविशेषत्वानुपपत्तेरिति द्रष्टव्यम् । भिन्नं रूपं गुणान्तरं धर्मान्तरं वा, इतरस्यापि विवक्षायां गुणभावादिति गुणभावस्वप्रकारकबोधोद्देशेन वचनाभ्यासापत्यभेदसंसर्गप्रवेशमपरित्यज्य मानं, तत्र मूले चानन्तधर्मात्मके वस्तुन्येकोऽपि धर्मस्तदितरसकलधर्माभिन्नत्वादिविशिष्टसंसर्गेण भातीति व्युत्पत्तिः । नन्वेकत्वमभेदः पृथक्त्वं च भेदः साधनमेकं पक्षधर्मत्वादिना न भिद्यते किन्तु भिन्नप्रकारकप्रतीतिविषयो भवतीति दृष्टान्तावष्टम्भेन जीवादिवस्तुन्येकत्वपृथक्त्वयोरन्योन्यानुगमसाधनं युक्तिरिक्तमिति चेत्, न, धूमो वह्नौ धूमत्वेनैको हेतुः पक्षधर्मत्वादिरूपैः पृथग्भूतः, दण्डो घटे दण्डत्वेन हेतुर्द्रव्यत्वेन न हेतुरिति प्रतीत्या हेत्वाद्येकत्वपृथक्त्वयोर्भेदाभेदयोश्चान्योन्यानुगमसिद्धान्तदृष्टान्तेन जीवादिवस्तुनि तत्साधनस्य युक्तिप्रधानविधायित्वात् । न च द्रव्यत्वेन न हेतुरित्यत्र द्रव्यत्वानवच्छिन्नहेतुतावगमः, मूले वृक्षः संयोगी न शाखायामित्यत्रापि शाखानवच्छिन्नसंयोगप्रतियोगिकत्वापत्तेः, दण्डोऽप्ययं द्रव्यत्वेन न हेतुरित्यत्रागतेश्च । युक्तिसिद्धे च भेदस्याप्यव्याप्यवृत्तित्वे किमेतदपेक्षया भेदाभेदोभयावगाहिप्रतीतेरन्यविषयत्वकल्पनेन, न च द्रव्यत्वावच्छिन्नतादात्म्येन हेतुमति द्रव्यत्वेन हेतुभेदोऽप्यसम्भवीति वचनीयम् । तादात्म्येन तद्धेतुतावच्छेदकयोस्तदवच्छिन्नतावच्छेदकत्वनयच्छेदकभेदेन समनियताकारात् प्रतियोग्यनवच्छेदकस्याभावावच्छेदकत्वेऽतिप्रसङ्गस्तु कथञ्चित् पक्षेणैव प्रतीत्यबाधया परिहरणीय इति दिग् ॥ २४ ॥

विधयाऽभिमतयोरुपपत्तात् तत्साध्यसाधनयोर्युक्तेति मन्यमानं प्रत्याह—

क्रमाक्रमाभ्यामर्थक्रियानुपपत्तेस्तद्योगादित्यनुमानेन स्वरूपमध्यवसीयते इति चेत्, न, अत्र हेतोर्विरुद्धत्वात् सत्त्वस्य कथंचिन्नित्या नित्यात्मकवस्तुन्येव व्याप्तत्वात् सर्वथा नित्याद्येकान्तरूपे क्रमयौगपद्याभ्यामर्थक्रियाविरोधात् सत्त्वानुपपत्तेः समर्थनात्। एतेन सूक्ष्मेऽपि द्रव्यं सूक्ष्मपर्यायवदेव प्रतिभासते इति व्युदस्तम् तदनुमानस्यापि विरुद्धत्वाविशेषात् प्रत्यक्षबाधितविषयत्वाच्च हेतोरतीतकालत्वाभ्यवसितेः। अत एव नोपमानाद्यपि तत्प्रतिभासनमिति नासिद्धं सूक्ष्माद्येकान्तस्य प्रत्यक्षादुष्प्रतिभासनम्, यतस्तदविवेचने साम्ये स्वभावानुपलब्धिर्न सिध्येत्। तदविवेचने च सिद्धः सूक्ष्माद्येकान्तः। तत्र स्वभावान्तरस्य प्राधान्यविवक्षायामाकारान्तरस्य गुणभावः स्यात् घटोऽयं परमाणवो रूपादयो वेति। घटार्थिनो हि घटविवक्षायां घटः प्रधानं परमाणवोऽनुमेयाः, प्रत्यक्षाश्च रूपादयो गुणीभूताः, तदनर्थित्वादविवक्षाप्रसिद्धेः। तदर्थिनां तु तद्विवक्षायां त एव प्रधानं न पुनर्घटोऽवयवी तदविवक्षायाः संभवात्मयावदर्थित्वानुपपत्तेः। न च वस्तुनस्तस्याविशेषादविवक्षेयमर्थित्वमनर्थित्वं वा प्रसज्यते, तस्य तस्सत्तामात्रानिबन्धनत्वात्, मोहविशेषोदयोद्भवत्वात् वस्तुतस्त्वपि मिथ्यादर्शनादिप्रत्ययनिमित्तत्वात्॥ तदेवं स्यादद्वैतं, स्यात् पृथक्त्वमिति मूलभङ्गद्वयं विधिप्रतिषेधकल्पनैकवस्तुन्यविरोधेन प्रमाणतानुपदर्शितम्। शेषभङ्गानां तु प्रक्रिया यथोदितनयविशेषवचनमात्र 'एकानेकविकल्पादावुत्तरत्रापि योजयेत्' इत्याद्यविशेषकारिकानिर्देशसामर्थ्यात्प्रपञ्चतो निश्चेतव्या ॥ ३६ ॥

अद्वैताद्यग्रहोग्रग्रहगहनविपन्निग्रहेऽलङ्घ्यवीर्याः, स्यात्कारामोघमन्त्रप्रणयनविधयः शुद्धसध्यानधीराः ॥
धन्यानामादधाना धृतिमधिवसतां मण्डलं जैनमग्र्यं, वाचः सामन्तभद्र्यो विदधतु विविधां सिद्धिमुद्भूतमुद्राः ॥२ ॥

॥ इत्याप्तमीमांसालङ्कृतौ द्वितीयः परिच्छेदः ॥ २ ॥

स्फारिकायां न संवृती इति, संवृतिपदस्य संवृतिविषये लाक्षणिकत्वात् सांवृतावित्यर्थः । अविरुद्धावित्यतः पूर्वं भवतु मिति शेषः । एकत्वाविरुद्धतया वचन एव गुणवस्त्वविवक्षया हेतुत्वसम्भवादित्यर्थः । न चेयमसिद्धेति एतेषु साध्येषु इयं स्वभावानुपलब्धिरसिद्धा न ॥ सूक्ष्मेत्यादिभाष्यम् सूक्ष्मस्थूलाकाराणामवयवावयविरूपाणां विषयाणां स्थूलसूक्ष्मस्वभाववव्यतिरेकेणावयव्यवयवस्वभावानुपरागेण, अत्यासन्नासंसृष्टेष्विति अयोग्यपरमाणुभ्यो योग्यपरमाणूनामुपलक्षणमेतत्, तेन वाय्वादेरचाक्षुषत्वमप्युपपादितं भवति, शक्तिविशेषमेवामूनां चाक्षुषादिजननयोग्यत्वादिति बोध्यम् । 'संवृणोतीति' तथा च घटशरावैकत्वप्रत्ययहेतुरनेकत्वप्रत्ययविषयकम् दोष एव संवृतिः, संवरणाभावान्वर्थस्य संज्ञाया इत्युक्तं भवति, कुण्डादिव्यतिरिक्तदध्यादिवदिति । यथा कुण्डादिभ्यतिरिक्तं दधि प्रतिभासते तथा स्वावयवव्यतिरिक्तोऽवयवी न प्रतिभासत इति व्यतिरेकदृष्टान्तोऽयम् । अनर्थान्तरमिवेति तन्तव एव पट इत्यवयवभिन्नोऽप्यवयवी समवायसंयोगाद्भिन्नत्वेन भासत इत्यर्थः । 'प्रत्यक्षलक्षणमिति' "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्" इत्यक्षपादसूत्रोक्तप्रत्यक्षलक्षणघटकमित्यर्थः । अत्र इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारिप्रत्यक्षमित्येतदेव लक्षणम्, अव्यपदेश्यं व्यवसायात्मकं चेत्येतावत् निर्विकल्पकत्वसविकल्पकत्वाभ्यां विभागपरमित्यादि व्यवस्थितं न्यायसिद्धान्तभाषायाम् । न चेत इति समवायाप्रत्यक्षत्वं च वैशेषिकैरपि स्वीक्रियते, तच्च न सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् समवायसंयोगान्यतरत्वमेवं सम्बन्धत्वं परित्यज्य संयोगप्रत्यक्षत्वस्यैव तत्कार्यतावच्छेदकत्वादिति विपर्यासस्यादेव तत्प्रत्यक्षत्वं स स्वीकरणीयः, तत्सम्बन्धवत्सम्बन्धाक्षिप्रत्यक्षपरम्पराभिप्राय ( भिया यस्य सुगमत्वम्, अन्यथा समवायस्य

# ॐ 卐 ॐ ॥ अथ तृतीय· परिच्छेद ॥ ॐ 卐 ॐ

नित्यत्वैकान्तपक्षेऽपि, विक्रिया नोपपद्यते । प्रागेव कारकाभाव', क्व प्रमाणं क्व तत्फलम् ॥ ३७ ॥

अष्टशती प्रथितार्था, साष्टसहस्री कृतापि संक्षेपात् ॥ विलसदकलङ्कधिषणैः, प्रपञ्चनिचितावबोद्धव्या ॥१॥

सदसदेकान्तयोः प्रतिषेधानन्तरं नित्यत्वैकान्तप्रतिक्षेप, प्रक्रम्यतेऽनेनेति तात्पर्यम् । तत्र नित्यत्वैकान्तः कूटस्थत्वाभिनिवेशः । तस्य पक्षः प्रतिज्ञानम् । तस्मिन्नपि विविधा क्रिया परिणामपरिस्पन्दलक्षणा नोपपद्यते । कार्योत्पत्तेः प्रागेव वस्तुसत्त्वे वा प्रागेव कारकाभावो नोपपद्यते इति कूटस्थः प्रागेव कारकः स्यादात्मा भोगस्य । अथ प्रागेव कारकाभावस्तदा विक्रियापि नोपपद्यते इति तत्कारकः स्यात् तदविशेषात् । सोऽस्त्वकारकोऽविक्रियोऽपि चेत्, क्वेदं प्रमाणं प्रमितिलक्षणं च तत्फलमुपपद्यते ? प्रमातुरभावे तत्कारकः स्यात् तदविशेषात् । सकलकार्योत्पत्तिरसंभवात् । न ह्यकारकः प्रमाता नाम, प्रमितिक्रियासाधकस्य कारकविशेषस्य स्वतन्त्रस्य प्रमातृत्वोपपत्तेः । कथमात्मसिद्धिः परस्य स्यात् ? खरविषाणादिसिद्धिप्रसङ्गात् । परिच्छित्तिविक्रियायोः सर्वथाप्यसाधनस्य सत्त्वासंभवावस्तुत्वापत्तेः । ननु चात्मनश्चेतनैवाभिक्रिया, न पुनः स्वव्यतिरिक्तकार्यस्योत्पत्तिरभिव्यक्तिर्वा, तस्याः प्रधानहेतुत्वात् । न च चेतना पुंसोऽर्थान्तरमेव, तस्य तत्स्वरूपत्वात् "चैतन्यं पुरुषस्य स्वरूपम्" इति वचनात् । न चानित्या चेतना, नित्यपुरुषस्वभावत्वात् साक्षित्वादिवत्, तस्या प्रधानस्वभावत्वे पुरुषस्य नावैचर्यात् तदनित्यत्वप्रसङ्गाच्च सुखादिवत् । न च नित्यायाश्चेतनायाः परस्यार्थक्रियात्वं विरुध्यते चास्य

वस्थानां स्वभावपर्यायत्वं युक्तं, विवर्तादीनां कादाचित्कत्वात् । तत एव धर्मविशेषस्य न स्वभावपर्यायत्वम् । धर्मसामान्यस्यापि साधारण्यस्यासत्त्वमेव, तस्यानपायिनोऽसाधारणस्य स्वरूपस्य स्वभावत्वात् ।' इति कश्चित् सोऽपि न परीक्षकः, सततापरिस्थितस्यै-कान्ततः कस्यचित्स्वभावस्यासंभवात् । स हि न तावत्सकलप्रमाणेनापरिच्छिद्यमानः प्रतिज्ञातुमर्हति अतिप्रसङ्गात् । परिच्छिद्यमानस्तु पूर्वापरिच्छिद्यमानरूपतान्वयव्यतिरेकेण परिणामस्वभावानुसरणात् कथं न स्वभावः परिणाम एव स्यात्तत्स्वपर्यायो न स्यात् ? एतेन विवर्तादीनां स्वभावपर्यायत्वमुक्तं, तद्वत्स्वभावस्यापि कथंचित्कादाचित्कत्वसिद्धेः । धर्मसामान्यस्य तु यथा साधारणत्वं तथा स्वभावसामान्यस्यापि परिणामादिसामान्यवत् । ततः परिणामादिविशेषाणां स्वभावविशेषपर्यायत्वं परिणामादिसामान्यानां तु स्वभावसामान्यपर्यायता व्यवतिष्ठते । पूर्वोत्तराकारयोस्तिरोभावाविर्भावौ तु नाशोत्पादावेव नामान्तरेणोक्तौ, सर्वथा तदभावे स्वभावस्यासंभवात् । तदेतद्विनाशोत्पत्तिनिवारणमबुद्धिपूर्वकं प्रत्यक्षादिविरोधात् धर्मिकैकान्तवत् । नैवमसिद्धं साधनं पुरुषस्योत्पादव्ययध्रौव्यात्मनः स्वसंवेदनप्रत्यक्षात् स्मरणात्प्रत्यभिज्ञानादूहादनुमानाच्छ्रुताच्च प्रमाणात् सुनिश्चितासंभवद्बाधकप्रमाणात्प्रतिपत्तेः, विनाशोत्पत्तिरहितस्य जातुचिदप्रतीतेः प्रत्यक्षादिविरोधस्य निश्चयात् । एतेन धर्मिकैकान्तनिदर्शनस्य साधनविकलता निरस्ता, सर्वथा स्थितिरहितस्य चेतसः प्रत्यक्षादावप्रतिभासनात्तद्विरोधस्य सिद्धेः । साध्यशून्यता च न संभवति स्थितिमात्राभिनिवेशस्यैव निरन्वयक्षणिकाभिनिवेशस्यापि मिथ्याबुद्धिपूर्वकत्वात् । एतेनाव्यक्त नित्यमेवैकमपास्तं, व्यक्तस्यापि नित्यत्वानुपपत्तेः, मिथ्यात्वव्यतिरिक्तस्याप्यनित्यत्वे चैतन्यस्याप्यनित्यत्वापत्तेः । सर्वथा व्यक्तस्यापि नित्यत्वे प्रमाणकारकव्यापारविरोधात्तत्प्रमेयमनर्थक्रियाकारि प्रसज्येत ॥ २७ ॥

रमारमणशङ्करद्रुहिणचन्द्रसूर्यादयः, प्रसादमिव मूर्ध्नि यत्क्रमरजःकणं बिभ्रति ॥

अविकल्पस्य कथमिति समः पर्यनुयोगः । स हि क्षणस्थितिरेकोऽपि भावोऽनेकस्वभावभिन्नकार्यस्याभासनार्थवत् । न हि कारणशक्तिभेद-
मन्तरेण कार्यनानात्वं युक्तं रूपादिज्ञानवत् । यथैव हि कर्कटिकादौ रूपादिज्ञानानि रूपादिस्वभावभेदनिबन्धनानि तथा क्षणस्थिते-
रेकस्मादपि भावात् प्रदीपादेर्वर्तिकामुखदाहतैलशोषादिविचित्रकार्याणि शक्तिभेदनिमित्तकानि व्यवतिष्ठन्ते । अन्यथा रूपादेर्नानात्वं न
सिध्येत् चक्षुरादिसामग्रीभेदात्प्रधाननिर्भासभेदोऽप्येकस्यैव, कर्कटिकादिद्रव्यं तु रूपादिस्वभावभेदरहितमेकमनंशमिति वदतोऽपि निवा-
रयितुमशक्यः । चक्षुरादिमुखो रूपादिव्यतिरिक्तस्य द्रव्यस्याप्रतिभासनाद्रूपादयो नानैवेति चेत्, तर्हि वर्तिकामुखदाहादिकार्यानुमानबुद्धिषु
विभिन्नवर्णशक्तिव्यतिरेकेण प्रदीपक्षणस्यैकस्याप्रतिभासनान्नानात्वमेव किं न स्युः ? ॥ ननु च 'शक्तिशक्तिमतोरर्थान्तरानर्थान्तर
भावपक्षयोः शक्तीनामघटनाद् वा परमार्थसत्त्वं संभाव्यते । तदर्थासामर्थ्यान्तरभावे व्यपदेशानुपपत्तिः संबन्धाभावात् । तेन
तासामुपकार्योपकारकभावसंबन्धकल्पनायां यदि शक्तिमता शक्त्यन्तरैः शक्तय उपक्रियन्ते तदानवस्था अपरापरार्थान्तरशक्तिपरि
कल्पनात् । तस्य शक्तिभिरुपकारेऽनेकोपकार्यरूपतापत्तिः । तदुपकार्यरूपाणां ततो भेदे तस्यानुपकारात्तद्व्यपदेशानुपपत्तिस्तदवस्था ।
तैस्तस्योपकारकरणेऽनवस्थितिरेव परापरोपकार्यरूपपरिकल्पनात् । शक्तिमतः शक्तीनामनर्थान्तरभावे शक्तिमानेव, न शक्तयो नाम
अन्यत्रावस्थापृथिव्यः कल्पिताः' इति चेत् न रूपादीनामपि द्रव्यादर्थान्तरानर्थान्तरभावविकल्पयोरघटनात् परमार्थसत्त्वाभावा
मुपगमात् मतद्वयोपनिपाताविशेषात् प्रत्यक्षमुखे प्रतिभासमाना रूपादय परमार्थसन्तो न पुनरनुमानमुखे प्रतिभासमानाः शक्तय
इति वक्तुमशक्यः क्षणक्षयस्वर्गप्रापणशक्त्यादीनामपरमार्थसत्त्वप्रसङ्गात् । क्षणक्षयादीनां प्रत्यक्षे प्रतिभातानामेव विपरीतारोपव्यवच्छेदे
ऽनुमानव्यापारादृदोष इति चेत् तर्हि नानाकार्यजननशक्तीनामपि प्रत्यक्षेऽवभातानामेव समारोपव्यवच्छेदे कार्यानुमानव्यापारात्कथि

यथा विनाशं प्रत्यन्यानपेक्षं विनश्वरम्। तथैव स्थितिं प्रत्यनपेक्षम् अस्तु वस्तु। इति स्वभावहेतुः। न चायमसिद्धः, तद्धेतोरकिञ्चित्क-
रत्वात् तद्व्यतिरिक्ताव्यतिरिक्तकरणात् इत्यादि सर्वं समानम्। न हि वस्तुनो व्यतिरिक्ता स्थितिस्तद्धेतुना क्रियते तस्यास्तस्यानुपपत्तेः।
स्थितिसंबन्धाभावस्य तदवस्थेति चेत् न स्थितितद्वतोः कार्यकारणभावासंभवात् सहभावात्तयोः असहभावे स्थितेः पूर्वं तत्कारणस्यास्थि-
तिप्रसङ्गः, स्थितेरपि स्वकारणादुत्तरकालमनवस्थानस्यानुपपत्तेः। तयोराश्रयाश्रयिभावः संबन्ध इति चेत्, अर्थान्तरभूतयोः कार्यकारण-
भावाभावे तदभावाभ्युपगमात् कुण्डबदरवत्। तदव्यतिरिक्ता स्थितिस्तद्धेतुना विधीयते इत्ययमपि पक्षो न श्रेयान् तदैक्यात्,
स्थितिस्वभावस्यापि स्थितिकरणे तत्कारणानामनुपरमप्रसङ्गात्, स्वयमस्थितिस्वभावस्य स्थितिकरणायोगादनुत्पत्तिस्वभावस्योत्पत्तिकरणा-
योगवत्। ततः स्थितिस्वभावनियतोऽर्थः स्यात् सर्वदा स्थितेरहेतुकत्वात्। तदेवमादौ स्थितिरर्थमात्रमपि विगुणप्रदीपादेरन्तेऽपि स्थितेरनु-
मानं युक्तम्। अन्यथा अन्त्ये क्षणदर्शनादावप्रतिपत्तिरयुक्तैव। तादृशः कारणादर्शनेऽपि कथंचिदुपात्तानुमानवत् तत्कार्यसन्तान-
स्थितिरप्यनुमीयेत। क्षणविगुणादेः साक्षादनुपलभ्यमानतामनुमीयते निर्विकल्पकोत्पादप्रसङ्गभयाच्च पुनस्तदुत्तरकार्यमवस्तुत्वादनुप-
लम्भादिति किमपि महामोहविलसितम्। क्षणादेरुत्तरकार्याकरणेऽपि योगिज्ञानस्य करणाभावस्तुल्यप्रसक्तिरिति चेत्, न आस्वाद्यमान-
रससमानकालरूपोपादानस्य रूपाकरणेऽपि रससहकारित्वप्रसङ्गात्, ततो रसाद्रूपानुमानानुपपत्तेरनिष्टप्रसङ्गात्। तथा रूपस्यापि ह्यनिष्ट-
प्रसङ्ग इति चेत्, किं पुनः क्षणादेव क्षणस्योत्पत्तिरप्यन्यथा क्वापि? सत्यपि सम्भवतो मध्यावस्थायां क्षणादेव क्षणस्योत्पत्ति-
रिति चेत् कथमुत्तरक्षणोत्पत्तिरदृष्टा? तथैव तदृष्टेरिति क्षणादेर्योगिज्ञानकरणवदुत्तरक्षणाविकरणमनुमीयतां, रूपोपादानाद्रूपो-
त्पत्तिवत्। तस्मात् क्षणस्य स्थितिमतः प्रतिक्षणं स्थितोऽपि नान्यथा, गगनकुसुमवत्। यदि पुनः परमार्थतः कार्यकारणभावस्याभावा

सत्येव वा। सत्येव कारणे यदि कार्यं तैकोकमेकक्षणवर्ति स्यात् कारणक्षणकाल एव सर्वस्योत्तरोत्तरक्षणसंतानस्य भावात्, ततः संतानाभावात्सन्तानान्तरासंभवाच्च। इति सिद्धमेव साधनं सर्वकार्यक्रियाविरोधादिति, साध्यं च क्षणिकपक्षो बुद्धिमद्भिरनादरणीय इति प्रत्यभिज्ञाप्रमाणात्मैकत्वभावासंभव इति च अस्मिन्पक्षे प्रमाणाभावात्। यदि पुनरसत्येव कारणे कार्यं तदा कारणक्षणात्पूर्वं पश्चाच्चानादिरनन्तश्च कालः कार्यसहितः स्यात् कारणाभावाविशेषात्। तदविशेषेऽपि कार्यस्य स्वयं नियतकालत्वे नित्यस्य सर्वदा भावाविशेषेऽपि तस्यास्तु युक्तम्। किं च क्षणिकपक्षे न तावत्सत्येव कार्यमुत्पद्यते स्वमतविरोधादुत्पत्त्यनुपरमप्रसङ्गाच्च ॥ ४१ ॥

'तस्यावस्तुत्वविरोधादिति' सन्तानात्कार्यारम्भस्वीकारे तस्यावस्तुत्वं यत्सौगतैः प्रतिपाद्यते तद्विरुध्यत इत्यर्थः। 'भिन्नकालेति' स्याद्वादिनां तु कारणक्षणस्य द्रव्यप्रत्यासत्त्या कार्यकालेऽपि सत्त्वान्न सर्वथा भिन्नकालत्वमिति नोभयोरस्य दोषस्य तुल्ययोगक्षेमत्वम्, न च सामिभद्रव्यसामान्याभिमत्वादिनाऽतिप्रसङ्गः, अनन्तधर्मात्मके वस्तुनि द्रव्यप्रत्यासत्त्येर्विशिष्य भेदेऽप्युपपत्त्यभावात्, यथा चास्माभिरुपादेयोत्पत्त्युपादानस्य स्वध्वंसत्वसम्बन्धेन नियामकत्वसमर्थकं तथासमर्थने न दोषलेशोऽपि, स्वध्वंसत्वस्यापि द्रव्यपरिणतिप्रयुक्तत्वेन द्रव्यप्रत्यासत्तिताया अक्षतत्वादिति मन्तव्यम्। 'तदसत्येव हीति' भावप्रधाननिर्देशात्तदसत्त्व एव हीत्यर्थः। 'स्वदेशवत् स्वकाल इति,' कार्याधिकरणदेशावच्छिन्नकार्यकाल इत्यर्थः। 'न कश्चिद्विशेष इति' यदा कारणं तदव्यवहितोत्तरसमये कार्योत्पत्तिरिति व्याप्तौ अव्यवहितत्वप्रवेशे बीजाभावात्, अव्यवहितत्वस्य द्वित्रादिक्षणसाधारण्येन विनिगमकाभावादित्यर्थः, व्यवहितजन्मनि कार्यत्वप्रयुक्त्यनुदयादव्यवहितत्वप्रवेशे तु कार्याभावक्षणोत्पत्तिकेऽपि तदनुदयात् कथञ्चित्कार्यसद्भावोऽपि कारणस्य कार्योत्पत्तिनियामक आस्थेयतामिति भावः। 'तादृशोऽ-'

नुपयुक्तस्य, 'क्षणिकस्येति' वक्ष्यमाणरीत्या क्षणिकस्याप्यनेककार्यकारित्वात् कथमेकत्वमिति पर्यनुयोगः सम इत्यर्थः, क्षणि कस्येत्यत्र प्रविश्यमित्यादि प्राक्तन सर्वं योजनीयम् । यत्त्वत्र स्वाभावकाल कार्यजननाविशेषादिति कस्यचिद्वत्वमिमाने तद् स हीत्यादिसमर्थनग्रन्थसन्दर्भविरुद्धम् । 'नानार्थवत्' सम्प्रतिपन्ननानाप्रयोजनवत्, 'अतत्कृत्याद्युक्तिभ्यो ऽशक्तिभ्याद्युक्ति- भ्यः, 'कल्पिताभ्यो' वासनाविशेषोत्पविकल्पज्ञानविषयीकृताभ्यः । 'विपरीतारोपव्यवच्छेदे' ऽक्षणिकत्वभ्रान्तिव्यवच्छेदे, 'समारोपव्यवच्छेदे' नानाकार्यजनकशक्त्यभावभ्रमव्यवच्छेदे, नचक्यादिवत् कार्यभेदेऽपि कारणभेदाभावमाशङ्क्याह–मा ष्यकृत् 'युगपदित्यादि,' तत्र दर्शनभेदाभावेऽपलापानुभववाधमाह वृत्तिकृत्–न चैवमित्यादिना, क्षणिके नानाकार्यजनक- स्वभावभेदानभ्युपगमे तत्साधकमूलयुक्तिबाधः स्यादित्याह भाष्यकृत्–सकृदित्यादिना, 'क्षणक्षयवदिति' धर्मनिर्देशस्य धर्मिपरत्वात् क्षणक्षयवदि स्वलक्षण इवेत्यर्थः । तथा च व्याचष्टे वृत्तिकृत् यथैव हीत्यादि, क्रमिकसहकारिभिरेव कार्यस्य कृतत्वात् स्थिरमकिञ्चित्करमित्याशङ्कायामाह भाष्यकृत्–' नहीत्यादि ' 'तद्बुद्धिपूर्वकत्वाभावात्,' अन्यतः कार्यस म्भवेऽह न कुर्यामिति स्थिरसम्बन्धिबुद्धिपूर्वकत्वाभावात् कार्यस्येत्यर्थः, तथा च सहकारिवत् स्थिरस्य कृतोर्नियतपूर्वव र्तित्वादेव कारणत्वमवर्जनीयम् तदभिमतसामग्रीप्रविष्टहेत्वन्तरवदित्यर्थः । तदाह–'क्षणिकेति' 'न तत्काले दर्शनमिति' उपादेयस्योपादाननाशस्वाभाव्यस्य च दर्शनायोग्यरूपत्वात्तत् अदर्शन इति मात्वनुसारादित्यर्थः । ' तद्व्यतिरिक्तेति ' तच्छब्देन परिणामान्तरस्य कपालादेर्हेतुः समनन्तरो घटादिलक्षणो गृह्यते, ततो व्यतिरिक्तो हेतुर्मुद्गरादिस्तदनपेक्षस्यैव स्थितेरित्यर्थः । सुगतमते हि घटादेर्नाशकाले मुद्गरादिना न किञ्चिज्जन्यते, तुच्छस्य ध्वंसस्य जनयितुमशक्यत्वात्, कपा

तादृशक्षणे च तस्याव्यापारात्, केवलं मुद्गरादिसहकृता समनन्तरसामग्री सजातीयकार्यं न जनयतीत्यर्थात् कपालादे स्त्पत्तिरिति भावः। साधयेदिति यथानिर्दिष्टं सौगतस्येति तं प्रत्यनिष्टापादनमेतदनेनेन क्रियत इति बोध्यम्। 'कुम्भदण्डयोरिव' इति यद्यपि कुम्भदण्डयोरुभयाभयविभावे कार्यकारणभावस्य नियामकत्वमप्रातीतिकमनभ्युपगमदोषदुष्टं च, तथापि स्वतो ऽन्वयव्यतिरेकविभावेन कार्यकारणतया निष्पन्नयोरेव तयोर्नैवाभयाभयविभावस्थाभाव नास्तीत्युक्तोऽयं पक्ष इति केचित्। व्याचक्षते वयं तु जनकधर्माश्रयनाशहेतुमयमनवधानत्वेन वदराधारतापर्यायैः कुम्भस्य हेतुत्वात् कार्यकारणभावाभावे स्थितियुक्तोराभ्याभयविभावानुपपत्तिमुपपादयामः। बदरप्रतियोगिकसंयोगरूपबदराधारतायां कुम्भस्य ताद्रूप्येण हेतुत्वमित्यपरे। 'तादृश' भावो स्थितिमतः। अनुमीयत इत्यादयन्त्यस्य कार्यत्वेन सोपादानत्ववदन्त्यक्षणस्य कारणत्वेन सोपादेयत्वस्यानुमानादिविरोधादिति भावः। 'अवस्तुत्वानुपक्रमयोरिति' शब्दविद्युदादेरपरकार्यानभ्युपगमे हि स्यादेव कार्याविच्छेदरूपसत्त्वाभावाद् वस्तुत्वापत्तेर्भयमिति भावनीयम्। ननु वस्तुत्वमर्थक्रियाकारित्वमात्रनियतमित्यन्त्यक्षणस्य शब्दादेर्योगिज्ञानजनकत्वेनैव तस्योपपत्ते- र्नैकद्रव्यकार्याविच्छेदसिद्धिरित्याशङ्कायामाह—'शब्दादेरित्यादिना,' 'ततो रसादिति' परस्परोपादेयपरस्परसहकारित्वादेव हि तदनुमानं व्यवस्थितं नियतोपादानोपादेयभावविच्छेदे तु व्यभिचारशङ्कया तन्न स्यादित्यर्थः। 'कथमत्र स्थितिमत इति' कथमनेनानेनैकद्रव्यतयैव कार्याविच्छेदरूपस्थित्यव्यवधानादन्त्यक्षणस्यापि परं न सजातीयकार्यानुपलम्भानुपपत्तिः, संवित्त्यैतदभ्युपगमादिति मध्यमक्षणसंविन्मात्रस्वीकारादन्त्यक्षणानां तत्कालप्राप्तानां तत्कालसत्त्वे मानाभावादित्यर्थः। 'प्रभवादेः' कार्यारम्भादेः, 'तत्स्वभावविशेषावधारणादिति' एकसन्ततिपतितकार्यकारणभावेषु तदीयत्वनियामकत्व

मापविक्षेपकल्पन इत्यर्थः। कार्यकारणभावमात्रस्यैकसन्ताननियामकत्वेऽतिप्रसङ्गमुपदर्शयति,–'अव्यभिचारिण इत्यनेन,' नन्वेकसन्तानेऽपि क्षणानां भिन्नत्वात् कथं तादात्म्यमुपपद्यत इत्यत आह 'भेदेत्यादि' भेदतादात्म्ययोर्विरोधस्यापि हि सर्वथाऽपरिहार्यत्वात् कथञ्चित्पक्षे तु द्रव्यपर्यायविषया परिहार्यत्वादेवेति चूर्णकसहितभाष्यप्रतीकार्थं । उक्तप्रकारमेव समर्थयति वृत्तिकृत्, 'संविदीत्यादिना,' 'तदनादीति' उत्तरचित्तोत्पत्तिकारणीभूतप्राक्तनचित्तक्षणा(त्मक)रमवास नानन्नात्मन्य प्रत्यभिज्ञानादेर्नियम इत्यर्थः। 'सद्भूत' नानासन्तानवत् 'पक्षान्तरासम्भवाधेति' असति कारण इति पक्षान्तरस्य मासम्भवादित्यर्थः। तन तद् द्वितीयोत्तराभावाच्च्यूनत्व यदि पुनरसत्येव कारण इत्यादिना वृत्तौ तु भाष्योक्त पक्षान्तरस्यैव स्फुटीकारात्र पौनरुक्त्यम् ॥ ४१ ॥

यद्यसत् सर्वथा कार्यं तन्मा जनि खपुष्पवत्। मोपादाननियमो भून्माश्वासः कार्यजन्मनि ॥ ४२ ॥

पर्यायाकारेणेव द्रव्याकारेणापि सर्वथा यद्यसत्कार्यं तदा तन्मा जनिष्ट, खपुष्पमिव। तथा हि यत् सर्वथाप्यसत्तन्न जायमानं दृष्टं, यथा खपुष्पम्। तथा च परस्य कार्यम्। इति व्यापकविरुद्धोपलब्धिः। कार्यत्वं हि कथंचित्सत्त्वेन व्याप्तम्। तद्विरुद्धं सर्वथाप्यसत्त्वम्। प्रतीतं हि लोके कथंचित्सतः कार्यत्वमुपादानस्योत्तरीभवनात्। सदेव कथमसत् स्याद्विरोधादिति न चोद्य, (अ) सत्यपि विरुद्धधर्माध्यास निराकृतेभिन्नवेदनवच्चित्तुरूपावम्। तथा चान्वयव्यतिरेकप्रतीतेर्भावस्वभावनिबन्धनायाः किं फलमपलापेन ? तदन्यतरनिराकृतावुभय निराकृतिप्रसङ्गात्। कथमन्वयव्यतिरेकयोरभेद इति चेत्, कारणस्य भावे भावस्यैव तदभावेऽभावरूपत्वात्। न हि कारणस्याभावेऽभाव एव भावे भावो न प्रतीयते यतस्तद्भेदो न स्यात्। कथं भावस्वभावनिबन्धनान्वयव्यतिरेकप्रतीतिस्तस्या भावाभावस्वभावनिबन्ध-

नाम् सम्भवत् । यदत्यन्तासतः कार्यस्योत्पत्तेरसम्भवः यदाविरेव न पुनः कृत्यादिरिति निर्हेतुका नियमः स्यात् । पूर्वपूर्वविशेषादुत्तरो-त्तरनियमकल्पनायामनुपादानेऽपि स्यात् तन्नियमकल्पना । तथाऽदर्शनमहेतुरत्रैव विचार्यत् । न हि यत्रैव विचार्यत्वम् नियमहेतुरिति युक्तं वक्तुम् व्यभिचारस्तत्प्रसङ्गात् । तथादर्शनं नियमकल्पनायां हेतुरपि कार्यविधायित्वविशेषवन्तौ पदस्वभावप्रविलम्भोपलम्भात् तदन्यतरविधिप्रतिषेधनियमनिमित्ताभावात् प्रतीतेरसम्भवप्रसङ्गेन । न हि वस्तुतद्विशेषयोरन्यतरस्य विधौ निषेधे च नियमनिमित्त-मस्ति । न हि वस्तु स्वभावनारीविशेषनिरपेक्षाः पदस्वभावं प्रविलम्भमानाः समुपलभ्यन्ते येन वस्तुमात्रस्यैव विधिनियमो विशे-षप्रतिषेधनियमो वा स्यात् । नापि वस्तुनिरपेक्षो विशेष एव पदस्वभावं स्वीकुर्वन्नुपलभ्यते यतो विशेषविधिनियमस्तन्मात्रप्रतिषेधनि-यमो वाऽवतिष्ठेत । न चोपलभ्यानुपलभ्यौ मुक्त्वाऽन्यन्निमित्तं तद्विधिप्रतिषेधयोर्नियमेऽस्ति येन तदन्यतरेऽपि वस्तुसमप्रतीतेरपसरः स्यादेव । ननु च नास्ति वस्त्वाद्यन्यतम उपलम्भविषयप्राप्तत्वादुपलम्भयोरिति स्वभावानुपलब्धिवशात्प्रतिषेधनियमनिमित्त विशेषमात्रस्यैवोपलम्भे-नाद्विधिनियमो युक्ताविति चेत्, न, वस्त्वाद्यन्यतमवद्विशेषस्यापि निरपेक्षस्योपलब्धिलक्षणप्राप्तस्यानुपलम्भेरविशेषात्प्रतिषेधनियमम-सङ्गात् । तस्मादुपलब्धिलक्षणप्राप्तानुपलब्धिरन्यतरस्यैव न पुनरुभयरूपस्य वस्तुनः प्रसङ्गेन । सर्वथाऽन्वयविशेषयोरेव प्रतिषेधनिय-मस्य निमित्ताभावात् वस्तुसमरूपप्राप्तान्यतरस्यैव विधिनियमस्य निमित्तसद्भावात् तन्निमित्तस्यार्थक्रियाकारित्वस्य सकलप्रमाणोपलम्भस्य च प्रसिद्धेर्विरोधाप्रसंभवात् । ततोऽयं वस्त्विकान्तपक्षः ॥ ४२ ॥

'उपादानस्योत्तरीभवनात्' मृत्पिण्डादेर्घटादिपर्यायत्वेन परिणमनादित्यर्थः । भाष्ये 'सकृदपीति' अपिरेवकारार्थः । 'सकृदेव' विरुद्धधर्माध्यासस्यानिराकरणात्, तथा च वारंवारं तन्निराकरणादित्यर्थः । 'विभ्रमैकान्तपक्षेऽपीति' विभ्रमैकान्ते चेत्कस्या

नेकल्पयोर्विरोधो वारंवारमेव निराकृतः, सैव रीतिः सत्यासत्ययोः प्रतीपत्वामित्यनेनोक्तम्, तत एव कार्यस्यकमशित्सत्त्व
सोम्पासेऽप, भाव्ये न तारक् सर्वथाऽसत्, कारणवत् कारणापेक्षोत्पत्तिकं, वैलक्षण्यामवधारणं निपन्नमिति मरिप
नस्मामलेव ऽन्तलादिनियतोपादानप्रवृत्तिनिबन्धनं नान्वयः, किन्तु वैलक्षण्यस्य भेदस्यानवधारणमिति सौगताशङ्का।
सत्कार-इति चेत् नयु गदीत्यादि, सदसत्परापरोत्पत्तिविप्रलम्भात् सदसत्परापरोत्पत्तिदोषप्रदीपीनानादिवासनाम
यतामेदमानादित्यर्थः। उपादानस्य प्रसज्येतेति कार्यगृहीतभेदस्यास्योपादानस्यादित्यर्थः, अभावान्यव्यवधानं चेति
अन्तरालिसत्ततयोरपविश्वव्यवधानाभावमेरित्यर्थः। अपि न विशेष इति न विशेष इत्यर्थः। अन्तराले सादृश्यप्रतियोगिनी
मध्ये, अभावस्य देशिकाभावस्य, न पुनर्देश इति तथा च रूपासदेशे मुत्पिण्डाभावसत्त्वादेशिकाभावेन तत्रापि व्यवधा
नाऽनुपादानत्वं न स्यादित्यर्थः। अतिरिक्तदेशेन भिन्नदेशत्वाभाव उपादानतानिमित्तमित्याशङ्क्य सर्वस्वलक्षणानामिति
भिन्नसन्ततिघटेष्वतिप्रसङ्गात किञ्चिदेवदिति समाधत्ते कथमेवमित्यादि, विशेषः घटानामुपादानताऽनुपादानतयोर्भेदः,
सति सादृश्यविशेष इति निमित्ते सादृश्यविशेष इत्यर्थः। अन्यथा वक्ष्यमाणाविशेषेण पौनरुक्त्यप्रसङ्गात्, तदनुमा
नप्रसङ्गादमेवाप्यवसायेनोपादानोपादेयभावनियामकसादृश्यविशेषानुमानप्रसङ्गात्, तद्वत् सम्प्रतिपन्नैकसन्तानवत्, यत
उक्तहेतोरवैलक्षण्यात्, अयं प्रत्यक्षसिद्धः, अविचारकत्वप्रसङ्गादिति यदेव पृष्टं तस्यैवोत्तरस्याप्रदानादित्यर्थः। ननु सन्तुस्यः
पटादिरिवेत्यादिनियमः कुतो दृश्यत इति न पृष्टं, येन तत्र तथा दर्शनस्य हेतुत्वोक्तावविचारकत्वम्, किन्तु तन्नियमहेतुप्रश्न एव
मा, तत्र चान्वयव्यतिरेकशालित्वमेव तद्धेतुरित्युत्तरं, तत्सिद्धिश्च तथा दर्शनादिति न प्रश्नोत्तरवैयधिकरण्यमित्याशङ्क्य तदपि

न्यमासिद्धर्म्येतिरेकानिश्चयाच । तत एव नान्यथानुपपत्तिः, प्रत्यभिज्ञानादेः संतानाभावेऽसंभवनियमनिश्चयायोगात् तत्रैकद्रव्यप्रमा सतेरेव ततः प्रसिद्धेर्विरुद्धत्वनिर्णयात् । ततो न संतानोस्ति स्वभावत एवासंकीर्णाः संतानान्तरैरिति सूक्तम् । ॥ ४३ ॥ स्यान्मतम्—

कर्मफलसम्बन्धादिनिबन्धनमित्यनन्तरमिति वचनमिति शेषः । आरचितमित्युक्तमित्यर्थः । क्व अश्रद्धीतेति एकद्रव्यातिरिक्तासु तासु प्रमाणाप्रसरादित्यर्थः ॥ ४३ ॥

**अन्येष्वनन्यशब्दोऽयं संवृतिर्न मृषा कथम् ?। मुख्यार्थः संवृतिर्न स्याद्विना मुख्यान्न संवृतिः ॥४४॥**

संतानिभ्योऽनन्यः संतानः, अन्यथात्मनो नामान्तरकरणात्—आत्मा संतान इति, सुखादिपरिणामेभ्यो भिन्नस्य वस्तुनो व्या-पकस्यात्मत्वादर्थभेदाभावात् । तथा नामान्तरकरणे च नित्यानित्यविकल्पानुपपत्तेर्नाम्य संतानो वाच्यः स्यात् । नित्यविकल्पे तस्य संतानिव्यापकत्वाभावोऽनेकस्वभावेन तद्व्यापकत्वे तस्य नित्यैकरूपत्वविरोधात् एकस्वभावेन तद्व्यापकत्वे संतानिनामेकरूपत्वापत्तेः कुतः संतानः अनेकव्यापिनः क्रमशः संतानत्वात् । तदनित्ये विकल्पेऽपि न संतानः, संतानिवदेकादेकप्रत्ययगम्यत्वादिविषयत्वात् अपि तु संवृत्याऽन्येष्वनन्यव्यवहारात्, अनन्य इति शब्दविकल्पलक्षणत्वादेकत्वमुपचरितमिति । अन्येष्वनन्यशब्दोयं संवृतिः सौगतैरभि धीयते संतानः । सोपि कथं मृषा न स्यात् ?। अस्तु व्यलीकोऽयं व्यवहारस्येष्टत्वादिति चेत्तर्हि व्यलीकव्यवहारेपि विशेषानुपपत्तेः संबन्धनियमाभावस्तदवस्थः, सकलसंतानिनां साङ्कर्यस्यापरिहृतत्वात्, उपचरितेनैकसंतानेन केषांचिदेव स्वेष्टसंतानिनां व्याप्तेर्निय-मयितुमशक्तेः । यदि तु मुख्यार्थ एव संतानः स्यात्तदा न संवृतिः । संवृतिरेव सन्तानस्तथोपचारादिति चेत् न, तस्य मुख्यप्रयोजनम-त्वविरोधात् । मुख्यप्रयोजनभावं, प्रत्यभिज्ञानादेर्मुख्यस्य कार्यस्य करणात् । उपचारस्तु नर्ते [न ऋते] मुख्यात् । यथाग्निर्माणवकः । इति

तदुत्थापकानि प्रकम्पादीन्यननुभवत्वात्, यथाऽवचनेऽज्ञस्यस्यैव नियामकमनुगतस्यामतु तदुत्थापकानि मौनमवादीन्यननुगतस्यादिति भावः। 'न चैवमिति' एवं मौनमवादीनामशक्यत्वेऽन्वमपि अन्तर्जल्पसम्भवादिति यदि स्पष्टोच्चारामावेऽप्यन्तर्वचनवचनकरणवीर्यस्त्वादन्यथाऽन्तर्वस्याप्रसक्षापत्तेर्मध्यमावेऽस्योर्भेदानापत्तेमेति भावः। तत्त्वावबोधाभावेऽपि चेति तथा च तत्त्वाभावयोर्भावादनयोरप्यभिचारित्वमशक्यत्वस्येति न तत्रानवबोधोऽन्तर्भावयितुं शक्य इत्यर्थः। तत्र भावोऽवबोधाभावः। आपन्नोक्तिद्वयस्येति कारिकाक्रमापेक्षया, को धर्मविशेष इति, सर्वत्र इत्यर्थः इति प्रयुक्ताः के हि प्रकारभेद इत्यर्थः। अथान्यस्य नैरात्म्यमिति अथात्मस्य नैरात्म्यं चेति पक्षयोरित्यर्थः। 'अर्थरूपमिति' तथा च भावाभावविषयत्वादिशेष इत्यर्थः। समानसमयत्वप्रसङ्गादिति क्षणिकत्वविरोधे हेतुत्वेनान्वेति, प्रत्यक्षकालवृत्तेर्विषयस्य यद्युत्तरकाले प्राक्कालवृत्तित्वस्याप्यभ्युपगमे क्षणिकत्वविरोधस्य स्पष्टत्वात्। द्वितीयपक्षपवृत्तिध्वंसप्रतियोगित्वस्यैव क्षणिकत्वसाधकत्वादितरस्यातिनिगम्यत्वाच्च ॥ ५० ॥

हिनस्त्यनभिसन्धात् न हिनस्त्यभिसंधिमत्। बध्यते तद्द्वयापेतं चित्तं बद्धं न मुच्यते ॥ ५१ ॥

हिंसाभिसंधिमच्चित्तं न हिनस्त्येव प्राणिनं तस्य निरन्वयनाशात् सन्तानस्य वासनायाश्चासम्भवात्। अनभिसन्धिमद्बोधस्तु चित्तं हिनस्ति। तत एव हिंसाभिसन्धिहिंसाचित्तद्वयादपेतं चित्तं बध्यते। यच्च बद्धं तन्न मुच्यते, ततोऽन्यस्य मुक्तः। इति कोऽन्यः प्रकाशयेदिति एतच्च तस्यैवम्? संतानादेरयोगादिति—कर्तृत्वस्यासु चित्तयोर्विनाशात् कर्तुरविक्षिप्तत्वात् तदुभयविनिर्मुक्तस्य बन्धात्तद्विनिर्मुक्तिश्च यमनियमादेरविशेषतः कुर्वतो वा वञ्चकत्वमारित्वं प्रसेतव्यम्। न चैवमनेकान्तवादिनः, प्रतिक्षणं परिणामान्यत्वेऽपि जीवद्रव्यस्यान्व

पृथग्भूतौ मिथः स्वामयतो वा यौ समं सहेतुकेतरौ वा, प्रतिपत्त्यभिधानभेदेऽपि ग्राह्यग्राहकाकारवत्, स्वभावप्रतिबन्धात्। न हि तयोर्भिन्नः कार्यकारणभावः प्रतिबन्धः समसमयत्वात्  "नाशोत्पादौ समं यद्वन्नामोन्नामौ तुलान्तयोः" इति वचनात्। नापि स्वाभ येन सह कार्यकारणभावः, समनन्तरस्वलक्षणक्षणाभ्यां नाशोत्पादयोरनन्तरत्वप्रसङ्गात्। तयोस्तद्धर्मत्वाद्विशेषणविशेष्यभावः संबन्ध इति चेन्, वैशेषिकमतसिद्धेः। कल्पनारोपितत्वात्तयोर्न तत्सिद्धिरिति चेत्तर्हि पूर्वक्षणविनाशोऽनन्तरक्षणस्वभावस्तदुत्पादमेवेति सिद्धः स्वभावप्रतिबन्धः। न चैवं प्रतिपत्त्यभिधानभेदो विरुध्यते, संविदि ग्राह्यग्राहकाकारयोरपि तद्विरोधप्रसङ्गात्। ततस्तद्द्वयोरभेद एव। संख्याद्यन्यमतिस्तुल्यादिवत् सत्यपि भेदे समकालभाविनोः क्व सहकारी पुनरन्यतरस्यैव हेतुरहेतुर्वा स्यात्, कार्यरूपादेरिव कारणम्। संज्ञा हि प्रसभिन्ना, अन्य इष्यम। तेनादितम्यस्योभयत्र संबन्धाभिव्यञ्जनत्वं नादिद्वयापेक्षयोच्यते। संख्याद्यन्यादिपन्मतिस्तुल्यादिवत् क्रमभाविनोर्नाशोत्पादयोः सत्यपि भेदे समकालभाविनोस्तयोर्घटकपालाभावयोरिव सहकारी मुद्गरादिः कथं कपालोत्पादस्यैव हेतुर्न पुनर्घटविनाशस्य तस्यैव चाऽसौ हेतुर्न तु कपालोत्पादस्य स्यात्  कार्यरूपादिस्तवकस्यैकसामग्र्यधीनस्य कारणरूपादिस्तवकवत्। घट-भेदे तथा कार्यकारणयोरुत्पादविनाशौ न सहेतुकाहेतुकौ सहभावाद्रसादिवत्। न हि कारणरसादिकलापः कार्यस्य रसस्यैव हेतुर्न पुना रूपादेरिति प्रतीतिरस्ति, यतः साध्यशून्यो दृष्टान्तः स्यात्, नाप्यसहभावो रसादीनां, येन साधनविकलः। पुरुषधिषणाभ्यामनेकान्त इति चेन्, सौगतानां पुरुषासिद्धेः। स्याद्वादिनो तु तस्यापि सहेतुकत्वात् पर्यायार्थतो भिन्नभावात्, द्रव्यार्थतोऽहेतुकत्वाच्च धिषणाः पुरुषस्य ताभ्यां हेतोर्व्यभिचारिता, कारणानन्तरं सहभावात्। इति प्रकरणसामर्थ्यात्सविशेषणस्य सहभावस्य हेतुत्वाच्च न व्यभिचारः स्यात्। न चैवमसिद्धं साधनम्, मुद्गरादिव्यापारानन्तरं कार्योत्पादवत् कारणविनाशस्यापि प्रतीतेः, विनष्टो घट उत्पन्नानि

त्वसिद्धत्वात् । ननु च सत्त्वमस्ति क्षणिकत्वमपि क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वस्यानुपपत्तेरित्यनुमानादन्वयविनाशित्वसिद्धे-
र्भावानां तेषामेकत्वासंभवात् सादृश्यप्रत्यभिज्ञानविषयत्वोपपत्तेर्भ्रान्तमेव तत्रैकत्वप्रत्यभिज्ञानं सिद्धमविसंवादाभावादिति चेत् न,
तस्यानुमानस्य विरुद्धत्वात् । तथा हि । यत्सत् तत्सर्वं कथंचिन्नित्यं सर्वथा क्षणिके क्रमयौगपद्याभ्यामर्थक्रियाविरोधात्सत्त्वस्यानुपपत्तेरिति ।
न च तावदेतयोरनैकान्तिकत्वं सर्वथा नित्यत्वे सत्त्वस्याभावात् सर्वथा क्षणिकत्ववत् । तदभावश्च क्रमाक्रमानुपपत्तेः । तदनुपपत्तिश्च
पूर्वापरस्वभावत्यागोपादानाभ्यामन्वितरूपाभावात् सकृदनेकस्वभावत्वाभावाच्च । न हि कूटस्थेऽर्थे पूर्वोत्तरस्वभावत्यागोपादाने स्तः, क्षणिके
वान्वितं रूपमस्ति यतः क्रमः कालकृतो देशकृतो वा स्यात् । नापि युगपदनेकस्वभावत्वं यतो यौगपद्यं, कौटस्थ्यविरोधादिनाऽनन्वय-
क्षणिकत्वव्याघाताच्च । सहकारिक्रमाक्रमापेक्षया तत्र क्रमयौगपद्यकल्पनापि न साधीयसी स्वयं तदपेक्षा कार्येतरस्वभावस्याभावे तद-
नुपपत्तेः । कार्यकारी तदपेक्षा, न पुनर्नित्यस्य क्षणिकस्य वेत्यपि न श्रेयान्, तेषां तदकार्यत्वप्रसङ्गात् । तदसहितेभ्यः सहकारिभ्यः
कार्यानुत्पत्तेरन्यथानुत्पत्तेस्तदकार्यत्वनिर्णय इति चेत् तर्हि येन स्वभावेनैकेन सहकारिणा सहभावस्तेनैव सर्वसहकारिणा यदि तस्य
स्यात्तदैककार्यकरणे सर्वकार्यकरणात्क्रमकार्यानुपपत्तिः सहकार्यन्तराभावेऽपि च तत्सहभावात्सकृदेव सकलकार्योत्पत्तिः प्रसज्येत ।
स्वभावान्तरैः सह कार्यान्तरसहभावे तस्य क्रमाक्रमवृत्त्यनेकस्वभावत्वसिद्धेः कुतो नित्यमेकस्वभावं क्षणिकं वा वस्तु क्रमयौगपद्ययोर्व्यापकं
स्यात् ? कथंचिन्नित्यस्यैव क्रमाक्रमानेकस्वभावस्य तद्व्यापकत्वप्रतीतेः । एतेन विपक्षे हेतोर्बाधकस्य व्यापकानुपलम्भस्य व्यतिरेकनिश्चया-
कथंचिन्नित्ये प्रवृत्तेः प्रदर्शितः प्रत्येयः । ततः सत्त्वं कथंचिन्नित्यमेव साधयतीति विरुद्धत्वात् प्रत्यभिज्ञानविषयस्यैकत्वस्याप-
हारकं, येन सादृश्यविषयत्वात्तस्य बाधकं सिद्धमप्यन्यथा साधयेत् । ननु चेदं प्रत्यभिज्ञानं नैवं प्रमाणं गृहीतग्रहणात्प्रत्यक्षस्य स्मर

तत्प्रत्यभिज्ञानम्, अकस्मान्निर्विषयं, न। कुतः तदविच्छिन्ना विच्छेदनं विच्छिन्न्, न विच्छिन्नविच्छिन्न् तथा, अभेदरूपाविच्छेदानुभवादित्यर्थः। विपर्यये इत्याध्याहार्यम्। विपर्यये स्थायित्वाऽभावे, युक्तसम्भवदोषापतोऽनुभव-परिणतस्यात्मनः स्मृतिपरिणामरूपैकत्वगमनानापत्तेः, क्षणिकस्य क्रमिकोभयपरिणामानाधारत्वादिति भावः। एवं तथैवता-परिणतबुद्धिविषयैक्यानुपपत्तेर्विपर्यये विषयतोऽपि युक्तसम्भवदोषापत्तिर्ध्यातव्या। तथा ते तव मते, क्षीराक्षीरादिविषयस्तु कथञ्चित् क्षणिकः प्रत्यभिज्ञायमानत्वात्, न च प्रत्यभिज्ञानमाकस्मिकं, तथैवंतापरिणामव्युपरामेणाविच्छेदानुभवात्, सर्वथैक्यस्य विषयत्वे स स इत्यापत्तेः, स्थूलस्थलभिदामेवमाने च क्षणभिन्नधर्माभेदमानस्याप्यर्थतः सिद्धत्वात्, भिन्न कालपार्श्वमर्यादकत्र धर्मिणि तादात्म्येन माने तयोर्मिथोऽपि स्वावच्छेदककालान्यकालवृत्तित्वसम्बन्धेनान्यथादिति भावः। न धात्राप्रयोजकस्य, कथञ्चित्क्षणिकत्वाभावे दर्शनस्मरणयुक्त्योः पूर्वापरपर्यायाप्रवृत्त्याऽसञ्चरणदोषापत्तेः। क्षणिकधर्मा-भिन्नत्वाच्च धर्मिणोऽपि क्षणिकत्वं कथञ्चिदविरुद्धमेव। वस्तुतः क्षणसम्बन्धस्य सर्वे वस्तुनि च लाघवादेकस्यैव कल्पनात् सिद्धमनायासेन सर्वत्र क्षणिकत्वमिति पञ्चावलम्बने प्रदर्शयिष्यामः। 'प्रमाणान्तरं नानुमानाद्यप्रत्यक्षमिष्यते क्षणिकत्वादिभिरिति' अनुमानमिदं प्रमाणत्वप्रत्यर्थं क्षणिकत्वादिभिर्नेष्यते इत्यर्थः, यद्यपि प्रमाणान्तरमित्यत्र एव प्रकृतबुद्धिविषयतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रमाणप्रतियोगिकभेदवत्प्रमाणमित्युक्तार्थो लभ्यत एव न तदयं विशिष्य प्रतियोगितावच्छेदकावच्छिन्नबाधकपदमपेक्ष्यते, नीलो घटोऽस्ति न घटान्तरमित्यादौ तथा दर्शनात्, तथाऽप्यनुमानादिति स्पष्टार्थमिति मन्तव्यम्। नापि युगपदनेकस्य भावत्वमिति नित्ये क्षणिके चेति गम्यम्। यतो

यौगपद्यमित्यनन्तरं स्यादिति शेषः । 'कौटस्थ्यविरोधादिति,' यद्यपि क्रमभाविपूर्वापरस्वभावत्यागोपादाननियतः कौटस्थ्यविरोधो न युगपदनेकस्वभावत्वे, तथापि युगपदेकस्यानेकस्वभावव्याप्तित्वाविरोधवत् क्रमेणापि तस्य तत्प्राप्तौ कौटस्थ्यं विरुध्यत एवेति द्रष्टव्यम् । इयमेव दिग् निरन्वयविनाशित्वाभ्युपगमेऽपि । तदुभयसंस्कारजनितमिति । न च संस्कारद्वयजन्यत्वे प्रत्यभिज्ञानस्य तदुभयोल्लेख एव स्यान्नैकत्वोल्लेख इति शङ्कनीयम् । तदेकत्वविक्षेपे विषयताविशेषस्यैव प्रयोजकत्वाद्वह्निपर्वतयोरनुमिनोमि नानुमिनोमीत्यादिवदिति द्रष्टव्यम् । तत्र सम्प्रत्ययोपाख्यायः कथं विश्वासगुरुर्न कथञ्चित्, प्रत्येकमविरोधवत् समुदायाविरोधस्याप्यनुभवसाक्षिकत्वादिति भावः । इदानीन्तनतयेति, न च धर्मस्यायोग्यतया प्रत्यक्षे भाना योगात्, " सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिनेति " वचनादिति वाच्यम् । योग्योपसर्जनतयाऽयोग्यस्यापि वर्तमानक्षणस्य क्षयोपशमोपनीतस्य प्रत्यक्षे भानाविरोधात्, संसर्गतया वाऽस्तु स(त)द्भानाविरोध इति दिग् । योगित्वापत्तिः तत्प्रत्यक्षस्य योगिप्रत्यक्षत्वाप(त्ते:)त्तिः, ततः क्षणिकं कालमेवादायेति नानाक्षणसम्बन्धमेवादायेत्यर्थः । अपोद्धारकल्पनयेति अपोद्धारकल्पना धर्मिभिन्नधर्मविवेचनं, कथञ्चिज्जात्यन्तरे सकलधर्मतादात्म्यसहिष्णावखण्डपदार्थे, सर्वथा जात्यन्तरे सर्वथा नित्ये सर्वथाऽनित्ये च परस्परनिरपेक्षे । अखण्डविवेचनस्यैकत्वनिबन्धनत्वेऽतिप्रसङ्गमाशङ्कते—न चेत्यादिना, अखण्डस्य विवेचनत्वं तत्रासिद्धम्, भागभेदेन विवेचनशक्तेरित्युत्तरयति—तेषामित्यादिना तथैकद्रव्यमित्यन्तेन, सदाद्यात्मनाऽङ्गादीनां तादात्म्याभ्युपगमे तु महत्त्वपार्थक्यपि देशाभेदेनैकद्रव्यत्वमिष्टमेवेत्याह—तादात्म्ये पुनरित्यादिना, इदं तु ध्येयम्, सत्त्वादिनात्माकाशादीनामेकत्वं यथैकजातीयत्वव्यवहारनिबन्धनं, न त्वेकद्रव्यत्वव्यवहारनिबन्धनं, घटादिपर्याये मृदादौ

सत्त्वादिनैकद्रव्यत्वानिष्टेः, तथाऽपि सत्त्वादिपर्याये द्रव्यत्वेनैवोर्ध्वतासामान्यत्वात्सदात्मनैकद्रव्यत्वं सर्वत्राविरुद्धं, तथा व्य सत्त्वात्मना सत्त्वादिपर्यायाश्रयतावच्छेदकावच्छेदेनैव, तेन सर्वमेकं द्रव्यं सद्विशेषादिति वत् घट एकद्रव्यमित्यादिनं प्रयोग इति सप्तमीविग्रहः । उभयदोषप्रसङ्ग एकत्वानेकत्वपक्षयो सौगताद्यैर्बाधापादितदोषापत्तिः । 'अचोरेति' चौरा त्पारदारिकाच यथाऽचौरापारदारिको जात्यन्तरं, तथा केवलादुत्पादादेरयात्मक वस्त्विति भावः । अनुपलम्भसाधन(ना) त्वादिति, एकत्र प्रतिबन्धकमहविपक्षत्वस्यैवान्यत्र विरोधपदार्थस्योक्तेरिति भावः । वचनामावादिति चलितप्रतिपत्तेरेव संशयलक्षणत्वात्, चलितत्वं चैकधर्मिकविरुद्धनानाकोटिकज्ञानत्वमिति विरोधाभावे ज्ञाने तदसिद्धेरिति भाव ॥ ५६ ॥

केन पुनरात्मनाऽनुत्पादविनाशात्मकत्वाद्वस्तिस्थितिमात्रं ? केन चात्मना विनाशोत्पादावेव ? कथं च तत् त्रयात्मकमेव वस्तु सिद्धम् ? इति भगवता पर्यनुयुक्ता इवाचार्याः प्राहुः —

न सामान्यात्मनोदेति न व्येति व्यक्तमन्वयात् । व्येत्युदेति विशेषात्ते सहैकत्रोदयादि सत् ॥ ५७ ॥

पूर्वोत्तरपरिणामयोः साधारणः स्वभावसामान्यात्मा द्रव्यात्मा । तेन सर्वं वस्तु नोत्पद्यते न विनश्यति च व्यक्तमन्वयदर्शनात् । लूनपुनर्जातनखादिष्वन्वयदर्शनेन व्यभिचार इति चेत् न, व्यक्तमिति विशेषणात्, प्रमाणेन बाध्यमानस्यैकत्वान्वयस्याव्यक्तत्वात् । न चात्रान्वयः प्रमाणविरुद्धः, सत्यप्रत्यभिज्ञानसिद्धत्वात् । ततोऽन्वितात्मना स्थितिरेव । तथा विनश्यत्युत्पद्यते च सर्वं वस्तु विशेषानुभवात् । भ्रान्तविशेषदर्शनेन शुक्ले शङ्खे पीताद्याकारज्ञानलक्षणेन व्यभिचार इति चेत्, न, व्यक्तमिति विशेषणस्यानुवृत्तेः । न हि भ्रान्तं विशेषदर्शनं व्यक्तं येन तदपि पूर्वाकारविनाशाजहद्वृत्तोत्तराकाराविनाभावि स्यात् । न च प्रकृते विशेषदर्शनमव्यक्तं, बाधकाभावात् । नित्ये

स्योत्पत्तिस्तथा दक्षिणविषाणोपादानमपि तत्र तस्योत्पत्तेः प्रागभावसिद्धेः, यत्र यदा यस्य प्रागभावस्तत्र तदा तस्योत्पत्तिरिति नियमकल्प-नायां अपि तत्र भावात्। स्वोपादानेतरनियमश्च कुतः स्यात्? प्रागभावनियमादिति चेत्, समानसमयजन्मनो स एव कुतः? तदुत्पत्तिनियमादिति चेत् सोपि कुतः? स्वोपादाननियमादिति चेत् स्वोपादानेतरनियमः कुतः स्यात्? इत्यादि पुनरावर्तते इति चक्रकम्। सत्य-विपाकस्योत्पत्तिरिति प्रत्ययविशेषादुत्पत्तिनियमोपि न श्रेयान् कारकपक्षस्य विचारयितुमारब्धत्वात्। ज्ञापकपक्षे तु प्रागभावनियमोपि तदुत्पत्तिविशेषादेवेति नोत्पत्त्या प्रागभावगतिः प्रागभावादप्युत्पत्तिनियमनिश्चयमसंकेरितरेतराश्रयस्य दुर्निवारत्वात्। ततो नोत्पत्तेः प्रागभावः कार्यस्याभावात्मकः, तस्य भावस्वभावस्यैवाबाधितप्रतीतिविषयत्वात् प्रागभावाभावस्य कार्योत्पादरूपत्वात् ॥ ९७ ॥ तथा हि।

भाष्ये फलाफलात्मकमिति उत्पादव्ययात्मना फलात्मकं ध्रौव्यात्मना चाफलात्मकमित्यर्थः। घटयोग्यमृद्द्रव्यादिस्वरूपेणेति, तच्च स्वरूपं घटोपादानकारणतावच्छेदको घटसामग्रीनाश्यतावच्छेदकश्च धर्मविशेषः, तदुभयैक्यकल्पनायां लाघवात्, एतेन कपालत्वादिना घटाद्युपादानकारणत्वं नैयायिकाद्यभिमतमपास्तम्। कपालादिनाशे घटादिसामग्र्या अहेतुत्वात्, एकस्मादेव मृत्पिण्डाच्चक्रादिव्यापारेण घटोत्पत्तिदर्शनात्, संघातभेदाभ्यां घटादेव घटान्तरोत्पत्तेश्च, कपालत्वघटत्वादिना हेतुत्वे मानाभावाच्च। न पुनः 'साधारणेनेति' व्याप्यधर्मावच्छिन्नेन व्यापकधर्मावच्छिन्नस्यान्यथासिद्धिनिरूपणादित्यर्थः। प्रागभावसिद्धेरिति तत्रत्यस्योपादानरूपप्रागभावसिद्धेरित्यर्थः। तत्र भावादिति कार्यभेदप्रयोजकभेदप्रतियोग्युपादा-नात्मकप्रागभावविश्रान्तत्वादिति भावः। प्रतियोगिभेदेनाभावभेदे स्वीक्रियमाणे एकप्रतियोगिकाभावचतुष्टयस्यैक्यापत्तिस्तत्तत्कालसंसर्गावच्छिन्नप्रतियोगित्वादिनाऽभावाभ्युपगमे तु तत्तदाधेयत्वादिना घटसत्त्वादेरपि भेदापत्तिरित्याद्युक्तं कार्यद्रव्य

द्वितीयपक्षे तु न पटपरिमाणादणुपरिमाणान्वयः पटस्य कारणं तेषां पटसमानपरिमाणतया प्रतीतेः, समुदितानामेवातानवितानाका राणां पटपरिमाणारम्भकत्वात्स्वभावविभ्रमसङ्गात्। न हि तथाऽपरिणतं तन्तुभवति ' तद्भावः परिणामः " इति वचनात्। न चैवं परिणा मपरिणामिनोरभेदः स्यात्, भवनभेदस्याकर्मधिभेदसिद्धेः, परस्यापि तन्नैव विवादाभावात् तन्तुद्रव्यपटपर्याययोरन्वयव्यतिरेकप्रत्ययविष यत्वात्। तन्तुद्रव्यं हि प्राच्यापटाकारपरित्यागेन तन्तुत्वापरित्यागेन चापूर्वपटाकारतया परिणमदुपलभ्यते पटाकारस्तु पूर्वाकाराव्यति रिक्त इति सिद्धं, सर्वथा तत्कारणस्यापूर्वरूपवर्तिनः एवोपादानत्वायोगादपरित्यक्तस्वपूर्वरूपवर्तिवत् तथाऽप्रतीतेर्द्रव्यभावप्रत्यासत्तिनि बन्धनत्वादुपादानोपादेयभावस्य। भावप्रत्यासत्तिमात्रभावे समानाकाराणामखिलार्थानां तत्प्रसङ्गात्, कालप्रत्यासत्तेरभावे पूर्वोत्तर समनन्तरक्षणवर्तिनामशेषार्थानां तत्प्रसङ्गः, देशप्रत्यासत्तेरभावे समानदेशानामशेषपदार्थानां तत्प्रसङ्गात्। सद्द्रव्यत्वादिसाधारणद्रव्यप्रत्या- सत्तेरपि तद्भावानियमात्। असाधारणद्रव्यप्रत्यासत्तिः पूर्वाकारमात्रविशेषप्रत्यासत्तिरेव च निबन्धनमुपादानस्य स्वोपादेयं परिणामं प्रति निश्चीयते। यदुक्तं " त्यक्तात्यक्तात्मरूपं यत्पूर्वापूर्वेण वर्तते। कालत्रयेऽपि तद्द्रव्यमुपादानमिति स्मृतम्॥ १॥ यत्स्वरूपं त्यजत्येव यन्न त्यजति सर्वथा। तन्नोपादानमर्थस्य क्षणिकं शाश्वतं यथा॥ २॥ इति। ततो न तन्तुविशेषाकारः पटस्योपादानं येनाल्पपरिमाणा- रब्धत्वेन कारणान्महापरिमाणस्य पटस्योत्पत्तेरकारणत्वं साध्यशून्यं न भवेत्। हेतुश्चानैकान्तिकः, प्रशिथिलावयवमहापरिमाणकार्पासपिण्डा दल्पपरिमाणनिबिडावयवकार्पासपिण्डोत्पत्तिदर्शनात्। विरुद्धश्चायं हेतुः, पुद्गलद्रव्यस्य महापरिमाणस्य यथासंभवं सूक्ष्मरूपेण स्थू लरूपेण वा पर्यायेण वर्तमानस्य स्वकार्यारम्भकत्वदर्शनात्। कार्यद्रव्यस्य महापरिमाणकारणारब्धत्वेन व्याप्तिसिद्धेः स्वपरिमाणाल्पपरि माणकारणारब्धत्वविपरीतसाधनात्। ततो नेदमनुमानं बाधकं, कपालोत्पादस्य पटविनाशस्य चैकहेतुत्वनियमप्रतीतेरेकस्मादेव मुद्गर

वाद् । विनाशः केवलो नास्ति स्थित्युत्पत्तिरहितत्वात् तद्वत् । इति योजनात् सामर्थ्यादुत्पादव्ययध्रौव्ययुक्तं सदिति प्रकाशितं भवति, तदन्यतमापाये सत्त्वानुपपत्तेः । प्रत्येकमुत्पादादीनां सत्त्वे त्रयात्मकत्वमसद्भावनवस्थेत्यपि पूरीकृतमनेन, तेषां परस्परमनपेक्षाणामेकत्र सत्त्वनिराकरणात् ॥ ५८ ॥ किं च —

यस्तु मतोऽन्य इति यस्तु तत उपादानकपादन्यश्चयस्तस्य नोपादेयोत्पादहेत्वन्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकप्रतियोगित्वमित्यर्थः । भेदसङ्घातेभ्य इति अत्रास्मदीयाः श्लोकाः "संयोगाच्च विभागाच्च द्रव्यमुत्पद्यते द्वयात् । वैजात्यं चापि वैचित्र्यं कार्ये तत्र प्रकल्प्यते ॥१॥ अणुद्वयणुकसंयोगाद्वयणुकोत्पत्तिमिच्छताम् ॥ तद्विभागादणूत्पत्तौ प्रद्वेषः किंनिबन्धनः ॥२॥ कपूरकुण्डलीभावे तत्र स्वर्णवदिष्यताम् ॥ साधारणमुपादान क्ष्मादि किं चिन्तयाऽत्र नः ॥ ३ ॥ तादात्म्यनियताधाराधेयभावनिबन्धनम् ॥ कारणं प्रत्युपादेयं विभिन्नं परिणामि वा ॥४॥ तावत् संघातभेदा वा हेतुस्तच्छालि वस्तु वा ॥ गन्धस्य विनिगम्यत्वमप्यत्रैवत् सहायताम् ॥ ५ ॥ तादात्म्यन्तरात्मके वस्त्वन्येवं किञ्चिन्न दुष्यति ॥ कार्याकार्यभेदाभेद—व्यवसायव्यवस्थितेः ॥ ६ ॥ संयोगवद्विभागेऽपि वैजात्यस्य व्यवस्थितौ ॥ एकस्य हेतुताऽन्यस्य नेति मोहविजृम्भितम् ॥ ७ ॥ संयोगे समवायेऽहेतुतायां नियामकः । मृद्द्रव्ये सविभागे स्यादंशांशो वा विभज्यताम् ॥ ८ ॥ स्वध्वंसरवेन योगेनो—पादान हेतुरस्तु वा ॥ तद्द्रव्यव्याप्तिरत्र स्या—न्नमोव्याप्तिर्वा दीर्घिका ॥ ९ ॥ संयोगजन्यता जन्य—द्रव्ये हि भवतोच्यते ॥ मया तत्र विभावीय इति गौरवमीः कुतः ॥ १० ॥" तथाऽप्रतीतेरिति स्वक्तात्यक्तात्मरूपतयाऽप्रतीतेरित्यर्थः । असाधारणेत्यादि आतानवितानरूपभावप्रत्यासत्तिमत्तन्तुद्रव्यप्रत्यासत्तिः पटोपादानत्वनिबन्धनमित्यर्थः ॥ ५८ ॥

घटमौलिसुवर्णार्थी नाशोत्पादस्थितिष्वयम् । शोकप्रमोदमाध्यस्थ्यं जनो याति सहेतुकम् ॥ ५९ ॥
पयोव्रतो न दध्यत्ति न पयोत्ति दधिव्रतः । अगोरसव्रतो नोभे तस्मात्तत्त्वं त्रयात्मकम् ॥ ६० ॥

प्रतीतिभेदमिदं समर्थयते सकललौकिकजनस्याचार्यः। स हि घटं भङ्क्त्वा मौलिनिर्वर्तने घटमौलिसुवर्णार्थी तन्नाशोत्पादस्थितिषु विषादहर्षौदासीन्यस्थितिमयं जनः प्रतिपद्यते इति, घटार्थिनः शोकस्य घटनाशनिबन्धनत्वात् मौल्यर्थिनः प्रमोदस्य मौल्युत्पादनिमित्तत्वात्, सुवर्णार्थिनो माध्यस्थ्यस्य सुवर्णस्थितिहेतुकत्वात् तच्छोकादीनां निर्हेतुकत्वे तदनुपपत्तेः, पूर्ववद्वासनामात्रनिमित्तत्वेऽपि तन्नियमासंभवात्। तद्वासनायाः प्रबोधकप्रत्ययनियमाभिमतत्वाच्छोकादिनियम इति चेत्, तर्हि नाशोत्पादस्थितय एव वासनाप्रबोधकप्रत्यया इति पारम्पर्येण एव शोकादिहेतवो बहिरङ्गाः। अन्तरङ्गास्तु मोहनीयप्रकृतिविशेषोदया इति तेषां वासनेति नाममात्रं भिद्येत, नार्थः स्याद्वादिभिर्मोहनीयविशेषाणां वासनास्वभावत्वोपगमात्। ततः सिद्धं लौकिकजनानामुत्पादादित्रयात्मकं वस्तु, तत्प्रतीतेरेव सिद्धेः ॥५९॥ किंच—

लोकोत्तरजनस्येनापि तत्र प्रतीतिनान्तरं विनाशोत्पादस्थितिमात्रं प्रसाधयति दधिपयोऽगोरसव्रतानां क्षीरदध्युभयवर्जनात्, क्षीरस्य न दध्यात्मनोत्पद्यमाने गोरसस्वभावेन तिष्ठतीति पय एव मयाद्य भोक्तव्यमिति व्रतमभ्युपगच्छतो दध्युत्पादेऽपि पयसः सत्त्वे दधिवर्जनानुपपत्तेः दध्येव मयाद्य भोक्तव्यमिति व्रतं स्वीकुर्वतः पयस्यपि दध्नः सत्त्वे पयोवर्जनायोगात् अगोरसं मयाद्य भोक्तव्यमिति व्रतमङ्गीकुर्वतोऽनुत्पन्नदधिपयोगोरसे दधिपयसोरभावे तदुभयवर्जनाघटनात्। प्रतीयते च तद्व्रतस्य तद्वर्जनम्। ततस्तत्त्वं त्रयात्मकम्। न चैवमनन्तात्मकत्वं वस्तुनो विरुध्यते, प्रत्येकमुत्पादादीनामनन्तेभ्य उत्पद्यमानविनश्यत्तिष्ठद्रूपाः भेदेभ्यो भिद्यमानानां विवक्षितवस्तुनि तत्त्वतोऽनन्त्यमेवोपपत्तेः। पररूपव्यावृत्तीनामपि वस्तुस्वभावत्वसाधनात् तदवस्तुत्व-

विषययोस्तथाभावाभावात्वेन न प्रतिपद्यन्ते, प्रत्युत परिज्ञातप्रवचनोपनिषद्स्तथात्वेन प्रतिपद्यमानान् प्रति प्रत्यवतिष्ठन्ते, तान् प्रतीदमाचक्ष्महे । सर्वं सत्त्वादीपमाव्योमपदार्थजातं न सर्वथाऽनित्यं, नापि सर्वथा नित्यं, प्रदीपादेरपि सर्वथाऽनित्यत्वे पुद्गलपरमाणुत्वादिनाऽपि ध्वंसप्रसङ्गात् । अवयवावयविभावस्य समवायादिसम्बन्धनिबन्धनत्वे तत्रापि सम्बन्धान्तरान्वेषणे अनवस्थानात्तादात्म्येनैव तत्सम्बन्धस्थितौ परमाणुपर्यन्तमपि कथञ्चिद्व्ययस्यैवसिद्धेः, आकाशादेरपि सर्वथा नित्यत्वे संयोगादिस्वभावपरित्यागेन विभागादिस्वभावोपादानानुपपत्तेः, पूर्वरूपपरित्यागस्यैवानित्यत्वलक्षणत्वात्, संयोगविभागादिक्रमिकनानाकार्यजननैकस्वभावमेवाकाशादिकमिति न स्वभावभेद इति चेत्, अयमेवैकस्यानेकस्वभावसंवलनवादः, अन्यथा येन स्वभावेन संयोगजनकमाकाशं तेनैव विभागजनकमित्यभ्युपगमे संयोगविभागयोरैक्यप्रसङ्गः, किं च अनकस्य शक्तिरेवेति कार्यभेदेन तच्छक्तिभेदस्य स्वभावभेदो दुष्परिहरः, शक्तिशक्तिमतोरपि तादात्म्यातिरिक्तसम्बन्धाभावात्, तथा च वस्तुनः कथञ्चिन्नित्यानित्यत्वसिद्धौ येन रूपेण नित्यत्वं तेन रूपेण ध्रौव्यं, येन चानित्यत्वं तेनोत्पादव्ययाविति त्रिलक्षणं जगदिति प्राचीनः परिच्छिन्नः पन्थाः । वस्तुतः क्षणसम्बन्धः क्षणे तादात्म्यरूपः क्षणविशिष्टपदार्थे च परैर्विशेषणताविशेषरूपः कल्पनीय इति गौरवं, मया च सर्वत्र तादात्म्यरूप एव कल्पनीय इति लाघवात्पुद्गलक्षणपर्यायेण सर्वस्य क्षणपर्यायात्मकत्वसिद्धिः, मत्वरक्षणपर्यायेऽपि प्रतीतिव्यवहारानुरोधेन विशिष्टाविशिष्टयोर्भेदध्रौव्ये क्षणविशिष्टपदार्थरूपपर्यायमेवस्थापकत्वः, न च विशिष्टभेदेऽनन्तपदार्थकल्पनापत्तिगौरवं, परस्यापि विशिष्टनिरूपिताधिकरणतानन्त्यकल्पनेन तौल्यात्, न च द्रव्यस्थलेऽपि गुणकर्मान्यसमनिविष्टमपाधारतात्कल्पनास्थलस्य नापि कल्पनमिति वाच्यम् । तथापि पटत्वाभावविशिष्टसमवायाद

रवीयन्याय इति किमतिविस्तरेण, तत्त्वमसीत्यादिवाक्यार्थस्तु केवलज्ञानादिपरिमितिविशिष्टपरमात्मरूपतत्पदार्थेन सह सम्यग्दर्शनादिपरिणतिविशिष्टान्तरात्मत्वंपदार्थस्य भेदाभेदवासपर्यैव समाधेयः स्वसमयाविरोधिभिः सम्यग्दृष्टिभिरिति किम प्रकृतेन। किञ्च भावाभावयोः प्रतियोग्यनुयोगिभावस्य विशेषणविशेष्यभावस्य च स्वरूपसम्बन्धतयैव विश्राम इति " सर्वं सर्वात्मकं जगत् " भावविपर्यासप्रयोजनादिना च प्रतिनियतपर्यायग्रह इति नातिप्रसङ्गः, अत एवैकत्वस्वभावानेकत्वयोर्नान्तरीयकत्वं सिद्धान्तमिदम्, तथा चानुवृत्तिव्यावृत्तिद्वारा स्वपरपर्यायोत्पादव्ययावच्छिन्नं ध्रौव्यं सर्वज्ञानाधारसिद्धमिति द्रष्टव्यम्। न च विरोधः, पर्यायत्वावच्छेदेनोत्पादव्यययोर्द्रव्यत्वावच्छेदेन ध्रौव्यस्य चाविरोधात्, अन्यथा भेदत्वावच्छेदेन गम्यमभेदस्य भेदत्वावच्छेदेन तदभेदस्य चाविरोध औपनिषदाभिमतोऽपि कथं स्यादित्युपरम्यते। "

स्याभित्यमेवेत्यादि, अत्र च नित्यत्वानित्यत्वादिव्यवहारे आकाशघटादौ द्रव्यार्थत्वपर्यायार्थत्वयोस्तुल्यवदाकाशत्वघटत्वादीनां च स्यात्पदद्योतनमर्यादया प्रतिस्वं प्रत्यामासतिप्रसङ्गः, नयवाक्येऽपि यद्धर्मविशिष्टविशेष्यवाचकपदसमभिव्याहारेण नित्यत्वादिविधिद्योतकं पदं प्रयुज्यते तद्धर्मावच्छेदेन तत्र नित्यत्वादिबोधन एव तत्तात्पर्यमित्याकाशमनित्यं घटो नित्य इत्यादेर्नयवाक्यस्य न प्रयोगः, व्यापकसामानाधिकरण्यरूपव्याप्तिपक्षे धूमो वह्निव्याप्यो न रासभत्वेनेत्यादेरित्थमेव न्यायमिमुखेरूपपादितत्वादिति दिक् ॥ ३० ॥

" जगन्नेत्रं यत्र त्रुटिनयपवित्रं किल मया। समालम्ब्य न्यस्तं कुमतशतमस्तं गमयति ॥
तमो नित्यानित्याद्यभिलगममञ्जमणपने। परिष्ठः स्याद्वादो दिशतु गुरुमज्ञानरचियाम् ॥ १ ॥

पवित्र पद्यं मे विशदपदपद्यं श्रुतसुरी–करक्रीडापात्र प्रमदमतिमात्र जनयतु ॥

सुधाप्रम्याः सभ्या इयमगुरुमाशासिषुरितः प्रकृष्टं कल्पद्रोरपि फलमसभ्यं कृतधियाम् ॥ २ ॥

कृत्वा यत्नमनेकपण्डितयतीमभ्यास्य काशीमभूत्–भट्टाचार्यपुरन्दरेभ्य इह यस्तर्केष्वधीती भृशम् ।

तत्स्पर्धां वितनोति कोऽपि जटिलो पद्यस्यपाठस्मयी । तत्किं कुम्भकृता भविष्यति कलिः सार्धं त्रिलोकीकृता ॥ ३ ॥

अधीतास्तर्काः श्रीनयविजयविज्ञांह्रिभजन–प्रसादाद् ये तेषां परिणतिफलं शासनरुचिः ।

इहांशेनाप्युच्चैरवगमफला या स्फुरति मे । तया धन्यं मन्ये जनुरखिलमन्यत् किमधिकम् ॥ ४ ॥ ”

इति श्रीमदकब्बरसुरत्राणप्रदत्तजगद्गुरुबिरुदधारिभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यमहोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंसपण्डितश्रीलाभविजयगणिशिष्यालङ्कारपण्डितश्रीजीतविजयगणिसतीर्थ्यशेखरपण्डितश्रीनयविजयगणिचरणकमलचञ्चरीकेण पण्डितश्रीपद्मविजयगणिसहोदरेण महोपाध्यायश्रीयशोविजयगणिना विरचितेऽष्टसहस्रीतात्पर्यविवरणे तृतीयः परिच्छेदः ॥

॥ अष्टसहस्रीतात्पर्यविवरणे तृतीयः परिच्छेद समाप्त ॥

तद्वचप्रसङ्गात् । न ह्यपरसामान्यं व्यावृत्तिबुद्धिहेतुत्वाद्विशेषाभ्यामपि कथमानमपह्नोतुं शक्यं तस्य सामान्यैकरूपत्वेऽपरविशेषाभाव
प्रसङ्गात्, तदपरविशेषरूपत्वेऽपरसामान्याभावापत्तेः तदुभयरूपत्वे सामान्यविशेषरूपयोः कथंचित्तादात्म्यस्यैवाभ्युपगमनीयत्वात् सामान्यविशेषोभयाकारस्य
तदेकार्थसमवायस्य कथंचिदेकत्वतादात्म्यादपरस्यासंभवात् सामान्यस्यैवाशुद्धत्वाद्युतप्रसमवदृष्टयेन सामान्यविशेषोभयाकारस्य कथंचित्तादात्म्यं वृत्तिः प्रकृत-
हत्वात् । न तयोरपरयोरन्यत्रैकार्थे समवायः परस्परं वा शक्यो वक्तुं, पवस्तावयवयवावयव्यादीनां कथंचित्तादात्म्यं वृत्तिः प्रकृत-
वृत्तोपयुक्ता स्यात् । किं वाऽवयव्यादिभ्योऽवयवादीनामत्यन्तभेदे देशकालाभ्यामपि भेदः स्यात् ॥ ६२ ॥

'एकस्येति' एकस्यावयव्यादेर्भागाभावादेकदेशाभावादनेकत्रावयवादौ वृत्तिर्न भवति । भवति चेत्तदा प्रत्येकमने
कानवयवादिपर्याप्तवृत्तित्वादनेकान्यवयव्यादीनि स्युः, दृश्यतो वृत्तिश्च तत्र नावयव्यादीनां, तद्देशानभ्युपगमात्, अभ्युपग
मेऽनवस्थापत्तेः, भागित्वात् कथंचिदेकत्वाद्वाऽस्यावयव्यादेर्नैकस्य स्यादित्यय वृत्तेर्लोपो नार्हते मते भवतीति
परिणामदेपार्थ । प्रकारान्तराभावादिति संयोगवृत्तौ देशकात्स्न्यान्यतरप्रकारस्यैव दर्शनात् प्रकारद्वयविशेषनिषेधे
वृत्तिसामान्यनिषेधपर्यवसानादित्यर्थः । 'प्रकारान्तरमिति' देशकात्स्न्यविनिर्मुक्तः सम्बन्धप्रकार इत्यर्थः । एतदेव हि
विचार्यत इति समवायोऽपि हि घटे घटत्वस्य कात्स्न्येन तन्तुषु च पटस्य दशावच्छेदेनाभावादेशेनाभ्युपगम्यत इति
तथापि प्रकारद्वयानतिक्रमेन विचारस्य सद्भावसत्त्वादिति भावः । वस्तुत एकत्र तन्तौ न पटः किन्तु यावत्स्विति प्रतीतेः
प्रत्येकमवृत्तेरित्यादिन्यायाच्च प्रकारद्वयं समवायवृत्तौ प्रसिद्धमेव प्रदीपतोक्त इति तदविरोधो भेदाभेदाभ्युपगमं विना दुरुपपाद
इत्याद्युक्तं वादमालायामस्माभिः । सर्वथाऽन्यत्वासिद्धेरिति, तत्काले तत्परिणामेन तदात्मकत्वेन विरोधादतिप्रसङ्गस्य

परिपतिरिष्यते, तथाप्येकप्रदेशावगाहानां तावतां तेषां क्षेत्रकृतमेकत्वमादायोक्ताविरोधो भावनीयः। युक्तं चैतत् एकप्रदेशावगाहानामेव धर्मतोऽन्यानुपूर्वीद्रव्यत्वात् तेषां चासकृत्स्कन्धानामेव सिद्धान्तप्रतिपादनात् सर्वपुद्गलद्रव्याणां चानन्तत्वादित्यालोचनीयं स्वसमयरहस्यविद्भिः ॥ ६३ ॥

**आश्रयाश्रयिभावान्न स्वातन्त्र्यं समवायिनाम्। इत्ययुक्तः स सम्बन्धो न युक्तः समवायिभिः ॥ ६४ ॥**

समवायेन कार्यकारणादीनां परस्परं प्रतिबन्धात् पृथक् स्थातुमयं यतो देशकालादिभेदेन वृत्तिरिति चेत्, स तर्हि समवायिषु समवायान्तरेण वर्तते स्वतो वा? समवायस्य समवायान्तरेण वृत्तावनवस्थाप्रसङ्गात् स्वतो वृत्तौ द्रव्यादेरस्वतोऽनुपपत्तेः समवायवैयर्थ्यात् कार्यकारणादीनां कुतः प्रतिबन्धः? यदि पुनरनाश्रितत्वात् प्रतिबन्धान्तरमनपेक्ष इष्यते तदाप्यसंबद्धः समवायः कथं द्रव्यादिभिः सह वर्तेत, यतः पृथक्सिद्धिर्न स्यात्? तस्मादयुक्तः संबन्धो न युक्तः समवायिभिः। न ह्यप्रतिबद्ध एव समवायिभिः समवायः संबन्धो युक्तिमान्, कालादेरपि संबन्धत्वप्रसङ्गात्। संबद्ध एव हि स्वसंबन्धिभिः संयोगः संबन्धो दृष्टस्तस्य तैः कथंचित्तादात्म्यसंबन्धात्। समवायोऽपि विशेषणविशेष्यभावसंबन्धात्समवायिभिः संबद्ध इति चेत् न, तस्यापि विशेषणविशेष्यभावान्तरेण स्वसंबन्धिभिः संबन्धेऽनवस्थाप्रसङ्गात्, अन्यथा संबन्धत्वविरोधात्। तस्य संबन्धिभिः कथंचित्तादात्म्ये कार्यकारणादीनामपि तदेवास्तु किं समवायेन पदार्थान्तरभूतेन सत्तासामान्येनेव कल्पितेन? फलाभावात्। प्रागसतः सत्तासमवायात् कार्यस्योत्पत्तेः सफलमेव तत्परिकल्पनमिति चेत्, न अनुत्पन्नस्य सत्तासमवायासंभवात्, उत्पन्नस्यापि वैयर्थ्यात् स्वरूपलाभस्यैव स्वरूपसत्तात्मकत्वात् स्वरूपेणासतः सत्तासंबन्धेऽतिप्रसङ्गात्। यदि पुनरुत्पद्यमानमेव कार्यं सत्तासमवायीष्यते; प्रागसतः सत्तासमवाय उत्पाद इति वचनात् ॥ ६४ ॥

'आभयेत्यादि' उत्तरार्द्धे इतिव्याप्तीत्यर्थे, तथा च तथापि स सम्बन्धः समवायाख्यः समवायिभिरयुक्तो सम्बन्ध इति न युक्तो न घटमानक इति, समवायस्यैवाभावाद्दूरे समवायिनां स्वातन्त्र्यपारतन्त्र्यचर्चेति भावः । एवं च स्यान्मतमिति पङ्क्त्या मनुपमर्दभावसंलग्नकत्वमिति द्रष्टव्यम् । स्वरूपसत्तामस्त्येव स्वरूपसत्तात्मकत्वादिति, तदिदमाहुः, न हि देशकालयोः सत्त्व मितरापान्यत् सत्त्वम्, अभावेऽपि तत्कालदेशकर्तृ सत्त्वमभ्युपगम्यत एव, इदानीं भूतले घटाभावोऽस्तीति प्रतीतेः, अभावव्यापृतसद्व्यवहारस्तु भावत्वनिबन्धन एवेति, अतिप्रसङ्गादिति परम्परासम्बन्धेन सामान्यादा विषाभावेऽपि सद्व्यवहारप्रसङ्गादित्यर्थः । स्वरूपसत्त्वयैव सद्व्यवहारोपपत्तौ चालं पदार्थान्तरपरिकल्पनयेति रहस्यम् ॥ ६४ ॥

केवलस्य समवायस्य सत्तासामान्यवभिमत्वादुत्पाद इति मान्यभिधानाद्युत्पादिति मतं तदा—

## सामान्य समवायश्चाप्येकत्र समासित । अन्तरेणाश्रय न स्यान्नाशोत्पादिषु को विधि ॥६५॥

येषां परमार्थतः सामान्यस्याभिन्नत्वमुपचारात्समवायस्य समवायिषु तत्राप्रविभक्तस्वावसंबद्धत्वं, तदुपचारनिमित्त तु समवायिषु सत्सु तस्येदमिति प्रत्ययपरित्वमिति मतं तेषां प्रत्येकं परिसमाप्तेराश्रयाभावे सामान्यसमवाययोरसंभवादुत्पत्तिविपत्तिमत्सु कथं इति । कथितेऽत्र नित्यात्मन्याश्रये सर्वात्मना इदं सामान्यं समवायश्च तावत् । 'तत्सिद्धमदेशे माभासीत्तमाभिन्नत्वप्रसङ्गात्, नाप्यतो चापि सर्वात्मना पूर्वापरपरित्यागात्स्यथा तदभावप्रसङ्गात्, नाप्येकदेशेन, सांशत्वाभावात्, स्वयमेव पश्चाद्भवति स्वप्रत्ययकारि त्वात्, आश्रयविनाशे च न नश्यति नित्यत्वात् प्रत्येकं परिसमाप्तं च' इति व्याहतमेतत् । स्यान्मत सत्तासामान्यं तावत्स्वादिषु प्रत्येकं परिसमाप्तं, सत्त्वस्याविशेषात् । सर्वंमस्ति च, सत्त्वस्याविच्छेदात् । समवायोऽपि सर्वत्र विद्यते, समवायिनां तत्स्वरूपविच्छे-

शक्तित्वानां जन्मविनाशवत्तां तु केनचिदुत्पित्सुत्वेनोत्पद्यमानानामेव सत्तासमवायित्वसिद्धेः 'नित्यसम्बन्धयोरेकत्वात्' इति वचनात् । प्रच्छन्नमुत्पन्नस्य सत्तासमवाययोः प्रागसत्त्वाभावात् तत्राभ्यन्तरागमनस्य सर्वात्मनैकदेशेन चानभ्युपगमात् पश्चाद्रूप व्याप्तेः शाश्वतिकत्वात् इति तदेतदपि स्याद्वादं, सर्वगतस्य सामान्यस्य समवायस्य चैकस्य स्वाश्रयेषु प्रत्येकं परिसमाप्तेरसंभवात् तद्बुद्ध्यालेखनमयपरावृत्तम् । न च सत्त्राविच्छेदात्तदेकत्वं तत्सिद्धेः प्रागभावादिषु सत्तासमवायासंभवाद्विच्छेदोपलम्भात् । प्रागभावादीनां सर्वदा भावविशेषणत्वात् तत्र तद्विच्छेद इति चेन्नैवमभावस्यापि सर्वगतस्यैकत्वप्रसङ्गात्, सर्वत्रासत्प्रत्ययाविशेषाद्विच्छेदाविशेषात् । यथैव हि द्रव्यादिषु सत्प्रत्ययोऽविशिष्टस्तथा पररूपतोऽसत्प्रत्ययश्च । यथा चाभावस्य समवायपरतन्त्रत्वं तथा भावस्याभावपरतन्त्रत्वमपि तदविच्छेदसाधनं, पररूपेणासत एव भावस्य प्रतीतेरन्यथा सर्वसाङ्कर्यप्रसङ्गात्प्रतिनियतव्यवस्थितिविरोधात् । तन्वभावस्यैकत्वे कार्यस्य जन्मनि प्रागभावाभावे प्रध्वंसेतरेतरात्यन्ताभावानामप्यभावप्रसङ्गादनन्तत्वसर्वात्मकत्वात्यन्ताभावापत्तिः । प्रध्वंसस्य चाभावेऽनुत्पन्नस्य कार्यस्य प्रागभावस्याप्यभावादनादित्वप्रसङ्गः प्राक् पश्चादितरेतरात्यन्तविशेषणानुपपत्तिश्च तद्भेदात् । इति कश्चित् तस्यापि कथं सत्तैकत्वे समवायैकत्वे च कस्यचित्सत्तासमवाये सर्वस्य स न भवेत् ? तथा सति भावस्योत्पत्तेः प्रागपि प्रध्वंससमयेऽप्यभावान्तरेऽपि चात्मसत्त्वसिद्धेः कुतः प्रागभावादिभेदस्य व्यवस्था स्यात् ? प्रत्ययविशेषात्तद्व्यवस्थायां सत्तासमवायस्य भेदव्यवस्थाऽस्तु तत एव । न हि प्रध्वंसात्प्राक् कार्यस्य सत्तासमवायः प्रागभावात् पश्चाद्वितरस्मादितरत्रेत्यादिप्रत्ययविशेषोऽसिद्धः परीक्षकाणां, ततः सत्तासमवाययोरनेकत्वं न स्यात् । यदि पुनः प्रागभावादिविशेषणान्येव भिद्यन्ते समवायिनश्च, न पुनः सत्ता समवाय-

रूपा सत्ताऽस्तु असत्त्वात्। तथा समवायोऽपि। न चैवमेकत्वविरोधः सत्तायाः संभावनीयो विशेषतोऽनेकत्वेऽपि सामान्यार्पणादेकत्वा-विरोधात्, सद्विशेषेभ्योऽपि सत्सामान्यप्रतीतेरसद्विशेषेभ्योऽसत्सामान्यप्रतीतिवत्। समवायविशेषेषु समवायसामान्यप्रतीतिश्च न विरुद्धा, संयोगविशेषेषु तत्सामान्यप्रतीतिवत्। इति सर्वं सामान्यविशेषात्मकं सिद्धम्। न च सामान्यस्य विशेषस्य चैवं सामान्यविशे-षात्मकत्वेऽनवस्थानमन्यथा सर्वं सामान्यविशेषात्मकमिति प्रतिज्ञा हीयते, तयोरन्योन्यात्मकत्वसिद्धेर्न्यायार्पणया परस्परतो भेदाच्च पर्यायार्पणया सापेक्षत्वमात्रस्य तयोरिष्टेः। सामान्यस्य हि स्वविशेषापेक्षया विशेषान्तरात्मकत्वे विशेषस्य च स्वसामान्या-भिधीरितस्य सामान्यान्तरात्मकत्वेऽनवस्था स्यान्यथा। भिन्नस्य च सामान्यस्य विशेषाद्विशेषस्य च सामान्यादितरनिरपेक्षत्वे प्रतिज्ञाहानिः प्रसज्यते न पुनरितरथा। इति स्याद्वादिनां सर्वं सुस्थम्। वैशेषिकाणां तु चतुर्थप्रकारानभ्युपगमाद्दुःस्थोपद्रव-वम्। ॥ ६६ ॥ तेषां हि—

येषामिति येषां वैशेषिकाणां सामान्यस्य समवायसम्बन्धेन सम्बद्धत्वात्परमार्थतोऽनुपचाराद्न्वितत्वं सम-वायस्य तु समवायान्तराभावादुपचारात्, तथा च समवायिषु तथा सामान्यवत्प्रतिबद्धत्वादसम्बद्धत्वमिति योजना, नान्वितो चासीति, अनु पश्चात्, इतः सत्त्वशाभ पातीत्यर्थः। भावविशेषणत्वाद्भावविनिर्मुक्तत्वविषयत्वात् भावपरतन्त्रत्वसद्भावविशेषणत्वमेव, एवमप्यभावपरतन्त्रत्वमपि व्याख्येयम्। सर्वैकत्वेऽसत्वैकत्वमपि स्यादित्युक्तं तत्रासत्वै-कत्वे भावाभावाह्वये—अन्यभावस्यैकत्व इत्यादिना, एवं वादिनः सत्वैकत्वेऽपि भावकं तुल्यमित्याह—तस्यापीत्यादिना, प्रत्ययविरोधात् प्रागनासीदित्यादिप्रतीतिभेदात्, तद्रूपचतुष्टयां प्रागभावादिभेदव्यवस्थायां, तत एव प्रत्ययविशेषादेव,

नष्टीत्यादिना प्रागासीन् पश्चान्नविष्यतीत्येवं कालभेदात्, इतरस्मादशादितरत्रास्तीत्यनेन च देशभेदात् प्रतीतिसा धिकः सत्तासमवायभेद उपदर्शितः । यदि च तत्तत्कालदेशरूपविशेषणभेदेऽपि सत्ताया न भेदः, तर्हि तद्देशाभावस्यापि म माभूत, विरुद्धधर्माध्यासेनाभत्ताभेदे च सत्ताभेदोऽपि तद्देशास्तित्वमिति सिद्धं द्वयोस्तुल्यकक्षतया विषरूपत्वं, भावत्वाभा वत्वयोरत्वस्यं नतु भावाभावयोरिति तु मन्दं, विशेषणांश इव विशेष्यांशेऽप्यनुगतप्रतीतेस्तौल्याद्विशेषणभेदेन भेदस्य चोभय त्राविशेषात् सामान्यविशेषोपयोगाभ्यां वैरूप्यस्यैव सिद्धेरित्यभिप्रायवानाह–यदि पुनरित्यादिना ॥ ६५ ॥

सर्वथानभिसम्बन्धः सामान्यसमवाययोः । ताभ्यामर्थो न सम्बद्धस्तानि त्रीणि खपुष्पवत् ॥ ६६ ॥

ममगुणामस्ते इति शेषः । तथा हि । सामान्यसमवाययोः परस्परतः संबन्धासंभवात् ताभ्यामर्थोऽपि न संबद्धः । कुतस्तयोरन- भिसंबन्ध इति चेत् संयोगस्य समवायस्य चानभ्युपगमात् सामान्यं समवायीति विशेषणविशेष्यभावस्य चासंभवादनवस्थाप्रस ङ्गात् । कर्तृकाधारसमवायस्य चानवकाशात् समवायस्य क्वचिदसमवायात् संबन्धान्तरानिष्टेः सर्वथानभिसम्बन्धस्तावत्सिद्ध एव । ततः परस्परतोऽनभिसंबद्धाभ्यां सामान्यसमवायाभ्यामर्थोऽपि द्रव्यगुणकर्मलक्षणो न संबद्धः शक्यते वक्तुं, यतस्तत्र सत्तासमवायः स्यात् । तत्त्रीण्यपि आत्मानं बिभ्रुः कूर्मरोमादिवत् । परस्परमसंबद्धानि ह्यर्थसमवायसामान्यानि न सन्त्येव । न चासतो कर्तृत्वम् । नापि कश्चिदात्मा संभवति यस्य कर्मत्वम् । न च कर्तृकर्मत्वाभावे ताम्यात्मानं बिभ्रुरिति शक्यं वक्तुं, कर्तरि लिङो विधानात्कर्मणि विभ क्तिनिर्देशाच । स्वाम्मतं ' परस्परमसंबद्धानामपि स्वरूपसत्त्वमसिद्धेनोर्थसमवायसामान्यानामसत्त्वम् । कूर्मरोमादीनां स्वरूपमस्वामा वाच रिपमोपमुपन्यासः ' इति तदयुक्तं, द्रव्यगुणकर्मणां स्वरूपसत्त्वोपगमे सत्तासमवायस्य वैयर्थ्यात्सामान्यादिवत्, सामान्यादीनां

वा सत्तासंबन्धप्रसङ्गाद् द्रव्यादिवत् तेषां स्वरूपसत्त्वानुपगमे कूर्मरोमादिभ्यो विशेषाभावात् सत्त्व एवोपन्यास इति निरूपणात् । कथं चात्यन्तभिन्नानां सत्ताया समवायाख्यसंबन्धाभिसंबद्धानां द्रव्यगुणकर्मणां सत्त्वं न पुनः कूर्मरोमादीनाम् ? इति चिन्त्यम् । कथं च सत्तासामान्यं सर्वथा समवायासंबद्धं द्रव्यादिषु समवायि न पुनः समवायस्तत्र समवायी समवायान्तरेणासंबन्ध इति पृच्छामहे ? समवायसंबन्धस्याभावाविशेषात् तथापि हि समवायेन सामान्यस्यासंबद्धस्य समवायान्तरेण पुनरसतो समवायस्येति तत्सद्भावस्या भ्यामसंबद्धत्वस्य विशेषयितुमशक्तेः । न च कश्चित्संबन्धः स्वसंबन्धिभ्यामसंबद्ध एव तौ घटयितुमलं संयोगस्यापि स्वसंयोगिभ्या-मसंबद्धस्यैव तद्घटकत्वप्रसङ्गात् । न चैवमिष्यते, सिद्धान्तविरोधात् । ततो न कार्यकारणयोर्गुणगुणिनोः सामान्यतद्वतोर्वान्यते वान्ये चाश्रयो युक्तोऽकार्यकारणादिवत्, समवायस्यान्यत्राभावनियमाच्च । तत्समवायोऽपि न तेषां परस्परं घटनकारी सर्वथानभिसंबद्धत्वात् कारणान्तरवत् । तदभावात् समवायेन चक्रियासमरिरत्वात् कूर्मरोमादिवत् । सामान्यं चासत् तत एव तद्वत् । न हि तदसंबद्धं स्वविषयज्ञानोत्पादनसमर्थमप्यवबद्धिम्भा कर्तुं प्रभवति यतोऽसिद्धो हेतुः स्यात् । तथा न सन्ति द्रव्यादीनि सत्तासमवायरहितत्वा-त्खरवत् । सामान्यादिभिर्व्यभिचार इति चेत् न तेषामपि परमार्थतः सत्त्वानभ्युपगमात् । न चोपचरितसद्भिर्व्यभिचारचोदनोपपत्ति-मती, परमार्थसत्त्वाभावसाधनस्याभिमतत्वात् । इति न कार्यकारणादीनामन्यत्वैकान्तः श्रेयान्, प्रमाणाभावादनन्यत्वैकान्तवत् ॥६६॥

ततः परस्परत इत्यादि, युक्तं चैतदसमवायाभ्यां घटसंयोगाभ्यां कृत्वा भूतलं घटसम्बद्धं भवति, घटसंयोगेन घटवद्भूतलमित्यस्याप्यापत्तेः, न च सामान्यनिरूपितत्वं समवायैक्ये किञ्चिदतिप्रसङ्गवारकं नाम, तथानात्वे स्वरूपतः सामान्यनिरूपितत्वं व्यवहारे स्वीक्रियतां, किमन्तर्गडुना समवायेन, तत्र सत्तानिरूपितत्वस्य खपुष्प इवासम्भवादिति । कथं

चेत्यादि अनभिसम्पद्वायामित्यनन्तरमङ्गीक्रियमाणायामिति चेत् । अत्र यत् यत्सम्बन्धाभाववत् तत्र तत्सम्बन्धेन तदभाववदिति व्याप्तेर्धर्मसमवायाभाववत्याः मथाया अर्थेऽभावात् कूर्मरोमखरपत्नमयोनां पराभिमतानामिति बोध्यम् । उक्त युक्तिमेवोपेक्षयति कथ च सत्तासामान्यमित्यादिना, सतश्चासत्समवाय इति, ननु समवायो यदि तथया सर्वेषा नभिसम्बद्धः स्यात्तदार्थे सर्वा न संघटयेदिति तर्कः समवायासिद्धयाथयासिद्धत्वेन प्रशिथिलमूलस्तत्सिद्धौ च किं तेन तदितर्थे गौरादिशापवचस्य व्यर्थत्वात् केवलं ततः समवायस्य स्वभावविशेषं कल्पयेत् प्राज्ञो येन सत्तायामसम्बन्ध्यसौ तामर्थेन संघटयेदित्ययुतसिद्धानामिहेति प्रत्ययहेतुरनुगतः समवायो दुरपह्नव इति चेत्, दुरन्तेयं नैयायिकसमयवासनानुपदा लाघवधीर्देवानांप्रियस्य, इन्तैवं अभावो वह्न्यादयभावप्रमायाः सम्बन्धनियतत्वात्तत्राप्यनुगतं वैशिष्ट्यसम्बन्धं लाघवप्रियः किं नाभ्युपैषि, स्वरूपसम्बन्धेनैव तदुपपत्तेरतिरिक्तवैशिष्ट्येऽपि वैशिष्ट्यान्तरस्वीकारेऽनवस्थापत्तेरिति चेत्, समवायेऽपीदृशी दीयतां दृष्टिः । गुणगुण्यादिस्वरूपद्वये सम्बन्धत्वमतिरिक्तसमवाये चेति विनिगमकाभावादपि समवायसिद्धिः, प्रकृते तु नैवम्, अभावस्यानुगतत्वेन स्वरूपसम्बन्धत्वौचित्यादित्यपि रिक्तं वचः, जातिव्यक्तिस्थले जातेरेवानुगतत्वेन सम्बन्धत्वौचित्यात् समवायोच्छेदापत्तेः, अनवृत्त्या तस्यैव कथञ्चिदनुगतत्वाच्च । न च समवायेन संयोगत्वावच्छिन्ने द्रव्यत्वादिना हेतुत्वात् समवायसिद्धिः, स्वरूपाणामानन्त्येन गौरवात्, कालिकादिस्वरूपेण स्पन्दादेरपि जन्यभाववत्त्वापत्तेरित्यपि वाच्यम् । तथापि कालिकविशेषणतादिभिन्नस्य पदार्थमात्राधारतानियामकस्य कस्यचिद्वैशिष्ट्यस्य संयोगादिनिष्ठकार्यतावच्छेदकसम्बन्धत्वेनाविरोधात् । अथ प्रतियोगितया घटादिसमवेतनाशे कालावच्छिन्नस्वप्रतियोगिसमवेतत्वसम्बन्धेन घटादिनाशस्य हेतु

स्वारम्भसमवायसिद्धिः, नास्यासौ नाशप्रतिकारणाय कालावच्छिन्नेति, स्वप्रतियोगिवृत्तित्वेन हेतुत्वे तु घटादिवृत्तिध्वंसध्वंसा-
पत्तिः, न च घटादिध्वंसलीनतन्तुवृत्तिक्रियासंयोगविभागादिस्वादिनाशे व्यभिचारात् घटादिनाशध्वंसवृत्तित्वसमवेतनाशे हेतुत्वोक्तौ
घटनाशनाशानन्त्येन विशिष्य नाश्यनाशकभावविधान्ती गौरवात् कालिकेन घटादिनाशवृत्तिघटादिवृत्तिनाशे तेन घटादिनाशस्य
हेतुत्वकल्पनम् प्रतिधर्मं तावत्तस्य कल्पनीयाश्रयेनानुपपद्यमानाम समवायसिद्धिरिति वाच्यम्, तथापि लाघवात्प्रतियोगितया
स्वप्रतियोगिसमवेतत्वस्वाधिकरणत्वोभयसम्बन्धेन नाशत्वसामान्यत्वावच्छिन्ने स्वप्रतियोगिसमवेतत्वेन नाशत्वावच्छिन्नस्य हेतु-
त्वेन समवायसिद्धेरप्रतिरोधादिति चेत्, न। परमाणुरूपजन्यकर्मवेगादिस्वादिनाशभावाधारत्वाय प्रतियोगिनो विशिष्यहेतुत्वाद् ध्वंसे
ध्वंसापद्यमानम् कालावच्छिन्नस्वप्रतियोगिसमवेतत्वमपहाय तत्स्थाने सविशेषस्वप्रतियोगिवृत्तित्वस्य स्वप्रतियोगिवृत्तित्वस्यैव
वा मम चास्याभिषेक लाघवादनतिप्रसङ्गाच्च। एतेनाऽभ्यनाशजन्ये नाशे प्रतियोगिनो विशिष्याहेतुत्वात् ध्वंसे तथापत्तिर्दुर्वा-
रेत्यपास्तम्। अपि च रूपाभावान्यमहत्त्वाभावचाक्षुषे चक्षुःसंयुक्तमहदुद्भूतरूपवद्विशेष्यस्य हेतुत्वाद्विशिष्टसिद्धिर्जायमाना
समवायमपाकरोति, न चैवमपि महत्त्वाभावरूपाभावयोश्चाक्षुषे कार्यकारणभावद्वयान्तरावश्यकत्वे रूपाभावान्यद्रव्यवृत्त्यभाव-
चाक्षुषे चक्षुःसंयुक्तोद्भूतरूपवद्विशेषणता महत्त्वाभावान्यद्रव्यवृत्त्यभावचाक्षुषे चक्षुःसंयुक्तमहत्त्ववद्विशेषणता द्रव्यसमवेतचाक्षुषे
च चक्षुःसंयुक्तमहदुद्भूतरूपवत्समवायो हेतुरित्येव कल्पयितुं युक्तम्, अत एव जातिसाधारणसमवायसिद्धिरिति महात्मा
गौरवमपि चेत्यं, द्रव्यसमवेतत्रुटिचाक्षुषे व्यभिचारवारणाय द्रव्यान्यत्वविशेषणदाने रूपाभावमहत्त्वाभावचाक्षुषनिष्ठकार्यता-
वच्छेदकपर्याप्तोपने च गौरवात्, वैशिष्ट्यपादिनो रूपाभावान्यमहदुद्धियचाक्षुषत्वं महत्त्वाभावान्यरूपवद्वृत्तिचाक्षुषत्वं वा कार्य-

रूपाभावान्यमहत्त्ववृत्तिनिष्ठा या विषयता तया चाक्षुषत्वमेव कार्यता-
तावच्छेदकमिति विनिगमनाविरहस्तु नौ तु तेन वस्तुतो रूपाभावान्यमहत्त्ववृत्तिनिष्ठा या विषयता तया चाक्षुषत्वमेव कार्यतावच्छेदके चरमाभावत्वाप्रवेशे
वच्छेदक वाच्यम्, अपि च समवायवादिनः कार्यकारणभावत्रये प्रथमद्वितीयाभ्यामेव कार्यतावच्छेदके चरमाभावत्वाप्रवेशे
द्वितीये द्रव्यभेदप्रवेश च वैशिष्ट्यवादिनो निर्वाहाभावान्यस्य हेतुतेतिलाघवं, न चैवं पार्थिवाणुप्रापमात्रेन्द्रियसन्निकर्षे पृथिवी-
त्वादिप्रत्यक्षापत्तिः, परस्यापि तन्मात्रसन्निकर्षात्मकत्वाभावादिप्रत्यक्षतापत्तेस्तद्वारणाय रूपाभावप्रत्यक्षे चक्षुःसंयुक्तमहत्त्ववदि
शेषणता महत्त्वाभावचाक्षुषे चक्षुःसंयुक्तोद्भूतरूपवद्विशेषणता रूपमहत्त्वचाक्षुषे रूपाभावमहत्त्वाभावभिन्नस्य चाभावस्य चाक्षुषे
चक्षुःसंयुक्तमहदुद्भूतरूपवद्विशेषणता हेतुरित्यभावप्रत्यक्ष एव परेण कार्यकारणभावत्रयं वाच्यम्, भावप्रत्यक्षे चान्यत्, तथा
च तृतीये कार्यतावच्छेदकेऽभावत्वाप्रवेशलाघवप्रत्यक्षेऽपि वैशिष्ट्यवादिनस्तत एव निर्वाहः, एवं च चक्षुःसंयुक्तसमवायादेरप्य
स्वीकाराल्लाघवम्। न च परेणापि व्यासज्यवृत्तिधर्मप्रत्यक्षानुरोधेन तद्द्रव्यचाक्षुषादौ चक्षुःसंयोगादिहेतुत्वनैव तद्वृत्तिगुण
कर्माभावादिप्रत्यक्षनिर्वाहे चक्षुःसंयुक्तसमवायादिमत्याद्यपेरेवास्वीकाराल्लोकलाघवावसार इति वाच्यम्, पदच्छेदेन घटपटयोः
संयोगस्तन्निष्ठावच्छेदेन चक्षुःसंयोगयोगात्तदुभयप्रत्यक्षेऽपि तदुभयसंयोगाभस्यव्याप्यत्वस्य तदुभयविषयकत्वानियमाभावात्
व्यासज्यवृत्तिधर्मप्रत्यक्षे पृथक्सामग्र्या आवश्यकत्वादुक्तहेतुत्वेन न निर्वाह इत्यादेः प्रथमपरिच्छेद एव विवेचितत्वात्। न च
यत्र च न व्यासज्यवृत्तिधर्मप्रत्यक्षानुरोधेन हेतुता तत्र घ्राणादिप्रत्यासत्तौ लाघवाद्वैशिष्ट्यसिद्धेर्मणिनाऽपि दुर्वारत्वात्। न च
गन्धाश्रयं घ्राणसंयुक्तमहत्त्वोद्भूतगन्धवद्वैशिष्ट्यं गन्धाभावग्राहकं तदुद्भूतगन्धाघटितमिति न तयोरैक्यसम्भव इति शङ्कनीयम्,
अनुद्भूतगन्धभेदस्य गन्धसाक्षात्कारहेतुतयोद्भूतगन्धस्य सन्निकर्षाघटकत्वादिति परेणापेत नव्यनयमासाद्यमारोहतां विचार

निक्षेपी । अपि च जातिसाधारणसमवायसिद्धौ जातेरर्थवत्त्वापत्तिः, यत्र यत्सम्बन्धवत्त्वं तत्र तद्वत्त्वमिति नियमस्य अन्यत्रैव दृष्टं सम्भवत्वात्, तत्र तस्य तद्वृत्तित्वानियामकत्वमेवमिति चेत् तदपि तुच्छः, तथा विशिष्टबुद्ध्यभावादिति चेत्, व्यक्त इतरेतराश्रयः, तत्र तद्वृत्तितानियामकसम्बन्धाभावे तथा विशिष्टबुद्ध्यभावस्तदभावाच्च स इति, तस्माद् व्यक्तिस्वरूपस्य जातौ वृत्त्यनियामकत्वमित्यसम्बन्धमेव श्रेय इति । यदपि द्रव्यप्रत्यक्षत्वव्याप्ये महत्त्वोद्भूतरूपवत्त्वसमवेतत्वेन प्रतिबन्धकत्वात् समवायसिद्धिरिति केचिद्बुध्यन्ते, तदपि तुच्छं, द्रव्यान्यत्वव्याप्तानुपलब्ध्यावच्छिन्ने महत्त्वोद्भूतरूपवत्त्वभावत्वेन प्रतिबन्धकत्वकल्पनाया एवौचित्यात्, तदेवं लाघवादेकः समवायो यैः साध्यते तेषामितोऽपि लाघवादेतित्वमेवैकं बलादापतेदिति निर्व्यूढम् । यः पुनराह—नत्त्वाकारकाभावप्रत्यक्षापत्तेरयोग्याभावप्रत्यक्षापत्त्या च प्रतियोगिविशिष्टतत्त्वभावप्रत्यक्षे तत्त्वदभावविशेषणता हेतुरतो नाभावमात्रस्य वैशिष्ट्यसिद्धिरिति, सोऽपि न प्रेक्षापूर्वकारी, भावाभावसाधारण्येन लाघवादेकवैशिष्ट्यसिद्धौ विशिष्टप्रत्यासत्तौ तद्विवेकस्याशक्यत्वात्, अन्यथा समवायैक्येऽप्यगतेः, तस्यापि व्याप्यवृत्त्यव्याप्यवृत्त्यादिगुणप्रत्यक्षानुरोधेन विशिष्टापि प्रत्यासत्तिघटकत्वात्, प्रतियोगिज्ञानादिकारणतयोक्तापत्तिनिरासेनाभावप्रत्यक्षे विशेषणतायाः सामान्यतः प्रत्यासत्तितया एव युक्तत्वाच्च । वस्तुतः सत्तापि सामान्यत एका विशेषणभेदाच्च भिन्नेत्युक्तं, समवायोऽपि च त्वया लाघवादेको स्वी-नीकृतव्यवसायानुरोधेन च मतेऽपादिरूपा नाना स्वीकार्यः, ततश्च वैशिष्ट्यमप्येकमनेकरूपत्वेन वैश्वरूप्यं बिभ्रत् केन प्रत्याख्यातुं शक्यम् । ततश्च—" एकं स्वीकुरु वैशिष्ट्यं, समवायं विमुञ्च वा । क्रीडाकान्दुकतां नेय, इति नैयायिको बुधैः ॥ १ ॥ भावस्य प्रागभावत्वं, प्रागभावस्य भावता । घटादौ तस्य सम्बन्ध, वैशिष्ट्याख्य विना कथम् ॥२॥

तथाभावरूपत्वात्, सर्वस्य प्रतियोगिनः। तत्सम्बन्धेषु वैशिष्ट्य–रूपत्वं चेत् न मन्यते ॥ ३ ॥ नेति शीसत्र तत्र स्यात्सदि मा कालिकादिना। वैशिष्ट्यत्वे तु तेष्विष्टे संसर्गाकारगौरवम् ॥ ४ ॥ धर्मातिरेके तद्वत् स्वद्रव्येणाभिरिच्यते। आत्यन्तरात्मके तत्त्वे किमसाध्यं विपक्षया ॥ ५ ॥ विशिष्टे लक्षणाऽन्येषा–मविशिष्टे न कल्पितम्। जात्यन्तरं त्वमप्येवं वा, स्वयमेवो या प्रतीयताम् ॥ ६ ॥ इतीह वैशिष्ट्यमनेकमेक, ममर्शिनं न्यायविशारदेन। स्वरूपविभान्तिमुपा च तेन भग्ना परेषां समवायवृत्तिः ॥ ७ ॥" ॥ ६६ ॥

अथ प्राह मा भूत्कार्यकारणादीनामन्यतैकान्तः परमाणूनां तु नित्यत्वात् सर्वास्ववस्थास्वन्यत्वाभावादनन्यतैकान्त इति तं प्रति समस्तमभिधीयते।

अनन्यतैकान्तेणूनां संघातेपि विभागवत्। असंहतत्वं स्याद्भूतचतुष्कं भ्रान्तिरेव सा ॥ ६७ ॥

यथैव हि विभागे सति परमाणवोऽसंहतात्मानस्तथा संघातकालेपि स्युः, सर्वथान्यत्वाभावादन्यत्वे तेषामनित्यत्वप्रसङ्गात्। संघातकाले कायस्योत्पत्तेस्तत्समवायिकारणस्वसंयोगस्वभावं संहतत्वं भवत्येवेति चेत्, न, तेषामविकारिरूपत्वे संयोगस्यैवासंभवात् पृथिव्यादिभूतचतुष्कस्यावयविद्रव्यस्य भ्रान्तत्वप्रसङ्गात्। कर्मयोगित्वस्य प्रसूतेः संयोगः परमाणूनामिति चेत्, न, कथंचिदन्यत्वाभावे तद्योगात्। अमिकत्वात्परमाणूनामदोष इति चेत्तथापि कार्यकारणादेरभेदैकान्ते धारणाकर्षणादयः परमाणूनां संघातेपि मा भूवन्विभागवत्। विभक्तेभ्यः परमाणुभ्यः संहतपरमाणूनां विशेषस्योत्पत्तेर्धारणाकर्षणादयः संगच्छन्ते घटाभोमुखसोदककमण्डलुवर्द्धंसरजतादिवदेवेति चेत्तर्हि तेषां नातिशयोपि विशेषो विभागैकान्तं निराकरोति, तन्निराकरणे परमाणुस्वविरोधादेकत्वपरिणामात्मकस्कन्ध-

स्योत्पत्तेः । अविभक्तपरमाणुभ्यः संहतपरमाणूनामविशिष्टस्वभावानामन्यत्वासंभवात् महतानां धारणाकर्षणादिसामर्थ्यं विशेषो न पुनरपरमाणुत्वं येनाविशेषः कार्यकारणपरमाणूनां न भवेदिति चेत्, न, सर्वथा वस्तुविशेषे तत्सामर्थ्यस्यैवायोगात् अविभक्तपरमाणूनामपि तत्प्रसङ्गात् । अविभक्तत्वादेव न तेषां तत्सामर्थ्यमिति चेत् तत एवान्यत्रापि तमेष्यते, केनचिदपि विशेषान्तरेण तद्विभक्तत्वाभिधानात् । पृथिव्यादिभूतचतुष्टयपरिकल्पितैव विभ्रममात्रं प्राप्नोति सर्वदा परमाणुत्वाविशेषात् । इष्टत्वाददोष इति चेत्, न, प्रत्यक्षादिविरोधात् । प्रत्यक्षं हि बहिर्घटसंस्थानादात्मकं सर्वाधारसमाकारमन्यत्र दर्शयन्नेकविषयतामेकमारभमाणं साक्षात्तु भेदान्तं परिकल्पयद्भ्रान्तं प्रत्यक्षलक्षणं विरुध्यते ? प्रत्यक्षाभावे च कुतोऽनुमानं न विरुध्यते ? न च प्रत्यक्षादिविरोधे स्वसंवेद्यमात्रमपि सिध्येत्, सर्वदा संवित्परमाणुमात्रस्यासंवेदनात् । न च कार्यस्य भ्रान्तौ परमाणुसिद्धिरस्वतः स्यादित्युच्यते ॥ ६७ ॥

कार्यभ्रान्तेरणुभ्रान्तिः कार्यलिङ्गं हि कारणम् । उभयाभावतस्तत्स्थ गुणजातीतरच्च न । ६८ ।

अत्रथवा परमाणूनां प्रसिद्धेर्नाणुभ्रान्तिरिति चेत्, न तेषामप्रत्यक्षत्वात् । तथा हि । चक्षुरादिबुद्धौ स्थूलैकाकाराः प्रतिभासमानाः परमाणुभेदैकान्तवादं प्रतिघ्नन्ति तद्विपरीतानुपलब्धितः । तत्रैव समवायान्वेषत्वादिप्रतिपत्तिरिति चेत्, न, परमाणूनां चक्षुरादिबुद्धौ स्वभावानर्पणतः कार्यलिङ्गाभावात्तत्स्वभावाभ्युपगमानुपपत्तेः, प्रतिरूपकुण्डलिकादीनां जातुचित्प्रत्यक्षतोऽनवतिपत्तावनेकाकारप्रतिभासस्य च भ्रान्तत्वे तत्स्वभावाभ्युपगमानुपपत्तिवत् । कार्यलिङ्गं हि कारणं परमाणुरूपम् । ततः कथं कार्यस्य भ्रान्तौ भ्रान्तं न भवेत् ? परमाणूनां कार्यस्य चानभ्युपगमे तदुभयाभावात्तद्गतो जातिगुणक्रियादयो न स्युर्व्योमकुसुमसौरभवत् । तद्धि गुणजातिरूपादिसत्तादिस्वभावमितरच्च क्रियाविशेषसमवायादयं परमाणुवृत्ति वा स्यात् कार्यद्रव्यवृत्ति वा न च तदुभयासमवेतम्भ्युपगन्तुं युक्तं, गगनकुसुमस्वाभा

चेपि वावृत्तिसोरभ्युपगमप्रसङ्गात् । ततस्तदभ्युपगच्छता कार्यद्रव्यमभ्रान्तमभ्युपगन्तव्यम् । तत्र परमाणूनां परमाणुरूपतापरित्या-
गेनावयविरूपतोपादाने सति सम्भाव्यते नान्यथा । तत्र तेषामनन्यतैकान्तः कार्योत्पत्तौ कथंचिदन्यत्वोपपत्तेः । ततः सौगतवत्त चैते
चिकार्णां समवसितिः ॥ ६८ ॥ सादृश्याच्च कार्यकारणयोः।—

'तत्र परमाणूनामिति' ननु कथमेतत्, आरब्धकार्याणामपि परमाणूनामवयविसमवायित्वेऽपि तद्रूपस्वीकारस्य परमाणुरूपतापरित्यागस्य चायुक्तत्वादिति चेत्, न, आरब्धकार्याणामणूनां स्कन्धस्थानामपि प्रदेशत्वस्वीकारे परमाणुत्व परित्यागस्य कथञ्चिदवयवित्वापत्तेरावश्यकत्वात्, सर्वथाऽवयवावयविभेदे तत्तमापकारब्धेऽवयविनि मापकत्वतापगुरुत्वापि त्त्यागस्य... न च गुरुत्वलघ्व्योः समयोरुपोठने एकत्र संलग्नमादिगुरुत्वाभिव्याजनपनतिपदुपपत्तिः अव-
न्पादनतिविशेषप्रसङ्गात्, न च गुरुत्वलघ्व्योः समयोरुपोठने एकत्र संलग्नमादिगुरुत्वाभिव्यापनतिपदुपपत्तिः अव-
परिन्यस्यन्तापकृष्टगुरुत्वस्वीकारादिति वाच्यम्, एवं सति तदवयवित्वेन तदवयवगुरुत्वात्यन्तापकृष्टगुरुत्वहेतुत्वकल्पने
महागौरवात्, स्वाश्रयसमवेतत्वसम्बन्धेनोत्कृष्टगुरुत्वस्य समवायेनात्यन्तापकृष्टगुरुत्वहेतुत्वस्वीकारे चात्यन्तापकृष्टगुरुत्ववद
व्यारब्धस्थले व्यभिचारात्, परमाणावत्यन्तापकृष्टगुरुत्वं पाकजमेवापाकजे च तत्रोक्तहेतुत्वान्न दोष इति चेत्, न, अत्यन्ता
पकृष्टगुरुत्ववद्व्यारब्धेऽपि तत्रोऽत्यन्तापकृष्टगुरुत्वस्वीकारेऽत्यन्तत्वाविवेचनात् । स्वजन्याधनतिविशिष्टोत्कृष्टावनतिविशेषप्रयो
जककृपाभाव एवात्यन्तत्वं तादृशात्यन्तापकृष्टगुरुत्वे च गुरुत्वमात्रस्यैवोक्तसम्बन्धेन हेतुत्वान्न दोष इति चेत्, न, तथापि
परमाणावेवोत्कृष्टगुरुत्वविभागापत्तेः । न च तस्यापि युक्तत्वं, पाषाणारम्भकपरमाण्वारब्धतक्रस्मद्र्व्ये पाषाणतुल्यगुरुत्व
प्रसङ्गात्, स्वैरं परिभ्रमक्लिष्टपरमाणुभिर्जगदाक्रमणप्रसङ्गाच्च, तस्मादारब्धकार्यैरणुभिः कथञ्चिदसदेवावयवित्ववद्गुरुत्वं स्वी

क्रियते तन्तुषु नानन्यतेऽवयवत्व इति युक्तम्। एतेनास्तु वा परमाणावेव गुरुत्वं द्व्यणुकादेरधःसंयोगस्तु गुरुत्वसापेक्षपातजन्याश्रयत्वेनाश्रयेणाधीनक्रियया, पातव्यवहारस्तु वर्तिस्थदीपपातव्यवहारवत् गौण', न चैव महावयविपाते बहुविलम्बप्रसङ्गः, मिथो विष्टम्भावयवानां विष्टम्भाधीनक्रियायाऽन्यथेनेनान्त्यावयविनि युगपत्सम्भवात् पातव्यवहारवत्परम्परया सम्बन्धविशेषेण वा परमाणुगुरुत्वमेव वा पतननियामकमित्यपास्तम्, अधःसंयोगे गुरुत्वस्य सामानाधिकरण्येनैव हेतुत्वात् परमाणुगत-गुरुत्वेन परम्पराऽवयविनिष्ठधर्मोत्पत्तौ तद्गतरूपादिनापि चाक्षुषादिकार्यनिर्वाहेऽवयविरूपादेरप्युच्छेदप्रसङ्गात्, सम्बन्ध-विशेषस्य च प्रदेशसम्बन्धमात्रात्मतादात्म्यातिरिक्तस्य दुर्वचत्वात्तत्स्वीकारे चाणूनां कथंचिदवयविरूपतापत्तावन्यस्य स्थानाभावमिद्धत्वात्। यदप्युच्यते महाचार्यैर्गुरुत्व एव वा मानाभावो, वायुतेजसोस्तिर्यगूर्ध्वगमनवत् पाथःपृथिव्योरधो गमनस्यापि प्रतिबन्धकेऽदृष्टवदात्मसंयोगादिनैवोपपत्तेः, पतनप्रकर्षस्त्ववयवाधिक्यात्, अवयविनि गुरुत्वापकर्षादिनापि तथैव शक्यत्वादिति, तदपि चिन्त्यम्, अवयवाधिक्येन पतनप्रकर्षे महाधूमस्यापि तत्प्रसङ्गात्, स्पर्शविशेषवदवयवाधिक्यस्य तत्प्रयोजकत्वे च स्पर्शविशेषस्यैव तत्त्वौचित्यात्, गुरुत्वस्य च तद्गतजातिविशेषस्यैव कल्पयितुं युक्तत्वात्, एवं हि पतनहेतु तावच्छेदक गुरुत्वं स्यादिति लाघवम्, परमते तु गुरुत्वत्वमिति गौरवमित्यस्मदेकपरिशीलितः पन्थाः। तदेवं गुरुत्वादिम त्त्वपरद्रव्यभेदेन कथञ्चिदन्यत्वमणूनां सिद्धम्। एतेन नित्यत्वात् कार्यद्रव्यानारम्भकत्वाच्चाणूनां नान्यत्वं लौकिकविषयतया द्रव्यमात्रात्मत्वात्तावच्छिन्ने व्यणुकत्वादिघटकसंयोगानां पिशाचत्वादिघटकसंयोगभिन्नानां वैजात्येन कारणत्वात् केवलाणु व्यणुकत्वस्यव्यापत्तिः, तादृशसंयोगविशिष्टत्वादिकं च गुणादिमत्त्वे तन्त्रमिति केवलाणुव्यणुकादिगुणाभावत्वेऽपि न

रेव सा गहेत प्रसज्य। तथा च कुतः प्रधानस्याधिगतिः ? न तावत्प्रत्यक्षात् तस्य तदविषयत्वात्। नाप्यनुमानात् अभ्रान्तस्य लिङ्गस्याभावात्। न चागमात् सर्वस्यापि भ्रान्तत्वोपगमात्। न च भ्रान्ताभिधारेरभ्रान्तसाध्यसिद्धिरतिप्रसङ्गात्। एवं पुरुषचैतन्ययोराश्रयाश्रयिणोरैक्ये तदन्यतराभावः। पुरुषे चैतन्यानुप्रवेशे पुरुषमात्रस्य, तस्य वा चैतन्यानुप्रवेशे चैतन्यमात्रस्य प्रसक्तेः सिद्धस्यान्यतरस्याभावः परेषाम्। ततः शेषाभावस्तस्यभावाविनाभावित्वाद्धन्यासुवरूपसंस्थानवत्। यथैव हि घटस्यासुवरूपस्याभावे न तस्य संस्थानं संस्थानित्वभावाविनाभावित्वात्। तथा पुरुषस्याभावस्याभावे चैतन्यस्याभयिणोऽप्यभावस्तदभावे पुरुषस्याप्यभावः तस्यभावाविनाभावात्। तथा सति द्वित्वसंख्यापि न स्यात् पुरुषचैतन्ययोरैक्यत्वमिति। तत्र संवृतिकल्पना शून्यस्य माति पत्ति, परमार्थविपर्ययात्मकत्वसमार्थेवत्, परमार्थतः संख्यापाये संख्येयाभ्यवस्थानात् सकलधर्मशून्यस्य कस्यचिद्वस्तुनोऽसंभवात्। तत्र धर्मधार्यादीनामनन्यतैकान्तः संभवत्यन्यतैकान्तवत् ॥ ६९ ॥

एकत्व इति, अस्यां कारिकायामविनाभूपदम् अविनाभाविकार्यकारणद्वयेऽर्थान्तरसंक्रमितवाच्य, तत पञ्चम्यन्तमेकत्व इत्यनेनान्वेति, ततयाविनाभाविकार्यकारणद्वयस्यैकत्वेऽभ्युपगम्यमानेऽन्यतराभावः सार्वस्मिभापन्ने शेषस्याभाव भापद्यत इत्यर्थः, तेन शेषस्याप्यविनाभुवोऽभाव इति व्याख्यास्यमानमार्गेण योगेन, नतु सौत्रेण, अभावान्वितस्य शेषपदार्थस्याविनाभूपदार्थेऽन्वयासम्भवादिति बोध्यम् ॥ ६९ ॥

विरोधान्नोभयैकात्म्यं स्याद्वादन्यायविद्विषाम्। अवाच्यतैकान्तेऽप्युक्ति–र्नावाच्यमिति युज्यते ॥७०॥

धर्मधर्म्यादीनां व्यतिरेकाव्यतिरेकैकान्तौ न वै यौगपद्येन संभविनौ विरोधात्। तथाऽनभिलाप्यतैकान्ते स्ववचनविरोधस्तद्-

द्वि द्रव्यपर्यायौ द्रव्यस्यानाद्यनन्तैकस्वभाववैस्रसिकपरिणामत्वात्। पर्यायस्य च साद्यन्तानेकस्वभावपरिणामत्वात्। ततो नासिद्धः परिणामविशेषादिति हेतुः। एतेन शक्तिमच्छक्तिभावः सिद्धः कथितः। परस्परविविक्तस्वभावसंज्ञासंख्याविशेषौ च द्रव्यपर्यायौ, द्रव्ये द्रव्यमिति पर्याये पर्याय इत्यन्वर्थसंज्ञायाः प्रसिद्धेः, एकं द्रव्यमित्येकत्वसंख्यायाः, पर्याया बहव इति बहुत्वसंख्यायाश्चानुप चरिताया प्रसाधनात्। ततः संज्ञासंख्याविशेषादित्यपि नासिद्धं साधनम्। द्रव्यस्यैकत्वान्वयज्ञानादिकार्यत्वात् पर्यायस्यानेकत्वव्या वृत्तिप्रत्ययादिकार्यत्वाच्च तयोः परस्परविविक्तस्वभावप्रयोजनत्वमसिद्धम्। द्रव्यस्य त्रिकालगोचरत्वात् पर्यायस्य वर्तमानकालत्वाद्भिन्न कालत्वमपि न तयोरसिद्धं भिन्नप्रतिभासवत्। ततः प्रसिद्धात्ततोर्भिन्नलक्षणत्वं तयोः सिध्यत्येव। इति स्वलक्षणविशेषतश्चानात्वं सिद्धम्। स्वमसाधारणं रूपं स्वलक्षणम्। तस्य विशेषो व्यक्त्याविनाभावित्वं, तत एव तस्य लक्षणत्वोपपत्तेः॥ नन्वसाधारणं रूपं वस्तुनो लक्षणमित्युच्यमाने सर्वं मिथ्र्यं प्रमेयत्वादित्यनुपसंहार्यस्यापि लक्षणत्वप्रसङ्ग इति चेन्न कथंचित् प्रमितिविषयत्वस्य प्रमेयत्वस्यानुपसंहार्यस्यापि लक्षणत्वाविरोधात् सत्त्ववत्। "तल्लक्षणम् अस्पादव्ययध्रौव्ययुक्तं सत्" इति वचनात्। ननु च यत्र यत्र वस्तु तत्र तत्र प्रत्यक्षविषयत्वमिति विपक्षस्यासतः सिद्धेर्नानुपसंहार्यं सत्त्वं सपक्षविपक्षरहितस्य पक्षव्यापिनोऽनुपसंहार्यत्वा- दिति चेन्न तत एव प्रमेयत्वमप्यनुपसंहार्यं मा भूत् प्रत्यविपक्षस्यासतो भिन्नत्वानामयस्य कर्मत्वेन प्रमितिजनकस्याप्रमेयस्य विप- क्षस्य भावात्। सर्वथैकान्तेन सतोऽसतश्च प्रत्यक्षस्य तस्य विपक्षत्वमिति चेत्, तर्हि स्वरूपेण भावस्य भावान्तरस्वभावप्रागभावादेश्च स्वीकरणात् कस्यचित् तद्विपक्षत्वं मा भूत्। परानुपगतस्यानुत्पादव्ययध्रौव्ययुक्तस्य विकल्पबुद्धिप्रतिभासिनो विपक्षत्वे सदसद्वर्गा- भावस्य परानुपगतस्याप्रमाणविषयस्य विपक्षत्वमस्तु सर्वथा विशेषाभावात्। इति नानुपसंहार्यस्य संभवो, यतः पक्षव्यापिन एवासाधा-

" अर्पोपादानयोर्वा ननु गुणगुणिनोर्व्यक्तिजात्योरनन्या—
न्यत्वैकान्तप्रकारैर्जगदिदमखिलं नीतमान्ध्यं समन्तात् ।
स्यात्कारस्याद्वादमार्गाः प्रतिहतकुमतोलूकनेत्रप्रचारा—
स्तत्त्वख्यापि सत्या भुवनगुरुगिरः सूर्यभासो जयन्ति ॥ १ ॥

इति श्रीमदकब्बरसुरत्राणप्रदत्तजगद्गुरुबिरुदधारिभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यमहो पाध्यायश्रीकल्याणविजयगणिशिष्यावतंसपण्डितश्रीलाभविजयगणिशिष्यालङ्कारपण्डितश्रीजीतविजय गणिसतीर्थ्यशेखरपण्डितश्रीनयविजयगणिचरणकमलचञ्चरीकेण पण्डितश्रीपद्मविजयगणिसहोदरेण महो पाध्यायश्रीयशोविजयगणिना विरचितेऽष्टसहस्रीतात्पर्यविवरणे चतुर्थः परिच्छेदः ॥

॥ अष्टसहस्रीतात्पर्यविवरणे चतुर्थः परिच्छेदः समाप्त ॥

ॐ ॥ अथ पञ्चमः परिच्छेद ॥ ॐ

स्फुटमकलङ्कपदं या प्रकटयति पविष्टचेतसामसमम्। दर्शितसमन्तभद्र साष्टसहस्री सदा जयतु ॥ १ ॥

यद्यापेक्षिकसिद्धि स्या–न्न द्वयं व्यवतिष्ठते। अनापेक्षिकसिद्धौ च न सामान्यविशेषता ॥ ७२ ॥

धर्मधर्मिणोरापेक्षिकी सिद्धिः प्रत्यक्षबुद्धौ तत्प्रतिभासनाद्दूरेतरादिवत्। न हि प्रत्यक्षबुद्धौ धर्मो धर्मी वा प्रतिभासते तत्राभाविविकल्पोपकल्पितत्वात्, तस्य स्वलक्षणस्यैव तत्र प्रतिभासनात्। सत्त्वापेक्षया सत्त्वादेर्धर्मत्वेपि ज्ञेयत्वापेक्षायां धर्मित्वव्यवहरणात्, तदपेक्षया ज्ञेयत्वस्य धर्मत्वेप्यभिधेयत्वापेक्षायां धर्मित्वव्यवहारात्, तदपेक्षया चाभिधेयत्वस्य धर्मत्वे प्रमेयत्वापेक्षायां धर्मित्वप्रसिद्धेः। इति न कश्चिद्धर्मो धर्मी वा व्यवतिष्ठते। ततो न तात्त्विकोऽसौ। न हि नीलस्वलक्षणं संविस्वलक्षणं वा प्रत्यक्षम वभासमानं किंचिदपेक्ष्याप्यवभासमनुभवदुपलभ्यम्। केवलमपेक्षाबुद्धौ विशेषणविशेष्यत्वं सामान्यविशेषत्वं गुणगुणित्वं क्रिया–क्रियावत्त्वं कार्यकारणत्वं साध्यसाधनत्वं ग्राह्यग्राहकत्वं वा प्रकल्प्यते, दूरेतरत्वादिवत्। इति यद्यापेक्षिकसिद्धिः स्यात्तदा न द्वयं व्यवतिष्ठते नीलस्वलक्षणं तत्संवेदनं चेति तयोरप्यापेक्षिकत्वाद्विशेषणविशेष्यत्वादिवत्। तथा हि। ययोः सर्वथा परस्परापेक्षाकृता सिद्धिस्तयोर्न व्यवस्था। यथा परस्पराश्रययोः सरिति प्लवमानयोः। तथा च नीलतद्वेदनयोः सर्वथापेक्षाकृता सिद्धिः। इति तद्वपि न व्यवतिष्ठते। न हि नीलं नीलवेदनमनपेक्ष्य सिध्यति तस्याप्रमेयत्वप्रसङ्गात् संविन्निष्ठत्वाच्च वस्तुव्यवस्थानस्य। नापि नीला–नपेक्षं नीलवेदनं, तस्य तस्मात्तत्त्वाभोपगमादन्यथा निर्विषयत्वापत्तेः। इत्यन्यतराभावे शेषस्याप्यभावाद्द्वयस्याव्यवस्थानं स्यात्।

स्वमिति। तत्सकलधर्मधर्मिभूमयामर्षानां (१) स्यादपेक्षिकी सिद्धिः तथा व्यवहारात् । (२) स्यादनापेक्षिकी पूर्वमसिद्धत्व-
स्वत्वात् । (३) स्यादुभयी क्रमार्पितद्वयात् । (४) स्यादवक्तव्या, सहार्पितद्वयात् । (५) स्यादपेक्षिकी चावक्तव्या च तथा निश्चयेन
सहार्पितद्वयात् । ( ६ ) स्यादनापेक्षिकी चावक्तव्या च पूर्वसिद्धत्वसहार्पितद्वयात् । ( ७ ) स्यादुभयी चावक्तव्या च क्रमाक्र-
मार्पितोभयात् । ' इति सप्तभङ्गीप्रक्रिया योजनीया विशेषवशादविरुद्धा पूर्ववत् ॥ ७६ ॥

अपेक्षैकान्तादिप्रबलगरलोद्रेकदलिनी, प्रवृद्धानेकान्तामृतरसनिषेकानवरतम् ॥
प्रवृत्ता वागेषा सकलविकलादेशवशतः, समन्ताद्भद्रं वो दिशतु मुनिपस्याऽमलमतेः ॥ १ ॥

॥ इत्याप्तमीमांसालङ्कृतौ पञ्चमः परिच्छेदः ॥

' धर्मेत्यादि धर्मधर्मिणोर्न विना भावो यस्येति व्युत्पत्त्याऽविनाभावो व्यवहारोऽन्योन्यवीक्षयाऽन्योन्यापेक्षया,
सिद्ध्यति । ननु स्वरूपं, हि यत , एतत् स्वरूपं, कारकज्ञापकाङ्गवत् कर्तृकर्मबोध्यबोधकवत् स्वत एव सिद्धं, तथा च धर्म-
सम्पादिः स्वरूपतोऽनपेक्षत्वं व्यवहारतश्च सापेक्षत्वमित्यनेकान्त एव विजयत इति कारिकासंक्षेपार्थः । 'तद्वत् सकलेत्यादि'
यद्यपि केचिद्भावा प्रतिनियतव्यञ्जकव्यङ्ग्याः केचिच्च स्वत' सिद्धा इत्येवं विषमविभागेन—सापेक्षानपेक्षभावोऽन्यत्र पराधक-
पूर्वगन्यायेन पूर्वाचार्यैर्व्यवस्थापित', तथापि स प्रातिस्विकरूपापेक्षया, धर्मधर्मिभावादिना तु सर्वत्र तद्व्याप्तिरेव सिद्ध्य
तीत्येतत्तात्पर्यम् । अथ व्यवहारस्य सापेक्षत्वेऽर्थस्य कुत आपेक्षिकत्वमिति चेत्, व्यवह्रियमाणस्वरूपेण तस्यापि तदविरोधात्,
अत एव अभावो न स प्रतियोगिकः, किन्तु तद्व्यवहार एवेति मीमांसकमतमपास्तम् । अभावव्यवहारे प्रतियोगिज्ञानस्य

न्यवपेक्षाभावे प्रतियोगिज्ञानमन्यज्ञानविषयतया सप्रतियोगिकत्वस्याबाधितत्वात्, स्वाधनापेक्षिकी पूर्वप्रसिद्धस्वरूपत्व (स्या)दिति, न च पूर्वप्रसिद्धस्वरूपत्वेऽपि महत्त्वावावधिज्ञानसापेक्षसिद्धिकत्वात् दृष्टान्तानुपपत्तिः, महत्त्वव्यवहार एव हि तथा नतु महत्त्वमिति व्यवहारानुप्रवेशेन तस्यापेक्षिकत्वेऽपि स्वरूपतोऽव्यापत्वेन दोषाभावात्। पत्तु महत्त्वं न सापेक्षं, किन्तु तद्ग तजातिविशेष एव, तस्य महत्त्वमतजातिसामान्यग्राहकातिरिक्तापेक्षग्रहविषयत्वेन सापेक्षत्वव्यवस्थितेः, अत एवाद्यतेऽव्यवहिते महत्त्वग्रहेऽपि तद्गतहस्तावितस्तित्यादिनाऽग्रहः आवरणप्रतिबन्धादिति नैयायिकैकदेशिभिरुच्यते, तदसत्, आवरणसंयोगस्य स्वाश्रयसमवेतसमवेतत्वसम्बन्धेन महत्त्वगतजातिविशेषग्रहप्रतिबन्धकत्वे आवृतानावृततुल्यमहत्त्वपरिमाणस्थलेऽनावृतत्वेऽपि महत्त्वविशेषाग्रहप्रसङ्गात्, जातिविशेषप्रकारकमहत्त्वग्रहे उक्तप्रतिबन्धकत्वे चावरणस्थले महत्त्वनिर्विकल्पकापत्तेर्दुर्वारत्वाचेति व्यवहारानुप्रवेशेनैव महत्त्वे आवरणाभावसापेक्षत्वस्य युक्तत्वादित्यधिकं ' नयामृततरङ्गिण्यां ' निरूपितमस्माभिरिति ध्येय एवाधिगन्तव्यम् ॥ ७५ ॥

" इत्यपेक्षानपेक्षाभ्यां भावसकलसङ्गतिः। निरूपणीया सर्वत्र स्याद्वादामलबुद्धिभिः ॥१॥ अर्थे नये प्रमाणे च तत्प्रयुक्ते फलाफले। प्रयोजनानुसारेण भावनीये मनीषिभिः ॥२॥ बाह्ये चाभ्यन्तरे हेतौ निश्चयव्यवहारयोः। प्रत्यक्षे च परोक्षे च विवेको यत्कृतोऽखिलः ॥३॥ अपेक्षापेक्षकान्तमशमप्रसमस्यामृतरसो-ल्लसचेतो वृत्तिप्रथम लघुण पश्यति यमी। तमीशं स्याद्वादप्रणयनसमुज्जीवितजग-ज्जनं वन्दे मन्देतरमधिकसन्दर्भसनम् ॥४॥

इति महोपाध्यायश्री यशोविजयगणिविरचितेऽष्टसहस्रीतात्पर्यविवरणे पञ्चमः परिच्छेदः सम्पूर्णः ॥

ॐ ॥ अथ षष्ठः परिच्छेद ॥ ॐ

पुण्यरफलह्मृत्ति समन्तभद्रप्रणीततस्वार्थाम् । निर्जितदुर्णयवादामष्टसहस्रीमवैति सद्‌दृष्टिः ॥ १ ॥

सिद्ध चेद्धेतुतः सर्वं न प्रत्यक्षादितो गतिः । सिद्ध चेदागमात्सर्वं विरुद्धार्थमतान्यपि ॥ ७६ ॥

इह हि सकललौकिकपरीक्षकैः उपेयतत्त्व व्यवस्थोपायतत्त्वं व्यवस्थाप्यते, कृष्यादिषु प्रवर्तमानानां व्यवसितसस्याद्युपेयानामेव तदुपायव्यवस्थापनप्रयत्नोपलम्भात्, प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते इति प्रसिद्धेः मोक्षार्थिनां च प्रेक्षावतां व्यवस्थितोपेयमोक्षस्वरूपाणामेव तदुपायव्यवस्थापनव्यापारदर्शनात्, अव्यवस्थितमोक्षतत्त्वानां तदुपायव्यवस्थापनपराङ्मुखत्वाच्चार्वाकादिवत् । तत्र हेतुत एव सर्वमुपेयतत्त्वं सिद्धं, न प्रत्यक्षात्, तस्मिन्सत्यपि विप्रतिपत्तिसम्भवात् मुक्त्वा पक्ष पदानुपैति तदर्द दृश्यपि न मन्ये इत्यादेरेकान्तस्य बुद्धेर्दर्शनात्, तदर्थनिर्णयविवेचनस्यानुमानायत्तत्वात् विप्रतिपत्तेस्तद्व्यवस्थापनाया हेत्वाभिधानात् । प्रत्यक्षतदाभासयोरपि व्यवसिद्धिरनुमानात् अन्यथा संकरव्यतिकरोपपत्तेस्तदर्थनिर्णयविवेचनस्य प्रत्यक्षाग्रतत्त्वासंभवात् । इति केचित्तेषां प्रत्यक्षादगतिरनुमानादाविवोपि न स्यात् । न च धर्मिणः साधनस्योदाहरणस्य च प्रत्यक्षादगतौ क्वचिदनुमानं प्रवर्तते । अनुमानान्तरात्तद्गतौ तस्यापि धर्म्यादिगतिपूर्वकत्वादनुमानान्तरमपेक्षणीयमित्यनवस्था स्यात् । ततः क्वचित्साक्षात्करणमन्तरेण धर्म्यादीनां न कश्चिदनुमानं प्रवर्तेत । किं पुनः शास्त्रोपदेशात् ? इति प्रत्यक्षादपि सिद्धिरभ्यस्तविषयेऽभ्युपगन्तव्या अन्यथा तत्प्रतिज्ञाभिप्रतिपत्तेरयोगात्, परार्थानुमानरूपाणामपि शास्त्रोपदेशानामप्रवृत्तेः । ये त्वाहुः—'आगमादेव सर्वं सिद्धं, तमन्तरेण प्रत्यक्षेपि मणिप्रभादौ यथार्थनिर्णयानुपपत्तेः, अनुमानप्रति-

मन्त्रफलस्यापि दर्शनात्। न ह्याथर्वणानामेव मन्त्राणां शक्तिरुपलभ्यते न पुनः सौगतादिमन्त्राणामिति सत्यं वक्तुं, प्रमाणबाधनात्। वैदिका एव मन्त्राः परप्रयुक्ताः शक्तिमन्त इत्यप्ययुक्तं, मायावनिका एव वेदेऽपि प्रयुक्ता इत्युपपत्तेस्तत्र भूयसामुपलम्भात् समुद्रादाकरेषु रत्नवत्। न हि कियन्त्यपि रत्नानि राजकुलादावुपलभ्यमानानि तत्रत्यान्येव, तेषां रत्नाकरादिभ्य एवानयनात् तद्वत्सिद्धमूलसौ तत्रोत्पत्तिदर्शनात्। तदागमवचनैकदेशत्वविषयत्वव्यापारेण सकलमन्त्राणां समुद्धृतिविस्तीर्णात्, न पुनर्वेदादागममात्रादिति बुध्यमुत्पश्यामः। वेदस्यानादित्वादपौरुषेयत्वाच्च तन्मन्त्राणामेवाविसंवादकत्वं संभवतीति चायुक्तं, तदप्रसिद्धेः। सिद्धेऽपि तदनादित्वे पौरुषेयत्वाभावे वा कथमविसंवादकत्वं प्रत्येतव्यम्? म्लेच्छव्यवहारादेरनादेरसौ बहुलमुपलम्भात् तेन तस्य व्यभिचारात्। एतेन वेदैकदेशेन स्वसमप्रमाणतयोपगतेनादित्वस्यापौरुषेयत्वस्य चानैकान्तिकत्वमुक्तम्। किं च कारणदोषनिवृत्तेः कार्यदोषाभावकल्पनायां पौरुषेयस्यैव वचनस्य दोषनिवृत्तिः कर्तृवर्तिदोषस्यापि संभवात् 'दोषावरणयोर्हानिः' इत्यादिना संसाधनात्, न पुनरपौरुषेयस्य, तद्व्याख्यातॄणामभोक्तॄणां रागादिमस्माभिरागमस्य कथंचिदभ्युपगमात्, सर्वथाप्यपौरुषेयस्य तदुपगमेन विरोधात्। नेतरस्य, कथंचित्पौरुषेयस्य तदविरोधात्। इति निरस्तं सर्वथा, त्रिविधस्यापि निर्दोषोपायप्रतिपादनादिति। चक्षुरपेक्षं वचनस्याविसंवादकत्वं चक्षुर्दर्शनवत्, विसंवादस्य तद्दोषानुविधानात्। यथैव हि चक्षुर्दर्शनस्य ज्ञानगुणं सम्यग्दर्शनादिकमपेक्ष्याविसंवादकत्वं, तद्दोषं मिथ्यादर्शनादिकमपेक्ष्य विसंवादकत्वं चेति निश्चितं महाशास्त्रे। ततोऽत्रोपपद्यते, तथा चक्षुर्गुणं यथार्थज्ञानादि दोषं च मिथ्याज्ञानादिकमपेक्ष्य संवादकत्वं विसंवादकत्वं चेति। एवमन्यासवचनानामर्थज्ञानमन्यपरम्परासंभवत्। न हि ज्ञास्यन्तो न्यं दर्शयितुमीष्टे परस्मै। तथानाप्तोऽपि नार्थं ज्ञापयितुमतिप्रसङ्गात्। एवम् पौरुषेयस्य वचनस्य पौरुषेयस्य च गुणप्रकृष्टस्य कारणदोषाभावाभिर्दोषत्वं समानमविश्वासासंभवात्। तत्र यदेव युक्तियुक्तं तदेव प्रति

वक्तर्यनाप्त इति, वक्तर्यनाप्ते आप्तत्वेनानिश्चिते, साध्यं तदनाप्तस्वप्रामाण्याभावप्रतिपादकवाक्यजन्यबोधविषयः, यद्धेतोः प्रामाण्यनिश्चयहेतोः, सिद्धमतीति शेषः, निश्चयप्रामाण्यसंशयाधीनसंशयक भवतीत्यर्थः, तद्धेतुसाधितमुच्यते, आप्ते आप्तत्वेन निश्चिते वक्तरि, तद्वाक्याद्वाक्यजन्यज्ञानविषयः, साध्यमुद्देश्यसिद्धिकमर्थजात, स्वत एव निश्चयसंशयत्वादागमसाधितमुच्यते, आप्तत्वानाप्तत्वप्रत्यय रागद्वेषमोहादिरूपदोषाभावतत्सद्भावाभ्यामन्वेन वा सुपरीक्षितेन लिङ्गेनेति ज्ञेयम् । वस्तुतः सर्वत्र यथार्थवक्तृजातीयत्वमेवाप्तत्वग्राहकम्, अत एव " कप्पाकप्पे परिणिट्ठियस्स ठाणेसु पंचसु ठियस्स संजमतवड्डमस्स उ अविगप्पेण तहाकारोत्ति' निर्युक्तिगाथया कल्प्याकल्प्यपरिनिष्ठितत्वादिगुणकदम्बकवद्वक्तृवचनेऽविकल्पेन तथाकारविधाने तदितरवचने विकल्पप्राप्तावपि संविग्नपाक्षिकवचने एकान्तत एव तथाकारः प्रामाण्याभ्युपगमरूपो विधेयः, तदितरयथोक्तगुणाभाववक्तृवचने तु यथा हेतुवाद भजनयेति व्यवस्थितविकल्पो व्याख्यातस्तान्त्रिकैः, अभ्यधिष्महि चैवत् संवादिसामाचारीप्रकरणे "इयरंमि विगप्पेण सो य विगप्पो ववट्ठिओ एसो। संविग्गे भीयम्मि य सढेव अप्पस्स सुविपमे ॥१॥ त्ति, वाक्यपक्षि यस्यापितरत्रापीति, पिटकत्रयेऽपि वक्तु सम्यक्त्वादित्यर्थः। विद्यानुवादादेव विद्याप्रवादपूर्वोद्धृतशास्त्रादेव, 'एतेनेति' मीमांसकस्य कार्येऽर्थ एव चोदनायाः प्रामाण्यादर्थवादरूपमन्त्रैकदेशेऽविसंवादकत्वायोगादनैकान्तिकत्वं स्फुटमेवेति भावः । न पुनरपौरुषेयस्येति, अपौरुषेयस्य पुनः संसाधनाभावादित्यन्वयो व्युत्पत्तिविशेषात्, इदमि स्थले प्रकृत्यर्थान्वितनञर्थविमर्श्यमार्थ योरन्वयस्वीकारात्, एवमग्रेऽप्युपयुज्य योज्यम्। अत एव न्यायचतुर्थाध्याये "नानुपमृद्य प्रादुर्भावात्" इति सूत्रेऽनुपमृद्य प्रादु

र्थानामाधावित्यर्थः, " तेषां मोहः पापीयानमूढस्येतरोत्पत्तेः " इति सूत्रे च तेषां रागद्वेषमोहानां रागमोहयोर्द्वेषमोहयोर्वा मध्ये मोहः पापीयान् तत्त्वस्वरूपविषयोऽमूढस्य रागद्वेषानुत्पत्तेरित्यर्थो व्याख्यात इति बोध्यम्। तस्य युक्तियुक्तत्व विरोधादिति ' न हिंस्यात् सर्वाभूतानीत्यादिसामान्यभूत्पुपगमस्यर्थविरोधादित्यर्थः । स्यात् सर्वं हेतुतः सिद्ध मित्यादि नन्वु कथमेतत् कारस्न्येन हेतुसिद्धत्वाद्यभिधानं घटते, हेतुसिद्धानामसिद्धानामर्थानामवान्तरविभागेनैव व्यवस्थित त्वात्, तदाह सम्मतिकारः-" दुविहो धम्मावाओ अहेउवाओ अ हेउवाओ अ, तत्थ उ अहेउवाओ भविया भविआदओ भावा ॥ १ ॥ " अस्या अर्थः-धर्मास्तिकायादीनामाप्तवचनप्रामाण्यात् तत्प्रतिपादक आगमोऽहेतुवादो हेतुवादश्चेति द्विधा, तत्र प्रमाणान्तरानवगतार्थप्रतिपादक आगमोऽहेतुवादः, तद्विपरीतो हेतुवादो, हेतोर्हेतुपरिच्छिन्नस्य वादो हेतुवाद इति व्युत्पत्तेः, तत्र साहेतुवादो भव्याभव्यत्वादयो भावाः, विषयाभिधानेन विषय्यभिधानमेतत् भव्याभव्यत्वादिप्रतिपादक आगम इत्यर्थः । नहि भव्योऽभव्यो वेत्यस्मदादीनां प्रमाणं प्रवर्तते, न च तद्विभागप्रतिपादकं वचनं यथार्थम् अर्हद्वचन त्वादित्यनुमानप्रवृत्त्यापाताः, वचनविभागावच्छेदकत्वेन तत्प्रवृत्तावपि स्वातन्त्र्येण तदप्रवृत्तेः, यथा च भव्याभव्यत्वादयोऽहेतुवादसिद्धाः, अन्ये च हेतुवादसिद्धा इति, व्याख्या प्रकृतसप्तभङ्गी न युक्तेति चेत्, मैवं, स्याच्छब्दसमर्थ्येनैव सर्वानुपपत्तिनिरासात्, अहेतुवादसिद्धस्याप्यर्थस्य तथाद्धर्म्यपि तत्प्रतिपादितत्वेन हेतुवादत्वव्यवस्थितेः, तदुक्तं " सम्मतावेष-भविओ सम्मदंसण नाणचरित्तपडिवत्तिसंपुण्णो। नियमा दुक्खंतकडोत्ति लक्खणं हेउवायस्स ॥२॥ " प्रयोगश्चायम् भव्योऽयं सम्यग्दर्शनज्ञान चारित्रप्रतिपत्तिसम्पूर्णत्वात् सम्प्रतिपन्नपुरुषवदिति, किं बहुना ! अहेतुवादसिद्धेऽप्यर्थे सर्वोऽन्यथानुपपत्त्याक्षेपकत्वमाधिक्य निराकार-

उच्यते, तदपेक्षयाऽयं प्रमाणविभागः सम्मतिसिद्धः—"जो हेउवायपक्खम्मि हेउओ आगमे य आगमिओ। सो समयपण्णवओ सिद्धंतविराहगो अण्णोत्ति ॥१॥" अन्यस्य विराधकत्वं च प्रतिपाद्यस्य यथार्थनास्थादिदोषोत्पादनादिति बोध्यम् ॥७८॥

" हेत्वागमान्यतरपक्षविपक्षभावात् यद्‌भण्यते निबिडमाशु कुयुक्तिजालम् ॥
तच्छेदनाय पटिमानमसौ बिभर्ति स्याद्वादपद्धतिरनेकसुयुक्तिजालम् ॥ १ ॥

इति महोपाध्यायश्रीयशोविजयगणिविरचितेऽष्टसहस्रीविवरणे महातर्के षष्ठः परिच्छेदः ॥

# अथ सप्तमः परिच्छेदः ।

निर्दिष्टो यः शास्त्रे हेत्वागमनिर्णयः क्रमप्राप्तेन। गमगस्पष्टसहस्री संक्षेपात्तमिह सामर्थ्यात् ॥ १ ॥

अन्तरङ्गार्थतैकान्ते बुद्धिवाक्यं मृषाखिलम् । प्रमाणाभासमेवात—स्तत् प्रमाणादृते कथम् ॥ ७९ ॥

सम्वदसैव स्वसंविदिवज्ञानस्यार्थता वस्तुना, न बहिरङ्गस्य जडस्य प्रतिभासानर्हत्वेनेत्येकान्तोऽन्तरङ्गार्थतैकान्तः। तस्मिन्नभ्युपगम्यमानेऽखिलं बुद्धिवाक्यं हेतुवाक्यहेतुवादनिबन्धनमुपायतत्त्वं मृषैव स्यात्। यतश्च मृषा स्यादत एव प्रमाणाभासमेव, प्रमाणस्य तत्त्वेन व्याप्तत्वात्, मृषात्वेन प्रमाणाभासस्य व्याप्तेः। तच्च प्रमाणाभासं प्रमाणादृते कथं संभवेत् ? तदभावे तद्व्यवहारमपाकाय मेवार्थं स्वप्नव्यवहारमिव संवृत्यापि कथं प्रतिपद्यते ? तथागमकागमभावाविशेषेण प्रत्ययमनेकान्तिकमात्रत्वं संवित्तिरेव स्यात्तस्य

प्रवृत्तिर्न स्यात्, न चालौकिके लौकिकत्वभानेन प्रवृत्त्युपपत्तिः, तस्यान्यथाख्यातित्वेन पक्षक्षतिप्रमाणापत्तेः । किञ्चालौकि-
कस्यापि रजतस्यासत्त्वेऽसत्ख्यात्यापत्तिः सत्त्वे च नेदं रजतमिति बाधानुपपत्तिः, न चालौकिके लौकिकत्वनिषेध एव बाधार्थः,
नेदं रजतमित्यादौ रजतलौकिकत्वस्य निषेधप्रतियोगित्वेनाभानात्, सर्वत्र विधौ निषेधे च रजतपदस्य लौकिकरजतपरत्वे
गौरवात् । किञ्च लौकिकरजतस्य प्रसक्तस्यैव प्रतिषेधाद्विपरीतख्यात्यापत्तिरिति न किञ्चिदेतत् । एतेन मीमांसकपक्षाभिम-
ताऽलौकिकख्यातिः खण्डिता, एवं ख्यात्यन्तरखण्डनमपि द्रष्टव्यम्, भ्रान्तावन्यथाख्यातिपक्षस्यैव विचारसहत्वात्, तत्र
तत्र प्राभाकरा विवेकाख्यातिं कल्पयन्ति, तदाहुस्ते, इदं रजतमित्यादिविपरीतप्रत्ययोत्पत्तौ न किमपि कारणं पश्यामः,
इन्द्रियस्य शुक्तिसंयुक्त एव सन्निकृष्टत्वेन रजतज्ञानाजनकत्वात्, न च दोषवशादसन्निकृष्टस्यापीन्द्रियस्य रजतज्ञानजनकत्वं
युक्तं, दुष्टकारणात् स्वकार्याननुत्पादस्यापि विपरीतकार्याननुत्पत्तेः, न हि कमलबीजं तैलकलुषितमपि गोधूमाङ्कुरजननसमर्थं, तस्मा-
दिदं रजतमिति प्रत्यक्षस्मरणरूपं ज्ञानद्वयं सत्यमेव, इदमंशे इन्द्रियसन्निकर्षस्य प्रत्यक्षकारणस्य रजतांशे च साधारणरूप-
दर्शनोद्बुद्धसंस्कारस्य स्मरणकारणस्य सत्त्वात् । न च तदंशानुल्लेखान्नेदं स्मरणमिति शङ्कनीयं, प्रमुष्टतत्ताकानामपि बहूनां
पदपदार्थस्मरणानामुपलम्भात्, अत एव रजतस्य नातीतत्वावभासः । बाधकप्रत्ययश्चेदमन्यद्रजतमन्यदिति विवेकमेव प्रका-
शयति, न तु रजतज्ञानस्यासत्यत्वं, स्वप्ने चेदं रजतमित्यादौ स्मरणत्वाग्रह एव विवेकाग्रहः, न त्वनुभवस्मरणयोस्तत्त्वाग्रहः,
तदुभयाभावात्, सत्यदर्शनं विनापि तथा स्मृतिः, कारणान्तरात्, आरोपे सतीत्यादिन्यायात्, एवं चन्द्रद्वयवेदने दोषात्
त्रिधा कृतया नयनवृत्त्या चन्द्रैकत्वाग्रहश्च, तिक्ता शर्करेत्यादौ च पित्तद्रव्यगततिक्तप्रत्यक्षशर्कराग्रहयोर्भेदाग्रहाद्विवेकाख्यातिर्व्या-

स्येषा, सर्वत्र सम्यग्ग्रहणस्यैव सत्त्वात्, ये तु विवेकाख्यातिविदः शुक्तौ रजतमतीति स्थापयन्ति, तेषां ज्ञानान्तरेऽपि मिथ्यात्वसम्भावनया सर्वत्रानाश्वासात् प्रवृत्त्यादिव्यवहारोच्छेदप्रसङ्ग इति । अत्र ब्रूमः—यत्तावदुक्तम् इदं रजतमिति विपरीतप्रत्ययो न विविक्तकारणं पश्याम इति तत्र "न खल्वयं स्थाणोरपराधो, यदेनमन्धो न पश्यति" इति न्यायावतारो, दुष्टेन्द्रियादेरेव तदुत्पत्तेः, स्वाकारसंवरणरजतरूपापत्तिपरिणामविशेषवत्याः शुक्तेरेव सालम्बनत्वात्, न च कार्यसिद्धौ कारणाभावावज्ञा युक्तिमती, तथा च प्रामाणिकाः ॥ "कार्यं चेद्दृश्यमानेत, किं कारणपरीक्षया ॥ कार्यं चेन्नावगम्येत, किं कारणपरीक्षया" ॥१॥ इति यत्तु दुष्टकारणस्य सत्कार्योत्पादकत्वं, न तु विपरीतकार्योत्पादकत्वमिति, तत्रापि नियमं न पश्यामो, दृषदुदकस्यैव बीजात् कदलीप्रकाण्डोत्पत्तिदर्शनात्, स्वपरजनस्य वेत्राङ्कुरोत्पादन शोभना कदलीप्रकाण्डे त्वनुगुणमाय एवेति चेत्, अत्रापि कारणमलादेः सत्यज्ञानोत्पादने शोभना मिथ्याज्ञानोत्पादने त्वनुगुणभाव एवेति तुल्यं, यदप्युक्तं, इदं रजतमिति ग्रहणस्मरणं ज्ञानद्वयं न त्वेकं विशिष्टज्ञानमिति, तदपि तुच्छं, रजतार्थिप्रवृत्तिमात्रे रजतत्वप्रकारकज्ञानस्यैव प्रमाणविशेष्यस्य प्रत्यासत्त्या संवादिप्रवृत्तिस्थले हेतुत्वकल्पनाद्विसंवादिप्रवृत्तिहेतोरपि मिथ्याज्ञानस्यैकस्य सिद्धेः, संवादिप्रवृत्तौ विशिष्टज्ञानं सत्यमात्रम्, उत परस्पराभावः, नाद्योऽपि व्याप्यव्यापकभावयोगः, आद्ये ग्रहणस्मरणाभ्यां पुरोवर्तिपूर्वानुभूतवस्तुस्वरूपमात्रादिभ्यो भेदो गृहीत एवेत्यग्रहविभ्रमः, द्वितीयपक्षस्तु प्राभाकरैरभावानभ्युपगमादेव निरस्तः, तदभ्युपगमेऽपि स्मृतरजतस्य कथं नाभावज्ञानम्, शोभनत्वाभियुक्तं तथाऽऽगतस्यानियततेषूतदा भरणाम नविति चेत्, आयातान्यथाख्यातिः, रजतमिति

शुक्तत्वरणाम तदिति न, तव मते पुरोवर्तिगते रजते स्मृते केवलाधिकरणोपलब्धेरेव तदभावोपलम्भत्वात्, दोषस्य शुक्ती
रजतमरमप्रतिबन्धकत्वकल्पने च तथावारम्यप्रवृत्तिहेतुत्वकल्पनमेव न्याय्यम्। नापि तृतीयः, स्मर्यमाणे रजते रजतत्वस्य भान
तद्भावस्य मानात् गृह्यमाणेऽप्यन्तत इदंत्वस्यैव तादृशस्य मानात्, न च रजतत्वास्यन्ताभावरजतमेदाग्रहीतव्यावर्तकत्वाकर
गृह्यमाणाम यतरत्वावच्छिन्नप्रतियोगिताकोऽन्योन्याभावो रजतार्थिप्रवृत्तिहेतुरित्यपि वक्तुं शक्यम्, उदासीनप्रवेशाप्रवेशाभ्यां
विनिगमनाविरहात्, रजतं स्मरतो रजतार्थिनः पाषाणस्यानुपलम्भे पाषाणेऽपि प्रवृत्तिप्रसङ्गाच्च। शुक्तिविषयकप्रवृत्तौ शुक्ति
विषयत्वानन्तरेनापि हेतुत्वाच्च, तत्र समानप्रकारकत्वनिवेशस्यैवौचित्यात्, अन्यथा महागौरवात्, किञ्च रजत एव नेदं रजत
मिति भ्रमे प्रवृत्त्यापत्तिः, तत्रान्यथाख्यातिभिया रजतभेदग्रहस्य परेण वक्तुमशक्यत्वात्, न चाभावप्रतियोगित्वेनानुपस्थितं
यदुपस्थितं रजतं तद्ग्रहस्य प्रवर्तकत्वाददोष इत्यपि शक्यं वक्तुं, पटभिन्नं रजतं नेदमिति ज्ञानादपि प्रवृत्त्यापत्तेः तदृत्यभाव
प्रतियोगित्वेनानुपस्थितत्वं चान्यथाख्यातिभयात्त्वतेऽपीति न किञ्चिदेतत्। किञ्च प्रवृत्तिरिच्छाद्वारा, सा च समानविषयज्ञा
नसाध्येति कथ नच्छातन्मिथ्या, एतेन प्रकृतरजतज्ञानं स्मरणम्, अनाकलितरजतस्य प्रतिपत्तुरुत्पद्यमानत्वादित्याद्यनुमानम
पास्तम्। रजतगोचरेच समीहितसाधनतानुमानेन संस्कारेण रजतशब्दोल्लेखिप्रत्ययेन चानैकान्तिकत्वात्, प्रकृतरजतज्ञानं
स्मरणं न भवति विशदावभासित्वात् यदित्थं तदित्थं यथा संप्रतिपन्नज्ञानमिति प्रत्यनुमानसद्भावाच्च। किञ्च मत
नापि संविदिः स्वप्रकाशा स्वीक्रियत एव, तत्रैव रजतसंविदिस्तपस्विनी केन स्वभावेन प्रकाशतामिति विचारणीय, यदि
स्मृतिरूपेणानुपपद्यते, हन्त तर्हि का प्रमोषशब्दस्यार्थः। अथानुभवरूपेण प्रथते, तर्हि विपरीतख्यातिरेवेय, स्मृतेरनुभ

स्मृतिप्रमोषपक्षेऽपि तयैव विचारसहत्वसिद्धेः, न चोत्तरकाले प्रतिभासाभावाद्भ्रान्तिविषयस्यासत्त्वं, तत्समयप्रतिभासेनापि तोयप्रत्ययादरिव सत्त्वाभ्युपगमादिति, तेऽपि न ख्यातिमात्रं प्रमाणसिद्धिं विनाऽर्थस्य प्रसिद्धत्वायोगात्, अन्यथा भ्रान्ता भ्रान्त्यन्तरस्यानुपपत्तेः, यच्च प्रतिभाससमये सत्त्वात् भ्रान्तिविषयस्य रजतस्य प्रसिद्धत्वमुच्यते, तत् यद्यन्यदेशस्थस्य तस्य रोपमात्रत्वेन शुक्तौ मानात्, तदा प्रसिद्धार्थख्यातिरित्यन्यथाख्यातेर्नामान्तरमायातं, यदि च शुक्तिदेशस्थस्य, तदा तस्य स्मरणानुसरणमपि मानापत्तिः, अज्ञानजस्य ज्ञाननाश्यस्य च तस्य स्वीकारे मतान्तरप्रवेशापत्तिरिति यत्किञ्चिदेतत्। परे तु शुक्तिशकले यत्कलधौतं चकास्ति तस्य बाध्यतया प्रतिभानं नोपपद्यते, नेदं रजतमिति बाधकेन तद्बाध्यतया बाध्य मानत्वात्, ततो ज्ञानात्मन एवायमाकारोऽनादिवासनामाहात्म्यात् बहिरिव परिस्फुरतीत्यात्मख्यातिरेवेयमित्याहुः, तेऽपि न प्रशस्ताः, नेदं रजतमिति बाधकेन तद्बाध्यतया असाधनात्, इत्थं बाध्यस्य तस्य परं शुक्तिदेशस्थतया एव बाधनात्। यदपि न्यगादि ज्ञानात्मन एवायमाकारोऽनादिवासनामाहात्म्याद्बहिरिव परिस्फुरतीति, तदप्यसत्यं, वासनाया बहुशो निरस्तत्वात्। किञ्च-ज्ञानाकारस्यैव रजतस्य संवेदनेऽहं रजतमित्यन्तर्मुखतया प्रतीतिः स्यात्, न त्विदं रजतमिति बहिर्मुखतया, ज्ञाननिष्ठोऽपि रजताकारोऽनादिवासनामाहात्म्याच्छुक्तिनिष्ठतया भासत इत्युक्तौ चान्यथाख्यातिरेवाङ्गीकृता स्यात्। अपि च ज्ञानाकार एव रजतादिर्भ्रान्तिविषयीरूपतया प्रकाश्यत इत्यत्र न प्रमाणमस्ति, अनुभवस्य कलधौतज्ञानाकारासाधकत्वात्, बाधकप्रत्ययस्यापि शुक्तौ रजतनिषेधकत्वेन रजते ज्ञानाकारतया अविधायकत्वात्, न च रजते पुरोवर्तिशुक्त्या संसर्गप्रतिषेधे बाधकोपात्तरजतमिथ्यात्वसिद्धिरित्यपि साम्प्रतं, शुक्त्यात्मरजतप्रतिषेधेऽपि देशान्तरसत्त्वस्यैव सिद्धेः ख्यातिक्रमेणा

स्वज्ञानाकारत्वकल्पने मानाभावात्। यत्प्रकाशते तद्विज्ञप्तिमात्रं यथा सुखादिकमिति तु प्रत्युक्तं विज्ञानवादनिरासे बहुशः। अपि चैतन्मात्रं स्वरूपोत्थं मया पीतरूपतया ज्ञातमिति प्रत्यभिज्ञानं स्यात्, न त्विदं शुक्ती रजतत्वेन ज्ञातेति, एवमप्रसक्तरूप्य पीतनिषेधोऽपि न स्यात्। यदि च ज्ञानस्य याथार्थ्यविपर्यस्तं नेष्यते, तर्हि यथा रजताकारोल्लेखेन तत्प्रसक्तं, तथा किं न नीला पाकारोल्लेखेन, नियामकाभावात्, अनादिवासनाया एव तन्नियामकत्वे देशादिनियमे दुर्लङ्घ्यः। अथास्या इदमेव स्वरूप यद्सदपि देशादिनियमेन ज्ञाने प्रदर्शयतीत्यभिधीयते, तदयुक्तम्, असत्ख्यातिप्रसक्ते, कथं चात्मख्यातिवादिनश्छेदादि प्रतीतिः स्यात्, स्वरूपमात्रसंविदस्तदसम्भवात्, न हि विज्ञानरूपस्य सुखादेः संवित्तौ सत्प्रतीतिर्दृष्टेति यथार्थस्य प्रामाणिक त्वे नात्मख्यातिः ख्यातिमती। वेदान्तिनस्तु शुक्तौ रजतं न सत् प्रतिभासते, भ्रान्त्युच्छेदापत्तेः, नाप्यसत्, शशशृङ्गादिवद् प्रतिभासप्रवृत्त्योरविषयत्वप्रसङ्गात्, नाप्युभयरूपम्, उभयपक्षनिक्षिप्तदोषानुषङ्गादित्यनिर्वचनीयमेवेद, तस्माद्भ्रान्तिरनिर्वचनीय ख्यातिरेवेत्याहुः, तदपि दुष्करं, शुक्तौ रजतभ्रमे शुक्तिसम्बद्धस्य विषयस्य स्वरूपपररूपाभ्यां सदसद्रूपत्वाभ्युपगतत्वात्, रजतप्रकारिताकत्वस्य च तत्र विशेषणज्ञानमात्रनियम्यत्वात्, अस्तु वा तथाविधशुक्तिपरिणामनिमित्तमेव, समूहालम्बन- त्याख्यस्य तस्यान्यथानुपपत्ते, "अर्थेनैव धियां विशेष" इति न्यायादिति यौक्तिकाः। शुक्तौ विलक्षणरजतोत्पादस्तु कारणाभावादेवायुक्तः, न हि परिणामिकारणादिसामग्री विना कार्योत्पादो दृष्टः। अथ शुक्तेरज्ञानमेव तत्र प्रतीयमानस्य रूप्योत्थस्य कारणमिति मतिः, दुर्मतिरेषैषम्, अज्ञानस्य केवलपरिणामिकारणत्वायोगात्। अज्ञानं हि सम्यग्ज्ञानस्य प्रागभावो, मिथ्याज्ञानं वा, द्वयमपि केवलं न परिणामिकारणं, द्रव्यस्यैव तथात्वपर्यायपरिष्कृतस्य परिणामिकारणत्वप्रसिद्धेः,

वर्णात्मद्रव्यमेव सम्यग्ज्ञानप्रागभावलक्षणपर्यायाविष्टं मिथ्याज्ञानस्वरूपपर्यायाक्रान्तं वा शुक्तिशकलकलधौतस्य कारण मविष्यतीत्यपि नाशङ्कनीयम्, चेतनस्याचेतनं प्रति कदाचिदपि परिणामिकारणत्वानुपपत्तेः। स्यादाकूतं भवतो, नाज्ञानं सम्यग्ज्ञानप्रागभावो, नापि मिथ्याज्ञानं, किन्तु ताभ्यामर्थान्तरमेव मायाऽविद्यादिशब्दवाच्यं तदनिर्वचनीयरजतहेतुरिति चेत्, न। तादृशाज्ञाने मानाभावात्, न च मूलाज्ञानं तद्धेतुर्युक्तं, तस्य व्यवस्थितप्रमाणैर्विषयहेतुत्वेन स्वयोपगमात्, किन्तु भ्रान्तिव्यवहारनिर्वाहायानन्तानि तूलाज्ञानानि त्वया वाच्यानीति महागौरवम्, किञ्च शुक्त्यज्ञानस्य पाषाणादावपि सत्त्वेन तत्रनियमाभावाच्च रजतहेतुत्वम्, न चेदमंशावच्छेदेन शुक्त्यज्ञानस्येदमंशावच्छेदेन रजतोत्पादकत्वाददोषो, दोषाभावकालेऽपि सतस्तत्प्रसङ्गात्, दोषस्याप्यपेक्षणे चेदमंशावच्छेदेनाज्ञानान्तरस्योदासीनस्य च हेतुत्वं दुर्निवारमिति यत्किञ्चिदेतत्। दोषसहिते शुक्त्यज्ञाने रजतहेतुरिति स्ववचनस्य पक्षिसहितमाकाशं दारुकमिति वचनतुल्यत्वात्। यत्तु विज्ञानवादिनस्य परेषां रजतप्रमात्वं कार्यतावच्छेदकं मम तु रजतत्वमिति लाघवादनिर्वचनीयरजतसिद्धिरित्यनन्तदेवेनोक्तमसत्, तथापि सत्यरजतत्वापादने वैज्ञानिकरजतस्यैव कार्यतावच्छेदकस्य वाच्यत्वात्, अपि च किमिदमनिर्वचनीयत्वं, निरुक्तिविरहो वा निरुक्तिनिमित्तविरहो वा, नाद्यः, इदं रजतं नेदं रजतमिति निरुक्तेरनुभूयमानत्वात्, नापि द्वितीयो यतो निरुक्तिनिमित्तं विषयः किं भावरूपो नास्त्यभावरूपो वा प्रथमकल्पनायाममृषात्वाभ्युपगमप्रसङ्गः, द्वितीयकल्पनायां तु मनुष्याणिरेव, उभावपि न स्त इति चेत्, लोकसिद्धयोरुभयोः प्रतिषेधो विलक्षणयोर्वा, नाद्यः, एकत्रोभयनिषेधविधेरिव तत्प्रतिषेधस्याप्ययोगात्, विरुद्धयोरेकतरविधिनिषेधयोरन्यतरनिषेधविधिनान्तरीयकत्वात्, द्वितीयपक्षे तु न कोऽपि क्षतिः न

तदविशेषात्, तस्यास्वसंविदितत्वादनुमानात्वेऽप्यत्वप्रसङ्गात् । न हि ज्ञाने परिच्छेदकेऽप्रत्यक्षे तत्कृतोऽर्थपरिच्छेदः प्रत्यक्षः स्यात्, संतानान्तरज्ञानकृतार्थपरिच्छेदवत् । बहिरर्थस्य प्रत्यक्षत्वात्तद्धर्मस्य प्रत्यक्षत्वमिति चेत्, न धर्मस्यापि स्वतः प्रत्यक्षत्वासिद्धेः । स्वज्ञाने प्रतिभासमानस्य प्रत्यक्षत्वे संतानान्तरज्ञानेपि साक्षात्प्रतिभासमाने प्रत्यक्षत्वप्रसङ्गात्, तस्यानुमेयत्वाविशेषात् । बहिरर्थमात्रान्यस्य प्रमातुः स्वसंविदितत्वादविशिष्टमेव ज्ञाने प्रसिद्धमिति चेत्कस्तमर्थधर्मः स्वसंविदितो नाम ? अर्थवत् । सोऽयं ज्ञानमस्वसंविदितं प्राकट्यमर्थस्वरूपं स्वसंविदितमिच्छन्नपश्यो विपरीतप्रज्ञः । परिच्छिद्यमानस्य ज्ञानरूपस्यार्थधर्मस्यार्थज्ञानस्य कुतस्त्यो विशेषो येन तद्विशिष्टं सिध्येत् ? पुंसः स्वसंविदितत्वेन ततो विशेषो वा तदन्यतरेणार्थपरिसमाप्तेः किं द्वितीयेन ? स्वसंविदितार्थपरिच्छेदकत्वेन स्वार्थपरिच्छित्तिसिद्धेरप्रत्यक्षज्ञानस्याकिंचित्करत्वात् । पुंसो वा स्वसंविदितार्थत्वेनार्थपरिच्छेदसिद्धेः किमनेन ? तस्य करणत्वादकिंचित्करत्वमात्मनः कर्तृत्वमर्थस्य च कर्मत्वात्करणत्वविरोधात्, करणमन्तरेण क्रियायाः संभवाभावादिति चेत्तर्हि पुंसः स्वसंवित्तौ किं करणम् ? स्वात्मैवेति चेत्स एवार्थपरिच्छित्तावपि करणमस्तु कर्तुरनन्यस्यापि कथंचिद्भिन्नकर्तृकस्य करणस्य सिद्धेर्विभक्तकर्तृकवत् । एतेनार्थपरिच्छेदस्यार्थधर्मस्य स्वसंवित्तौ स्वात्मनः करणत्वे करणान्तरमकिंचित्करमुक्तम् । ततः पुरुषार्थपरिच्छेदयोरन्यतरेण स्वात्मनैव करणेनार्थपरिसमाप्तेः किं द्वितीयेन करणेन परोक्षज्ञानेन ? यद्येवमर्थज्ञानं तदेवार्थं तत्प्रत्यक्षं स्यादव्यभिचारहेतुः असत्यपि ज्ञाने साध्ये तस्यार्थस्वरूपस्य तदभावेपि भावादन्यथार्थाभावप्रसङ्गात् । न च ज्ञानस्याभावेऽर्थस्याभावः । परिच्छिद्यमानत्वधर्मेण धर्मिणो विशिष्टस्याप्यभाव एवेति चेन्न, तस्य ज्ञानासिद्धौ प्रतिपत्तिविरोधात् विशेषणासिद्धौ तद्विशिष्टस्य धर्मिप्रतीतेरसिद्धत्वेन हेतुत्वायोगस्याभिधानात् । एतेनाहमर्थं जानामीति प्रतीतेरात्मनोऽर्थज्ञाने स्वसंविदि

स्वाभ्युपगमात्, अस्तु वा यद्विषयत्वावच्छेदेन ज्ञानाजन्यत्वं तद्विषयत्वावच्छेदेनौपाधिकमेव प्रत्यक्षत्वम्, अनुमित्याद्याकारस्मा
ज्ञानात् सुखादित्याद्याकारस्यात्मादौ विषयत्वाद्यभ्युपगमादिति दिक्। 'ज्ञाते त्विति' ज्ञाते तु प्राकट्ये, अनुमाना
पद्धिन्नमपगच्छति निश्चिनोति बुद्धिमित्यर्थः। इतरस्य प्राकट्यस्य, अनुमानापेक्षत्वमसत्त्वादिति, अनुमानापेक्ष
त्वमप्राकट्यस्यार्थपरिच्छेदाविषये हेतुः, तत्र चास्वसंविदितत्वमिति बोध्यम्। तस्यानुमेयस्याविशेषादिति। यथा सन्ता
नान्तरज्ञानप्रतिभातेऽर्थे ज्ञानावच्छेदकत्वेनानुमेयत्वं तथा स्वज्ञानप्रतिभातेऽपीत्यविशेषो भावनीयः। अर्थज्ञानस्येत्यत्र
ज्ञानपदे करणव्युत्पत्तिः। तेन न तस्य प्राकट्यविशेषणत्वानुपपत्तिः। कुत इति, ततः परोक्षार्थज्ञानात् कुतः प्राकट्यस्य
विशेषो न कुतश्चिदनुमानापेक्षत्वतौल्यादित्यर्थः। स्वत इति, स्वत आत्मना, स्वसंविदितत्वेनापरोक्षप्राकट्यस्य च
तत्राप्यस्ततया तथात्वेनेत्यर्थः। भाष्ये तदन्यतरेण परोक्षज्ञानस्वसंविदितप्राकट्ययोर्मध्ये परोक्षज्ञानस्वसंविदितापप्राकट्ययो
र्मध्ये वाऽन्यतरेण, अर्थपरिसमाप्तेरर्थव्यवहारसिद्धेः। किं द्वितीयेन परोक्षज्ञानेनेत्यर्थः। 'अपि च फलकर्तृकस्येति'
उपचेयस्येऽपि कर्तृत्वकरणत्वाद्युपाधिभेदेन व्यवहारभेदसम्भवादित्यर्थः। भिन्नफलकर्तृकत्वादिति क्रियायां हि सकरणकस्य तथं
न तु कर्तृभिन्नकरणवत्त्वं तद्भिन्नकरणवत्त्वं वेत्यव्याप्त्याशङ्कः भयानिति भावः। अर्थपरिच्छेदस्य प्राकट्यस्य, तथाप्रती
तेरयोगादिति, इदं ज्ञानं पटविषयो घटज्ञाततावत्त्वादित्यनुमानस्य हेतोरज्ञानासिद्ध्या कर्तुमशक्यत्वादित्यर्थः। पक्षाज्ञानाद्वा
श्रयासिद्धिरप्यत्र द्रष्टव्या, एतेनाहं घटज्ञानवान् घटज्ञाततावत्त्वादित्यात्मपक्षकमनुमानमप्यपास्तम्, साध्याप्रसिद्धेश्चेति बोध्यम्।
न च ज्ञानजन्यस्य समवायेनार्थनिष्ठस्य ज्ञाततास्यधर्मस्य सम्य पविशेषमात्मनिष्ठस्याच्छिन्नकमात्मपक्षकमर्थपरिच्छेदवत्त्वानु

सिद्धे, घटो निदर्शनं साधनधर्मविकलं स्यात् । एतेन खरविषाणादिसाध्यानामपि स्वार्थरहितत्वमपास्तं, विशिष्टप्रतिपत्तिहेतुत्वाविशेषादन्यथा भावसाध्यत्वमसङ्गात् । ततो न तैरपि व्यभिचारः ॥ ८४ ॥ किञ्च—

तेन शरीरेन्द्रियादिकलापेन, कृत उत्पादितः, मकृतो जीवशब्दार्थः स्यात् । 'अ मन इति' तथा चानन्वयमव्यापिन एकमवव्यापित्वं न दुर्घटमित्यर्थः । सिद्धसाधनाभाव इति उपचरितचैतन्येन शरीरादिनेति शेषः । साध्यदोषनिरासस्य हेतुदोषमाशङ्कत सङ्ग्रास्त्वादितीत्यादिना, परिहरति–नेत्यादिना, अभिप्रेतमाध्यमिति पारमार्थिकसम्बन्धशून्यमभिप्रेतमित्यर्थः । तत्स्वाङ्गीकारे स्वार्थोपस्थितिद्वारा शब्दप्रमाजनकतायाः एव न्याय्यत्वात्सामिस्मृत्यादिविलम्बेन ततोऽनुमितिरूपत्वायाः अयोगादिति बोध्यम् । तदाभासवन्मरीचिकायाञ्जलसंभावत्, करणप्रतिपत्तिवदिन्द्रियव्यापारवत् । यथा ततोऽर्थं परिच्छिद्य प्रवर्तमानानामर्थक्रियानियमो दृश्यते तथा संज्ञाया अपीति तद्वत् संज्ञाप्रमाणमिति भावः । भाष्ये तदितरेति अभिधानकारणसामग्रीतरेत्यर्थः, सर्वथेति शून्योपादानत्वैकान्तनिराकरणादित्यर्थः । संज्ञाया भावाभावोभयरूपं सञ्ज्ञानलक्षणमुपादानं तदेव पररूपेणाभावरूपमित्येवमभावोपादानत्वं तु नास्मत्पक्षप्रतिकूलमित्याह–'सर्वत्रस्यापि' ॥ परिनिष्ठितः प्रतिबिम्बितः, भावाभावोभयात्मित इति घटादिसंज्ञार्थस्य घटादेः स्वरविषाणाद्यभावव्यावृत्त्या भावरूपत्वा द्भावान्तरव्यावृत्त्या—चाभावरूपत्वादुभयव्यावृत्त्या चोभयरूपत्वादिति भावः । 'तदनेनेति' अनेन संज्ञाया भावाभयत्वव्यवस्थापनेन, ननु जीवशब्दः सबाह्यार्थः संज्ञात्वादित्यत्र शरीरेन्द्रियकलापार्थत्वेऽपि निरतिशयत्वादिस्वभावेन सांख्यापरिकल्पितेन प्रतिक्षणभिन्नस्वभावेन च सौगतपरिकल्पितेनात्मना चरितार्थत्वाच स्याद्वादिन इष्टसिद्धिः स्यादित्याशङ्काया

माह–' मत्रेत्यादि ' नन्वेवमितरबाधाविमहिम्ना व्यापकतानवच्छेदकरूपेण साध्यानुमितिरभ्युपगमे पर्वतो द्रव्यवान् धूमादि त्यतोऽपि वह्नित्वेन वह्न्यनुमितिः स्यादिति चेत्, नेत्थं निर्णीतिकोपयोगप्रामाण्यवादिनां नः, तथोपयोगे तथानुमितेरिष्टत्वात्, अत एव परेऽपि मङ्गलं सफलं शिष्टाचारविषयत्वादित्यादेर्मङ्गलस्य समाप्तिफलकत्वानुमितिमिच्छन्ति । इयांस्तु विशेषो यत्परेषां सधानुमितावितरबाधादः परामर्शसहकारित्वमस्माकं त्वन्तर्व्याप्तिग्राहकतर्कोपधीयत्वमिति दिग्। विशिष्टप्रतिपत्तिहेतुत्वा वसाधारणधर्मप्रकारकधीहेतुत्वात्, भ्रान्तिप्रतिपत्तेरयोगादिति भ्रान्तेरसत्ख्यातित्वनिरासादित्यर्थः। प्रमाणत्वप्रति पत्तिमसद्भावादिति भ्रान्त्यन्यज्ञानस्य प्रमात्वनियमादित्यर्थः ॥ ८४ ॥

बुद्धिशब्दार्थसंज्ञास्तास्तिस्रो बुद्ध्यादिवाचिका ।तुल्या बुद्ध्यादिबोधाश्च त्रयस्तत्प्रतिबिम्बका ॥८५॥

मेप्याहुः अर्थाभिधानप्रत्ययास्तुल्यनामान ' इति–जीवार्थस्य जीव इति संज्ञा, जीव इति शब्दस्य च, जीव इति बुद्धेश्चेति । तत्रार्थपदार्थक एव जीवशब्दः तथार्थः सिद्धो, न बुद्धिशब्दपदार्थकः। ततोनेन हेतोर्व्यभिचारः, संज्ञात्वस्य सामान्येन हेतुत्वमात् इति तेपि न सम्यगुक्तयः सर्वत्र बुद्धिशब्दार्थसंज्ञानां तिसृणामपि स्वव्यतिरिक्तबुद्ध्यादिपदार्थवाचकत्वात्। यस्माद्धि शब्दानुचारितात् व्यभिचारेण यत्र बोधः प्रमाणतो स एव तस्यार्थः स्यात्, अन्यथा शब्दव्यवहारविलोपात्। यथा च जीवशब्दादर्थपदार्थकाज्जीवो न इत्याह्य इत्यत्र जीवार्थस्य प्रतिबिम्बको बोधः प्रादुर्भवति तथा बुद्धिपदार्थकाज्जीव इति बुद्धय इत्यादेर्बुद्ध्यर्थस्य प्रतिबिम्बको जीव इत्यादेति शब्दपदार्थकाच्छब्दस्य प्रतिबिम्बकः स्यात्। ततश्चोऽयोः तिसृणां संज्ञानामवगम्यन्ते तत्प्रतिबिम्बकबोधानां त्रयाणामेव भावात्। तदनेनाचार्यो हेतुव्यभिचाराशङ्का प्रत्यस्तमयति, बुद्ध्यादिसंज्ञानां तिसृणामपि स्वव्यतिरिक्तवस्तुसंबन्धदर्शनात् तदुक्तीनो

बहिरर्थस्य वास्तवस्य भावस्वरूपस्याभावे हि साधनदूषणप्रयोगस्य हेतोः संभवे स्वप्नावस्थायामिवोत्स्वप्नयोर्विशेषासिद्धिः । ततः किंचिन्मात्रमपि केन सद्योपलम्भनियमादिनानुमानेन स्वार्थेन साधितं स्यात् परार्थेन वा वचनात्मना परं प्रति, किं वा स्वसंविदितैव सतः प्रत्यक्षत एव साधितं स्यात् ? तत्साधनस्य स्वप्नवन्निर्विषयत्वात् । किं वा बहिरर्थाभावे केन, जडस्य प्रतिमा-सायोगात् इत्यादिना स्वार्थेन परार्थेन वा दूषणेन दूषितं स्यात् ? इति संतानान्तरमपि न केनचित्साधनेन साधितं स्यात् । तदनभ्युपगमे न केनचिद्दूषणेन दूषितं स्यात् तथा स्वसंतानक्षणक्षयादिकं च न केनचित् साधितं स्यात् । तदनभ्युपगमेऽपि न केनचिद्दूषितम् । इति न कश्चिद्व्यवतिष्ठते । तैमिरिकाक्षणिकचन्द्रदर्शनवद् भ्रान्तः सर्वो व्यवहार इत्यत्रापि तत्त्वज्ञानं शरणं, तत एव सर्वविभ्रमव्यवस्थितेः । इति व्याहतमेतत् तत्त्वज्ञानात् सर्वस्य भ्रान्तत्वसाधनम् अन्यथा बहिरर्थवदभिसंहितस्यापि सर्व विभ्रमस्य निराकरणापत्तेः भ्रान्तादेव ज्ञानात् तस्याप्यसिद्धेः । तथा परमाण्वादिदूषणेऽपि प्रतिपत्तव्यं तत्त्वज्ञानं शरणमतत्त्व-ज्ञानादभिसंहितस्यापि परमाण्वाद्यसत्त्वस्य निराकरणापत्तेः । अन्यथा तत्त्वमज्ञं स्यादिति सर्वत्र योज्यं सर्वस्य स्वेष्टस्य स्वयमनिष्टस्य च तत्त्वज्ञानादेव साधनदूषणोपपत्तेः । एतेन साधनदूषणप्रयोगादिति साधनमसिद्धमित्युक्तम् प्रतिक्षिप्तमपसिद्ध-त्वस्य स्वयमिष्टस्य तदसिद्धत्वस्य चानिष्टस्य साधनदूषणप्रयोगादेव व्यवस्थापनादन्यथा तद्व्यवस्थितेर्वैयर्थ्यप्रसङ्गात् । तदिमे विज्ञानसंतानाः सन्ति न सन्तीति तत्त्वाऽप्रतिपत्तेर्दापदुविरनिबन्धनैव इत्येनात्मना कथंचित्सकलाकारेणाद्वयानामपि परमाणूनां बहिरपि समवस्थाने विप्रतिपत्तिमात्रमलक्षणीयमेव । कदाचन एव हि ज्ञानपरमाणव संविन्मात्रादन्यापद्यस्थान्यन्ते नाम्य मेति दुष्परिहरं बहिः परमाणूनां व्यवस्थापने, तत्र पूर्वादिदिग्भागभेदेन षडंशतायां षडंशादिकल्पनया वृत्तिविकल्पेन वा परप

धोपालम्भे स्वपक्षघातात् तस्योपालम्भाभासत्वसिद्धेः। समानं हि दूषणं बहिःपरमाणुषु संवित्परमाणुषु च। देशतः संबन्धे षट्कत्वं दिग्भागभेदात् सर्वात्मना प्रचयस्यैकपरमाणुमात्रत्वम्। प्रचयस्य परमाणुभ्यो भेदे प्रत्येकं परिसमाप्त्यैकदेशेन वा वृत्तौ प्रचयबहुत्वं सांशत्वापादनमनवस्था च। न च परमाणुभिः संसृष्टैरसंसृष्टैर्वा प्रचयस्योपकारे संसर्गासंभवो, व्यवधानेन व्यवधीयमानाभ्यां व्यवधायकस्य सजातीयस्य विजातीयस्य वा व्यवधाने प्रकृतपर्यनुयोगोऽनवस्थाप्रसङ्गश्च चेति स्वपक्षघातः स्यात्, सूक्ष्मस्थूलसमाने बहिर्योलम्बरे तस्यानवकाशात् इत्येकविषयानेकाकारात्मवत्। तत्रापि विरोधो दूषणमिति चेत् सर्वथा कथंचिद्वा? न तावदाद्यः पक्षः, सर्वथा कश्चिद्विरोधासिद्धेः शीतोष्णस्पर्शयोरपि सत्त्वाद्यात्मनाऽविरोधात्, स्वेष्टेऽपि तस्य कथंचिद्विरोधपरिहारस्य पुनरायाससामर्थ्यसिद्धेर्न द्वितीयः पक्षः संभवति। तत्साक्षात्परंपरया वा विभ्रमविकरणभावापन्नं ज्ञानं, स्वरूपव्यतिरिक्तार्थालम्बनं, भावमात्रकत्वात् संतानान्तरसिद्धिवत्। विरूपज्ञानमात्रमात्रकत्वस्येव व्यभिचार इति चेत् न, संतानान्तरसाधनस्यापि व्यभिचारप्रसङ्गात्। न हि व्यापारव्याहारनिर्भासोऽपि विप्लुतो नास्ति, येनाव्यभिचारी हेतुः स्यात्। तदन्यत्रापि वासनाभेदो गम्येत न संतानान्तरम्। यथैव हि जाग्रद्दशायां बहिरर्थवासनाया दृढतमत्वात्तदाकारस्य ज्ञानस्य सत्यत्वाभिमानः, स्वप्नादिदशायां तु तद्वासनाया दृढत्वाभावात् तद्वेदनस्यासत्यत्वाभिमानो लोकस्य न परमार्थतो बहिरर्थः सिध्यतीति वासनाभेदोऽभ्युपगम्यते, तथा जाग्रद्दशायां संतानान्तरज्ञानस्य वासनाया दृढतमत्वात्सत्यत्वाभिमानोऽन्यत्र तद्दार्ढ्याभावादसत्यत्वव्यवहार इति वासनाभेदो गम्यतां, न तु संतानान्तरम्। तदनभ्युपगमे स्वसंतानक्षणक्षयादिसिद्धिः कथमभ्युपगम्यते? ततः सुदूरमपि गत्वा किंचिद्वेदनं स्वेष्टतत्त्वावलम्बनमेषितव्यम्। तदेव वेद्यवेदकाकारं बहिरर्थवेदनस्य स्वरूपव्यतिरिक्तालम्बनस्य साधयति। ततो बहिरर्थस्य सिद्धेः सिद्धं चक्षुरादित्रय, तस्य च बोधादित्रयम्।

भे स्वपक्षाक्षपात् तदुपोपालम्भाभासत्वसिद्धेः। समान हि दूषणं बहिःपरमाणुषु, संविल्परमाणुषु च। देशतः संबन्धे

भागभेदात्, सर्वात्मना प्रचयस्यैकपरमाणुमात्रत्वम्। प्रचयस्य परमाणुभ्यो भेदे प्रत्येकं परिसमाप्त्यैकदेशेन वा वृत्तौ

चेत् ... पादमनवस्था च। न च परमाणुभिः संसृष्टैर्व्यवहितैर्वा प्रचयस्योपकारे संसर्गासंभवो, व्यवधानेन व्यवधीय

नामांश ... तुल्यजातीयस्य, विजातीयस्य वा व्यवधाने प्रकृतपर्यनुयोगोऽनवस्थाप्रसञ्जनं चेति स्वपक्षपातः स्यात्, सूक्ष्मस्य

... गो बाधा, प्रयोज ... नकाशाद दूरविप्रकर्षणकाकारात्मवत्। तत्रापि विरोधो दूषणमिति चेत्, सर्वथा कथंचिद्वा ? न तावत्सर्वथा

अन्तर्यामि ... शीतोष्णस्पर्शयोरपि सत्त्वाद्यात्मनाऽविरोधात्, स्वेष्टेऽपि तस्मिन् कथंचिद्विरोधपरिहारस्य पुनरुपाल-

म भेगसी ... संभवति। तत्साक्षात्परंपरया वा, विमत्यधिकरणभावापन्नं ज्ञानं, स्वरूपव्यतिरिक्तार्थालम्बनं, ज्ञानत्वाद्

॥ इति महोपाध्याय ... वत्। विप्लवज्ञानमात्रमाद्याकारत्वेन व्यभिचार इति चेत्, न, संतानान्तरसाधनस्यापि व्यभिचारप्रसङ्गात्।

... सोऽपि विप्लुतो नास्ति, येनाव्यभिचारी हेतुः स्यात्। तदन्यत्रापि वासनाभेदो गम्येत न संतानान्तरम्।

... र्थवासनाया दृढतमत्वात्तदाकारस्य ज्ञानस्य सत्यत्वाभिमानः, स्वप्नादिदशायां तु तद्वासनाया दृढत्वाभावात्

॥ उ ... लोकस्य न परमार्थतो बहिरर्थः सिध्यतीति वासनामेवाभ्युपगम्यते, तथाभ्युपगच्छतां संतानान्तरसा

सत्यताभिमानोऽन्यत्र तद्व्यभिचारोऽसत्यताव्यवहार इति वासनाभेदो गम्यतां, ननु संतानान्तरम्। तदनभ्युप

ज्ञापकमुपायतत्त्व ... गतिः कथमभ्युपगम्यते ? ततः सुदूरमपि गत्वा किंचिद्वेदनं स्वेष्टतरवालम्बनमेषितव्यम्। तदेव वेद-

देवादेवार्थसिद्धि ... स्वरूपव्यतिरिक्तालम्बनत्वं साधयति। ततो बहिरर्थस्य सिद्धेः सिद्धं बन्ध्यादित्रयं, तस्य च मोक्षादित्रयम्।

नेयाकर प्रकृत पर्यनुयोग इति प्रथमभङ्गस्यव्यवधीयमानसंबन्धः कथमिति प्रश्नस्तदवस्थः स्यादित्यर्थः । अनवस्थाप्रसङ्गेन चेति व्यवहितपरमाणूनामवस्थानामाभावादित्यर्थः । तस्य परोक्षोपालम्भस्य, तत्रापि अन्तर्बहिर्वा आस्यन्तरेऽपि, वेद्यवेदका कारमिति वेद्यवेदकाकारवत्त्वं साधनमित्यर्थः । स्यात् सर्वमभ्रान्तमेव ज्ञानमित्यत्र सर्वपदमहिम्ना ज्ञानत्वावच्छेदेना भ्रान्तत्वसाधनाभावतः सिद्धसाधनादिदोष !, द्वितीयभङ्गे सर्वपदानुपादानात् ज्ञानत्वसामानाधिकरण्येन भ्रान्तत्वस्य विधे यत्वाभावतो बाधः, प्रयोजनं तु प्रामाकरमतभङ्गः । एवमग्रेतना अपि भङ्गाः स्वपरसमयाविरोधेन भावनीयाः ॥ ८७ ॥

अन्तर्बहिर्विषयताघटितप्रमात्व-भ्रान्तत्वकोटिकृतविप्रतिपत्तिभेदी ॥
स श्रेयसीं प्रणयितां प्रथयन् मुनीनां, रत्नत्रयस्य जयताज्जिनवाक्यराशिः ॥ १ ॥

॥ इति महोपाध्यायश्रीयशोविजयगणिविरचितेऽष्टसहस्रीतात्पर्यविवरणे सप्तमः परिच्छेदः ॥ ७ ॥

## ॥ ॐ ॥ ॥ अथाष्टमः परिच्छेदः ॥ ॥ ॐ ॥

ज्ञापकमुपायतत्त्वं, समन्तभद्राकलङ्कनिर्णीतम् ॥ सकलैकान्तासम्भव-मष्टसहस्री निवेदयति ॥ १ ॥

दैवादेवार्थसिद्धिश्चे-द्दैवं पौरुषतः कथम् ॥ दैवतश्चेदनिर्मोक्षः, पौरुषं निष्फलं भवेत् ॥ ८८ ॥

प्रस्तेऽपि न्यस्तहस्ते धनुषि घनजराजर्जरे कृष्णसैन्ये, यद्गात्रस्नात्रनीराद्व्यजनि शुभमसौ पातु शङ्खेश्वरो माम् ॥१॥

अष्टमे दैवपुरुषकारैकान्तनिरासः, स च ग्रन्थं सुगमप्रायः, इदं तु चिन्त्यम् ॥ ८८ ॥

**पौरुषादेव सिद्धिश्चेत्, पौरुषं दैवतः कथम् ? ॥ पौरुषाच्चेदमोघं स्यात्, सर्वप्राणिषु पौरुषम् ॥८९॥**

पौरुषादेवार्थस्य सिद्धिरिति चेत्तदापि कथं पौरुषं दैवतः स्यात् ? प्रतिज्ञाहानिप्रसङ्गात्। यदि पौरुषं विना दैवसंपदा न स्यात्, 'तादृशी जायते बुद्धिर्व्यवसायश्च तादृशः। सहायास्तादृशाः सन्ति यादृशी भवितव्यता ॥१॥' इति प्रसिद्धेः। तस्मात् बुद्धिव्यवसायादि पौरुषं पौरुषापादितमिति चेत्सर्वमोघमेव सर्वप्राणिषु पौरुषं भवेत्। तथैवेति चेत्, तद्व्यभिचारदर्शिनो न वै मन्वीरन्। स्यान्मतमे-तत्—पौरुषं द्विविधं सम्यग्ज्ञानपूर्वकं मिथ्याज्ञानपूर्वकं च। तत्र मिथ्याज्ञानपूर्वकस्य पौरुषस्य व्यभिचारदर्शनेऽपि सम्यगवबोधनिबन्धनस्य न व्यभिचारः। तत सफलमेव पौरुषमिति। तदसत्, दृष्टकारणसामग्रीसम्यगवबोधनिबन्धनस्यापि पौरुषस्य व्यभिचारदर्शनात् कस्यचिदुपेयाप्राप्तेरदृष्टकारणकलापसम्यगवबोधस्य तु साक्षादसकलविदामसंभवात् तन्निबन्धनपौरुषाभावात्। प्रमाणान्तरात् तदवबोधस्य संभवेऽपि किमसावदृष्टः कारणकलापः करणशक्तिविशेषः पुण्यपापविशेषो वा ? प्रथमपक्षे तत्सम्यगवगमनिमित्तकस्यापि पौरुषस्य व्यभिचारदर्शनादमोघत्वासिद्धिः। द्वितीयपक्षे तु दैवसद्भावादेव पौरुषात् फलसिद्धिः दैवतदवगमनिबन्धनादेव पौरुषादुपेयप्राप्तिव्यवस्थिते। तदपरिज्ञानपूर्वकादपि कदाचित्फलोपलम्भेन न सम्यगवबोधनिबन्धनः पौरुषैकान्तः। इत्यसौ परित्याज्य एव दैवैकान्तवत् ॥ ८९ ॥

विरोधान्नोभयैकात्म्यं, स्याद्वादन्यायविद्विषाम्॥ अवाच्यतैकान्तेऽप्युक्ति–र्नावाच्यमिति युज्यते॥९०॥

दैवपौरुषयोः सर्वैकान्ताभ्युपगमे स्याद्वादावाच्यतावो च स्ववचनविरोधात् स्याद्वादनीतिः श्रेयसी पद्धतिः प्रमाणाविरुद्धाभिधायि-त्वात्॥९ ॥ कीदृशी स्याद्वादनीतिरित्याहुः—

अबुद्धिपूर्वापेक्षाया–मिष्टानिष्टं स्वदैवतः॥ बुद्धिपूर्वव्यपेक्षाया–मिष्टानिष्टं स्वपौरुषात्॥ ९१॥

यतोऽर्थस्योपस्थितमनुकूलं प्रतिकूलं वा दैवकृतं, बुद्धिपूर्वापेक्षापायात् तत्र पुरुषकारस्याप्रधानत्वात् दैवस्य प्राधान्यात्। तद्विपरीतं पौरुषापादितं बुद्धिपूर्वव्यपेक्षानपायात् तत्र दैवस्य गुणभावात् पौरुषस्य प्रधानभावात्, न पुनरन्यतरस्याभावात् अपेक्षा स्वत्वापक्षस्वस्थायाः। तथापेक्षानपाये परस्परं सहायत्वेनैव दैवपौरुषाभ्यामर्थसिद्धिः। इति स्यात्सर्वं दैवकृतमबुद्धिपूर्वापेक्षातः। स्यात् पौरुषकृतं बुद्धिपूर्वापेक्षातः। स्यादुभयकृतं क्रमार्पितद्वयात्। स्यादवक्तव्यं सहार्पितद्वयात्। स्याद्दैवकृतावक्तव्यमबुद्धिपूर्वापेक्षया सहार्पितद्वयात्। स्यात्पौरुषकृतावक्तव्यं बुद्धिपूर्वापेक्षया सहार्पितद्वयात्। स्यादुभयावक्तव्यमेव क्रमेतरार्पितद्वयात्। इति सप्तभङ्गीप्रक्रिया पूर्ववत्॥ ९१॥

दैवैकान्तादिपांशुप्रसरनिरसनोद्भूतसामर्थ्यवृत्तिः, सन्मार्गव्यापिनीयं पथमततिरिपाज्ञानसेव हरन्ती॥
न च प्रध्वंसमदा सकलमपि जडाभावानयन्ती नितान्तं, नीतिः स्याद्वादिनीद्धा जगदगममूर्ता निर्वृतिं वः प्रदेयात्॥१॥

॥ इत्याप्तमीमांसालङ्कृतावष्टमः परिच्छेदः॥८॥

स्यादेवकथं सर्वमित्यादिमसप्तभङ्गीमप्रविरविरुद्धा, इत्थमविवक्षामहिम्ना स्यादस्त्येवजन्यो घटः स्यादवक्तव्य इत्यादि सप्तभङ्गी प्रवृत्तेरपि सम्भवादेकस्वभावेनोभयजन्यत्वविवक्षायामवक्तव्यस्वरूपटितभङ्गानामपि साधकत्वादिति युक्तमुत्पश्याम । यच नियतिद्वात्रिंशिकायां ॥ "ज्ञानमप्यभिचारं चे–जिनानां मा भम कृथाः ॥ अथ तत्राप्यनेकान्तो, विदाः स्मः किन्तु को भवान् ॥ १ ॥" इति भगवज्ज्ञानरूपनियत्येकान्तदृढीकरणम्, तज्ज्ञानज्ञेयपरिणामयोः समनियमप्रतिपादके " जं जहा जं भगवया दिहं, तं तहा त विपरिणाम ( मगइ ) " इति परमर्षिवाक्ये कार्यकारणभावग्राहकत्वाध्यारोपेण नयवचने आहार्यारोपस्यापि निमित्तत्वादित्याद्युप(नयोप)देशामृततरङ्गिण्यां मपञ्चितमस्माभिः ॥ ०१ ॥

दैव वलीय इति केचन पौरुष च, केचिद् वदन्ति न तु तुल्यवदाद्रियन्ते ॥
तत्पक्षपातविषमाचलपक्षपात–वज्राभिघातसमतामियमेति युक्तिः ॥ १ ॥

इति महोपाध्यायश्रीयशोविजयगणिविरचितेऽष्टसहस्रीतात्पर्यविवरणेऽष्टमः परिच्छेदः ॥ ८ ॥

## ॐ ॥ अथ नवम परिच्छेद. ॥ ॐ

सम्यगवबोधपूर्वं, पौरुषमपसारिताखिलानर्थम् ॥ दैवोपेतमभीष्टं, सर्वं संपादयत्याशु ॥ १ ॥

पाप ध्रुव परे दुःखात्, पुण्यं च सुखतो यदि ॥ अचेतनाकषायौ च, बध्येयातां निमित्ततः ॥९२॥

द्विविधं हि दैवं पुण्यं पापं च प्राणिनामिष्टानिष्टसाधनमुक्तम्, 'सद्वेद्यशुभायुर्नामगोत्राणि पुण्यम्, इतरत् पापम्,' इति वचनात्। तत्र परसंताने दुःखहेतुः पुरुषः पापमास्रवयति सुखहेतुः पुण्यमिति परत्र सुख दुःखनिमित्तविप्रतिपत्तिप्रतिपक्षस्यार्थमिदमुक्तम्। तत्र परसंताने दुःखहेतुः पुरुषः पापमास्रवयति सुखहेतुः पुण्यमिति परत्र सुख दुःखोत्पादनात् पुण्यपापबन्धैकान्ते कथमचेतनाः क्षीरादयः कण्टकादयो वा न बध्येरन् ? परस्मिन् सुखदुःखयोरुत्पादनात्। चेतना एव बन्धार्हा इति चेत् तर्हि वीतरागाः कथं न बध्येरन् ? तन्निमित्तत्वात्परस्य। तेषामभिसन्धेरभावान्न बन्ध इति चेत् तर्हि न परत्र सुखदुःखोत्पादनं पुण्यपापबन्धहेतुरित्येकान्तः संभवति ॥ ९२ ॥

**पुण्यं ध्रुवं स्वतो दुःखात्पापं च सुखतो यदि ॥ वीतरागो मुनिर्विद्वांस्ताभ्यां युञ्ज्यान्निमित्ततः ॥९३॥**

स्वस्मिन् दुःखोत्पादनात् पुण्यं सुखोत्पादनात् पापमिति यदीष्यते तदा वीतरागो विद्वांश्च मुनिस्ताभ्यां पुण्यपापाभ्यामात्मानं युञ्ज्यान्निमित्तसद्भावात् वीतरागस्य कायक्लेशादिरूपदुःखोत्पत्तेर्विदुषस्तत्त्वज्ञानसंतोषलक्षणसुखोत्पत्तेस्तन्निमित्तत्वात्। स्यान्मतं– स्वस्मिन् दुःखस्य सुखस्य चोत्पादनेऽपि वीतरागस्य तत्त्वज्ञानवतस्तदभिसंधेरभावान्न पुण्यपापाभ्यां योगस्तस्य तदभिसंधि निबन्धनत्वात् इति तदनेकान्तसिद्धिरेवाबाधा। आत्मसुखदुःखाभ्यां पापेतरैकान्तपक्षे पुनरकषायस्यापि ध्रुवमेव बन्धः स्यात्। ततो न कश्चिन्मोक्षमुपगच्छेत् तदुभयाभावासंभवात्। न हि पुण्यपापोभयबन्धाभावासंभवे मुक्तिर्नाम, संसृतेरभावप्रसङ्गात्। ततो नैतावेकान्तौ संभाव्येते दृष्टेष्टविरुद्धत्वात् परापेक्षान्तवत् ॥ ९३ ॥

मत्तव्यालकरालकालफणिराडुत्फालसिन्धूर्णव–ज्वालाजालजटालपावककरणमौलव्यथानन्दजाः ॥
यान्त्यद्यापि भियः क्षयं भयभृतां यन्नाममन्त्रस्मृते–स्तं श्रीमत्कलवार्द्धिमण्डनमहं ध्यायामि पार्श्वप्रभुम् ॥१॥

नन्वेवं देवमेव पुण्यपापाभवविचारः, पापं ध्रुवमिति, परे स्वस्मिन्नात्मनि, निमित्तत इति परगतसुखदुःखनिमित्त-भावादित्यर्थः ॥९२॥ तथा स्वस्मिन्नपि न बन्धः स्यादिति वक्ष्यमाणविशुद्धिसंक्लेशरूपपुण्यपापास्रवकारणकत्वादित्यर्थः, तेन तत्त्वज्ञानिनो जीवन्मुक्तस्य विहितनिषिद्धाचरणेऽपि मिथ्याज्ञानवासनाभावाद्बन्धाभाव इति नैयायिकादिमतमपास्तम्। रागद्वेषाभावादेव तस्य बन्धाभिद्धेः, अन्यथा तत्त्वज्ञानस्यापि विहितत्वेन विनश्यद्वस्थ—मिथ्याज्ञानवासनासहकृतबन्धप्रसक्त्या-स्यानन्तत्वादनिर्मोक्षापत्तेः, निषिद्धाचरणस्य च तस्यानुचितप्रवृत्तिजनकमोहाभावेनैव दूरापास्तत्वात्। एतेनेश्वरार्पणबुद्ध्या फलानुद्देशेन प्रतिपदोक्तफलत्यागेन विविदिषार्थतया वा कृतात्कर्मणोऽदृष्टानुत्पत्तिरिति वेदान्तिमतमप्यपास्तम्, ईश्वरार्पण-इत्यादेरपि पापानुत्पत्त्यापत्तेः। श्येनादिनाऽतिप्रसङ्गेन वेदोक्तत्वस्याप्यविनिगम्यत्वादिति दिक् ॥ ९३ ॥

विरोधान्नोभयैकात्म्यं, स्याद्वादन्यायविद्विषाम् ॥ अवाच्यतैकान्तेऽप्युक्ति-र्नावाच्यमिति युज्यते ॥९४॥

वस्तुतैकान्तपक्षसिद्धान्ते स्याद्वादेऽनभिप्रेतायामनभिप्रेताभिधानविरोधात्। कथंचिदेवेति युक्तम्। नहि स्वस्मिन्नन्यस्मिन्वा सुखात् दुःखाच्च पुण्यमेव पापमेव वा तदुभयमेव वेति वक्तुमन्याहतिः संभवति नापि तथाऽवाच्यतैकान्तेऽवाच्यमित्यभिधानमविरुद्धं, यतः स्याद्वादो न युक्तः स्यात् ॥ ९४ ॥ कथं स्याद्वादे पुण्यपापास्रवः स्यादित्याह—

विशुद्धिसंक्लेशाङ्गं चेत्, स्वपरस्थं सुखासुखम् ॥ पुण्यपापास्रवो युक्तो, न चेद् व्यर्थस्तवार्हत ॥९५॥

आत्मनः परस्य वा सुखदुःखयोर्विशुद्धिसंक्लेशाङ्गयोरेव पुण्यपापास्रवहेतुत्वं न चान्यथातिप्रसङ्गात्, विशुद्धिकारणस्य विशुद्धि-

कार्यस्य विशुद्धिस्वभावस्य वा विशुद्ध्यङ्गस्य, संक्लेशकारणस्य संक्लेशकार्यस्य संक्लेशस्वभावस्य वा संक्लेशाङ्गस्य च सुखस्य दुःखस्य वा तदुभयस्य वा स्वपरोभयस्थस्य पुण्यास्रवहेतुत्वं पापास्रवहेतुत्वं च यथाक्रमं प्रतिपत्तव्यम् । न चान्यथा, यथोदितप्रकारेणातिप्रसङ्गस्येष्टविपरीतस्यापि पुण्यपापबन्धप्रसङ्गस्य दुर्निवारत्वात् । कः पुनः संक्लेशः का वा विशुद्धिरिति चेदुच्यते,—आर्तरौद्रध्यानपरिणामः संक्लेशस्तदभावो विशुद्धिरात्मनः स्वात्मन्यवस्थानम् । तत्रार्तध्यानं चतुर्विधं, आर्तममनोज्ञस्य संप्रयोगे तद्विप्रयोगाय स्मृतिसमन्वाहारो विपरीतं मनोज्ञस्य वेदनायाश्च निदानं चेति सूत्रचतुष्टयेन तथाप्रतिपादनात् । रौद्रध्यानं चतुर्विधं, हिंसादिनिमित्तभेदात् 'हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमिति च सूत्रे प्रकाशनात् । 'मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः' त एव संक्लेशपरिणामा इति न विरुध्येते तेषामार्तरौद्रध्यानपरिणामकारणत्वेन संक्लेशाङ्गत्ववचनात् तत्कार्यहिंसादिक्रियावत् । 'कायवाङ्मनःकर्म योगः' 'स आस्रवः' 'शुभः पुण्यस्याशुभः पापस्य' इत्यपि न विरुद्धं, कायादियोगस्यापि तत्कारणकार्यत्वेन संक्लेशाङ्गत्वव्यवस्थितेः । एतेन तदभावे विशुद्धिः सम्यग्दर्शनादिहेतुः धर्म्यशुक्लध्यानस्वभावा तत्कार्यविशुद्धिपरिणामात्मिका च व्याख्याता, तस्यामेवात्मन्यवस्थानसंभवात् । तदेवं विवादाध्यासिताः कायादिक्रियाः स्वपरसुखदुःखहेतवः संक्लेशकारणकार्यस्वभावाः प्राणिनामशुभफलपुद्गलसंबन्धहेतवः संक्लेशाङ्गत्वाद्विषभक्षणादिकायादिक्रियावत् । तथा विवादापन्नाः कायादिक्रियाः स्वपरसुखदुःखहेतवो विशुद्धिकारणकार्यस्वरूपाः प्राणिनां शुभफलपुद्गलसंबन्धहेतवो, विशुद्ध्यङ्गत्वात् पथ्याहारादिकायादिक्रियावत् । ये शुभाशुभफलपुद्गलास्ते पुण्यं पापं च कर्म निश्चितम् । इति संक्षेपात्सुखदुःखशुभाशुभकर्मास्रवबन्धकारणं सूचितं भवति, विस्तरतस्तस्यास्रवबन्धाध्याये सुनिरूपितत्वात् । ततः स्यात् स्वपरस्थं सुखदुःखं पुण्यास्रवहेतुर्विशुद्ध्यङ्गत्वात् । स्यात् पापास्रवहेतुः, संक्लेशाङ्गत्वात् । स्यादुभयं, क्रमार्पितद्व

तत्र समवायात्तथाव्यपदेश इति चेत्, न, सर्वथैकस्वभावस्य समवायित्वनिमित्तकारणत्वादिनानास्वभावविरोधात्। महेश्वरस्याभिसन्धे-रनित्यत्वेपि समानप्रसङ्गः पदार्थान्तरभूतस्याभिसन्धेस्तेन संबन्धाभावस्य तत्कृतोपकारानपेक्षस्य व्यपदेशासंभवस्य (वा)विशेषात्, सकलकार्याणामुत्पत्तिविनाशयोः स्थितौ च महेश्वराभिसन्धेरेकत्वे सकृदुत्पत्त्यादिप्रसङ्गाद्विचित्रत्वानुपपत्तेरिति । तदनेकत्वेप्यक्रमत्वेऽस्यैव दोषस्योपनिपातात्, क्रमवत्त्वे केषांचित्कार्याणां सकृदुत्पत्त्यादिदर्शनविरोधात् कथमनित्योभिसंधिरीश्वरस्य स्यात् ? समप्यसौ सिसृक्षान्तरापेक्षजन्मा परीश्वरसिसृक्षानपेक्षजन्मा तदा तन्मात्रयोपि तथा भवेयुरिति न कार्यत्वादिहेतवः प्रयोजकाः स्युः । तदा कथमनेकसिसृक्षा-पेक्षा चेत् अनवस्था । बुद्धिपूर्वकत्वादिच्छाया न दोष इति चेत्, सा तर्हि बुद्धिरीश्वरस्य यदि नित्यैकस्वभावा तदा महेश्वरस्य न विरुद्धा गमनहेतुः क्रमतो युगपद्वा ? पूर्वपूर्वसिसृक्षावशादुत्तरोत्तरसिसृक्षोत्पत्तिर्नित्यैकस्वभावबोधस्यापि महेश्वरस्य न विरुद्धा कार्ये तत्समानसमयानेकजन्यादिकार्योत्पत्तिश्च पूर्वसिसृक्षातः उत्तरसिसृक्षायाश्च समानकालजन्यादिकार्याणां च भावान्नादित्वात् कार्यकारणप्रवाहस्येति चेत्, न, एकस्वभावस्येश्वरबोधस्यैकस्य पूर्वपूर्वसिसृक्षापेक्षाविरोधात्, तदपेक्षायां स्वभावभेदापत्तिप्रसक्तेः । तत्र सिसृक्षान्तरादिकार्योत्पत्तौ नेश्वरबोधः सिसृक्षान्तरमपेक्षते, तत्कार्याणामेव तदपेक्षत्वादिति मतं, तदप्यसत्, नित्येश्वरबोधस्य तदनिमित्तत्वप्रसङ्गात् । तदभावेऽभावात्तस्य तन्निमित्तत्वे सकलात्मनां तन्निमित्तता स्यात्, व्यतिरेकाभावाविशेषात् । अथासर्वगत-स्येश्वरबोधस्य नित्यत्वात्कालव्यतिरेकाभावेपि न देशव्यतिरेकासिद्धिः । सकलात्मनो तु नित्यसर्वगतत्वात्कालदेशव्यतिरेकासिद्धि-रिति मतं तर्हि दिक्कालाकाशानां तत एव सर्वोत्पत्तिमन्निमित्तकारणता मा भूत् । एतेनेश्वरस्य तन्निमित्तकारणत्वं प्रसिद्धिं, निरस्येश्वरबोधस्यापि तन्निमित्तत्वे सकृत् सर्वत्रोत्पित्सुकार्याणामुत्पत्तिर्न स्यात्, तस्य सर्वत्राभावात् शरीरप्रदेशवर्तिनोपि सर्वत्र

धर्माधर्मकारणस्य तदभावात्मकत्वाभावात्, कथमन्वयमात्रेण तत्कारणत्वं युक्तम्? नित्येश्वरज्ञानस्य सर्वगतस्यैकस्यैव बोधः। तत्त्वाभिज्ञानसर्वगतत्वात् धर्मेऽन्वयव्यतिरेकनिश्चयासम्भवान्न निमित्तकारणत्वसिद्धिरिति चेत्, न, ईश्वरस्य कदाचित्कस्यचिद्बोधस्यैवमुपर्ये गम्यमानत्वविरोधात्। यदि पुनरपरापरधर्माधर्मज्ञानस्याविच्छेदात् सदाऽस्त्येवेति मतिः, तदा कुतो व्यतिरेकस्तस्य सिध्येत्? कथं चानित्यस्य बोधस्येश्वरबोधान्तरानपेक्षस्योत्पत्तिर्न पुनः मिथ्याज्ञानादिकर्मणामिति विशेषहेतोर्विना प्रतिपद्यामहे? तस्य बोधान्तरापेक्षायामनवस्थानं प्रसक्तम्। स्यान्मतं,—पूर्वपूर्वबोधसिद्धभावादुत्तरोत्तरबोधसिद्धभावाद्धर्मादिकार्याणामुत्पत्तेरनादित्वा-त्कार्यकारणभावस्य बीजाङ्कुरादिवदनवस्थाप्रसङ्गाद् इति नैतत्सारम् ईश्वरकल्पनानर्थक्यप्रसङ्गात्। तद्वदेव भावाद्धर्मादिकार्याणां तत्कारणत्वाभिनिवेशानर्थक्यमिति चेत् न, व्यतिरेकासिद्धेः, अन्वयमात्रेण कारणत्वे नभःकारणत्वाभिमतानामपि तत्प्रसङ्गात्। न चैकस्वभावाद्भावात्कामादिकार्यवैचित्र्यं क्रमतोऽपि युज्यते महेश्वरनिमित्तादिति, किमनया चिन्तया? तयोरेकस्वभावत्वेऽपि कर्मवैचित्र्यात्कामादिप्रभववैचित्र्यमिति चेत्, युक्तमेतत्, किन्तु नेश्वरेच्छाभ्यां किञ्चित् साध्यार्थपरिसमाप्तेः, सति कर्मवैचित्र्ये कामादिप्रभववैचित्र्यस्य भावात्सद्भावात् 'कामादिप्रभवश्चित्रः कर्मबन्धानुरूपतः' इत्यस्यैव दर्शनस्य प्रमाणसिद्धत्वात् अनिमित्तान्वयव्यतिरेकयोरीश्वरेच्छयोः कारणत्वपरिकल्पनानामतिप्रसङ्गात्। एतेन चिरन्तनप्रवृत्तिसन्निवेशविशेषादिभ्यः पृथिव्यादेर्बुद्धिमत्कारणपूर्वकत्वसाधनेनेश्वरसाधनं प्रत्युक्तं, धर्माधर्माभ्यामेवात्मनः शरीरेन्द्रियबुद्ध्यादिकार्यजननस्य सिद्धेः बुद्धिमत्कारणपूर्वकत्व समारोपेऽपि चिरन्तनप्रवृत्तिसन्निवेशविशेषकार्यत्वाचेतनोपादानत्वार्थक्रियाकारित्वादीनां साधनानामुपपत्तेस्तत्र पृथिव्यादेर्बुद्धिमत्कारण पूर्वकत्वासिद्धेः। ननु भोगस्य कर्मोत्पत्तेरात्मनो धर्माधर्मयोश्च यथायथमात्मादिभिर्भोगभोग्यतानुकरणादिसम्पादनक्षेत्रज्ञसम्-

वात् तन्निमित्तमात्मान्तरं मृत्पिण्डकुम्भकारवदिति चेत्, न एवमपि प्रकृतसाधनव्यतिरेकानिश्चयात्। यथा हि, तनुकरणभुवनादिकं विवादापन्नं बुद्धिमत्कारणपूर्वकं विरम्यप्रवृत्तेः सन्निवेशविशिष्टत्वादचेतनोपादानत्वादर्थक्रियाकारित्वात्कार्यत्वाद्वा घटवदिति साधन-मुच्यते तथास्मादन्यस्मीश्वराख्य बुद्धिमत्कारणमन्तरेणाचेतनस्यात्मनोऽनीशस्य धर्माधर्मयोश्चाचेतनयोर्विचित्रोपभोगयोग्यतनुकरणभुवना-दिनिर्माणकौशलासंभवात्तन्निमित्तकारणमात्मान्तरं बुद्धिमत्कारणमेषितव्यमित्यनेन व्यतिरेकः समर्थ्यते। कुम्भकारमन्तरेण मृत्पिण्ड-दण्डादेः स्वयमचेतनस्य घटादिनिष्पादनकौशलासंभववदिति वैधर्म्यदृष्टान्तप्रदर्शनम्। तस्यैव कुलाले मृत्पिण्डादेर्घटादिसंपादनसाम-र्थ्यदर्शनादिति चान्वयसमर्थनमभिधीयते। न चैवमभिमतं साध्यमन्वयानुपपत्तेरभावात्। बुद्धिमता कारणेन विना विरम्यप्रवृत्त्या-देरसंभवादन्यथानुपपत्तिरस्त्येवेति चेत्, न, तस्यापि तनुकरणस्य तदुत्पत्तेरसंभवात् काष्ठादिवत् यादृशोपि निमित्तभावे कर्मणामचेतन-त्वेपि तन्निमित्तत्वमप्रतिषिद्धं, सर्वथा दृष्टान्तव्यतिक्रमात्। यथैव हि कुम्भकारादिः सतनुकरणः कुम्भादेः प्रयोजको दृष्टस्तनुकरणभुव-नादीनामशरीरेन्द्रियेश्वरप्रयोजकत्वकल्पनया व्यतिक्रम्यते, तथा कर्मणामचेतनानामपि तन्निमित्तत्वकल्पनया बुद्धिमानपि दृष्टान्तो व्यतिक्रम्यतां विशेषाभावात्। स्यान्मतं—'सशरीरस्यापि बुद्धीच्छाप्रयत्नवत एव कुलालादेः कारकप्रयोक्तृत्वं दृष्टं, कुटादिकार्यं कर्तु-मयुञ्जानस्य तदर्शनात्, तद्बुद्धिमतोपीच्छाभावे तदनुपलब्धेस्तदिच्छावतोपि प्रयत्नाभावे तदनुपलम्भात्। तद्वत्तनुकरणस्यापि बुद्धिमत सिसृक्षावतः प्रयत्नवतः परमेश्वरस्य समस्तकारकप्रयोक्तृत्वोपपत्तेर्न दृष्टान्तव्यतिक्रमः, सशरीरस्येतरयोः कारकप्रयुक्ति-प्रयत्नतुल्यत्वात्। न हि सर्वथा दृष्टान्तदार्ष्टान्तिकयोः साम्यमस्ति तद्विशेषविरोधादिति तदयुक्तं तनुकरणस्य बुद्धीच्छा-प्रयत्नानुपपत्तेर्मुक्तात्मवत्, *शरीरादृष्टिः* संसार्यात्मवत्, काष्ठादिवच्चेति। शरीरेन्द्रियाद्युत्पत्तेः पूर्वमात्मना व्यभिचार इति चेत्,

रैपाधिष्ठित इत्यनवस्था स्यात् अन्यथा स्यात्तेनैवास्य हेतोर्व्यभिचारः। नायं प्रसङ्गो, बुद्धिमत्त्वादिति चेत्, तत एव तर्हि महीधरानुक-
करणादयः प्राणिना मा भूवन्। यथैव हि बुद्धिमानीश्वरो नाधिष्ठात्रन्तरं चेतनमपेक्षते तथा महीधरान् कुम्भादिशरीरकरणादीनपि
मास्म कार्षीत् मातिशय तद्विदः महीधरस्वकार्यकरणवर्तनात्। महीधरानुकरणादयः प्राणिनो कर्मणो वैचित्र्यादिति चेत् तर्हि कर्मणा-
मपि तेषामीश्वरज्ञाननिमित्तत्वे समानप्रसङ्गः तान्यपि महीधरानुकरणादिकारणानि मा भूवन्निति। तदनिमित्तत्वे तनुकरणादेरपि तन्नि-
मित्तत्व मा भूद्विशेषाभावात्। एवं पार्थक्रियादेरपि तस्यामेकान्तिकत्वं कर्मणः स्वापोऽपार्थक्रियाकारित्व-स्वस्वातन्त्र्यवर्तनयोग्ये
तनाधिष्ठानाभावेऽपि भावात्। ततः कर्मैव प्रविशिष्टप्रज्ञाविभ्राः कामादयस्तत्र कर्मवैचित्र्यमिति स्थितम्। न हि भावस्वभावोपा-
लम्भः करणीयोऽन्यत्रापि तथैव तत्प्रसङ्गानिवृत्तेः। यथैव हि कथमचेतनः कर्मैव यः कामादिवैचित्र्यं कुर्यात् कामादिर्वा चेतनस्वभावः
कथमचेतनं कर्मवैचित्र्यमिति तत्स्वभावस्योपालम्भः प्रवर्तेते कथमचेतनमुन्मत्तकादिभोजनमुन्मादादिवैचित्र्यं विदधीत प्राणिनामुन्मा-
दादिर्वा चेतनः कथमचेतनं मुवादि कर्मवैचित्र्यमित्यपि तत्स्वरूपोपालम्भः किमिति प्रसज्यमानो निवर्त्येत? तथादृष्टत्वादिति चेत्, तत
एव प्रकृतस्वभावोपालम्भोऽपि निवर्त्यतां तथानुमितत्वात्। न चैवमीश्वरस्याप्यनुमितत्वादुपालम्भप्रसङ्गनिवृत्तिः स्यादिति शङ्कनीयं,
तदनुमानस्यानेकदोषदुष्टत्वात्। तथा हि, तनुकरणभुवनादेः कार्यत्वादिसाधनं किमेकबुद्धिमत्कारणत्वे साध्येऽनेकबुद्धिमत्कारणत्वे
वा? प्रथमपक्षे प्रासादादिनानेकसूत्रधारसमानादिविदुना तदनैकान्तिकम्। द्वितीयपक्षे सिद्धसाधनं नानाप्राणिनिमित्तत्वात्तदुपभो-
मतन्वानीनां तेषां तददृष्टत्वात्। एतेन बुद्धिमत्कारणसामान्यसाधने सिद्धसाधनमुक्तं सदभिमतविशेषस्याधिकरणसिद्धान्तन्यायेना-
प्यसिद्धः। सामान्यविशेषस्य साध्यत्वाददोष इति चेत्, न, दृष्टादृष्टविशेषाश्रयसामान्यविकल्पद्वयानतिवृत्तेः दृष्टविशेषाश्रयस्य सामान्य

ग्धोपाधित्वस्य दुर्वारत्वेन तदादिव्यभिचारसंशयमत्त्वेनानुमानानवतारापत्तेः व्यभिचारज्ञानत्वेनैव विरोधित्वात् पक्षतत्स्व मयोरपि व्यभिचारसंशयस्य तथात्वादिति वाच्यम्, प्रकृते कार्यत्वावच्छिन्नं प्रति कर्तृत्वेन कारणत्वनिश्चयात्तादृशतत्कार्यतदा व्यभिचारसंशयस्याविरोधित्वात्, अनुकूलतर्कानवतार एव व्यभिचारसंशयाधायकस्य सन्दिग्धोपाधेर्दोषत्वादित्याहुः । 'चित्त नुकरणस्येति ' ईश्वरः पुद्गलेच्छाप्रयत्नवान् भवति, चित्तानुकरणत्वान्मुक्तात्मवदिति प्रयोगः । परेषां तु जैनानां तु, तस्य शरीरेन्द्रियाद्युत्पत्तिप्राक्कालवर्तिन आत्मनः, सशरीरस्येवेति अत्र वैधर्म्यमर्थाभ्यामिति शेषः । तत्प्रतिपक्षित्वसत्त्वाद्धेति तथा न विपक्षमिद्धयभ्युपगमाद्याभयासिद्धिरिति भावः । नेश्वर इति यद्यप्यशरीरत्वं शरीरपरिग्रहाद्यन्ताभावोऽन्यावनतत्वेन व्याप्त इति हेतोर्विरुद्धत्वं, तथाप्यात्मनिष्ठस्य शरीरपरिग्रहाभावस्य व्यसपर्यवसितस्य ग्रहान्न दोष इति बोध्यम् । 'एतेनेति ' ईश्वरऽशरीरत्वस्य प्रसाधितत्वस्यानुमानप्रदर्शनेनेत्यर्थः । कथं वाऽपाणिपादत्वप्रतिपादकं यदागमः प्रदेशान्तरे ईश्वरस्य वेदादि प्रणिनीषया ब्रह्मादिशरीरपरिग्रहं प्रतिपादयन् स्वाङ्गेरेव न विरुध्यात् । मृतापेक्षन्यायेन तस्य ब्रह्मादिशरीरपरिग्रहोपपत्तिरिति चेत्, दूराद् भ्रान्तोऽसि, भूतापेक्षस्यापि स्त्रीसवैक्रियशरीरेणास्मान्तरशरीरे भूतप्रवेशरूपस्य तदपष्टहेतुकत्वात्, अन्यथात्म विमुक्तपक्षे मर्वत्र मनसिक्षापत्तेः, तस्मादपष्टहेतुकयोरावेशपरिग्रहयोर्भेदेनेश्वरस्यापीश्वर सम्भव इति सुष्ठूक्तं श्रीहेमसू रिभिः ॥ " धर्माधर्मौ विना नाङ्गं, विनाङ्गेन मुखं कुतः ॥ मुखाद्विना न वक्तृत्वं, तच्छास्तारः परे कथम् ॥१॥" इत्यादि, यद्यावेशे आविष्टतोऽदृष्टं न हेतुः किं त्वावेशाधिकरणस्य तत्तत्पुद्गलयोरेव सुखदुःखयोरुत्पादनात् तथाऽदृष्टेनेश्वरस्य ब्रह्मादि शरीरग्रहोपपत्तिरिति चेत्, न, आवेशे आविष्टतोऽप्यदृष्टस्य तदुभयजन्योपयनिर्जरादिनिर्वाहकस्य हेतुत्वेनोभयादृष्टजन्यत्वस्य

वस्थित, अन्यथा मुक्तस्यापि कश्चिदावेशापत्तेः, किं चाविद्युत ईश्वरस्यावेशाधिकरणप्रत्यायात्माभिमतस्य प्रभावप्युपेक्षणीय
पावकभुतिविरोधोऽपि, न च तवापेक्षयव्रह्मादिशरीर वेदादिहेतावीश्वरावेशोपपत्तिः, तच्छब्दे (वे) तच्छरीरस्येव तददृष्टस्यापि
हेतुत्वात्, एतमर्यादातिक्रम च विनैव शरीरावेशं वेदाद्युच्चारेण व्यवहारं निर्वाहयेदिति न किञ्चिदेतत्, सर्वविश्ववासना चानु
पदमेव निराकरिष्याम । ईश्वरादेरपि मा भूदित्यत्र स्थित्वा प्रवर्तनार्थक्रियादीति योगः ।' अन्यथेति ' न च स्वप्नेपि
ज्ञानविशेष्यत्वं स्वजन्यव्यापारभागित्वं वा चेतनाधिष्ठितमीश्वरादावप्यविरुद्धमितीदापत्तिरत्रेति शङ्कनीयम् । कर्तृसाधिष्ठ्यस्य
स्वथा ज्ञानमात्रेणाधिष्ठितत्वासिद्धेराद्यस्य व्यापारेऽपि व्यापारान्तरापेक्षायामनवस्थापत्तेश्च द्वितीयस्य निरासादिति भावः ।
उन्मत्तकादियो(भो)जन चतुरचूर्णादिप्रयोगः, मृदादिस्तू(रू)पवैभिन्न्य सुवर्णाभिप्रायेण विचित्रां मृदादिप्रचयरचना
मित्यर्थः । तथा तदसदृष्टकृतत्वादिति तथा च तनुकरणभुवनादिकं सकर्तृकं बुद्धिमत्कर्तृकं चेत्यादावप्रयोजकाऽसत्वादिना
सिद्धसाधनमर्थान्तरं चेति भावः । ' तदभिमतेति ' एककर्तृसिद्धौ तद्गतसार्वज्ञ्यादिसिद्धेरेवाधिकरणसिद्धान्ताधीनत्वाभ्युप
गमादित्यर्थः । स्वेष्टविघातादिति कतिपयकारकप्रयोक्तृत्वासर्ववेदित्वप्रतिरुद्धशक्तिकत्वाविभुत्वसशरीरत्वादिसिद्धिप्रसङ्गादि
त्यर्थः । न च सिसृक्षतीति लाघवावतारेऽपि व्यापकत्वानवच्छेदकरूपेणानुमितेरनभ्युपगमादित्यर्थः । इतिरुक्त नेश्वर
कृतः संसार इति, एवं च तन्वादिकार्यस्य कर्तृजन्यत्वे साध्ये ज्ञानादेरेव जनकत्वेन कर्तुरजनकत्वात् बाध इति प्रत्यक्षजन्य
त्वमिच्छाजन्यत्व कृतिजन्यत्वं च पृथक् पृथक् साध्यत इति तदाभयतयेश्वरसिद्धावदोषः, निखिलोपादानगोचरप्रत्यक्षाभय
स्यान्यस्यासम्भवात्, न हि द्व्यणुकाद्युपादानगोचरप्रत्यक्षमस्मदादेः सम्भवतीति वक्ष्यमन्योक्तमप्यकिञ्चित्करं द्रष्टव्यम्, तथस्तु

स्वीयघटादावपि प्रवृत्तेः प्रत्येकं तत्तत्कुलालीयघटादिसमवायकारणोपादानप्रत्यक्षत्वेन हेतुत्वात्कार्यत्वावच्छिन्ने प्रत्यक्षत्वेन हेतुत्वे मानाभावात्, चिकीर्षाया अपि प्रत्यक्षेण हेतुत्वेनेच्छात्वेन कृतेरपि विलक्षणकृतित्वेन घटादावेव हेतुत्वेन कृतित्वेनापि कार्यत्वावच्छिन्नं प्रत्यहेतुत्वात्, न च प्रकृतावपि घटादावपि प्रत्यक्षेच्छयोरन्वयव्यतिरेकाभ्यां हेतुत्वे सिद्धे तत्कार्यतावच्छेदकं लाघवात् कार्यत्वमेव कल्प्यते, घटत्वपटत्वादीनामानन्त्यात् शरीरलाघवमपेक्ष्य सम्बन्धकृतलाघवस्य बलवत्त्वात्, कृतेरपि यदि शेषयोरिति न्यायेन सामान्यतो हेतुत्वसिद्धिरिति वाच्यम् । एवं सति शरीरत्वेन चेष्टात्वेन च हेतुत्वाभिमतशरीरचेष्टयोरपि सिद्ध्यापत्तेः । न च परमाणव एव प्रयत्नवदीश्वरात्मसंयोगजन्यचेष्टावन्त ईश्वरस्य नित्यानि शरीराणि टीकाप्रथमश्लोकव्याख्याने उदयनाचार्यैस्तथा स्वीकृतत्वात्, चेष्टाया नित्यत्वे तु मानाभावोऽनित्यचेष्टाया अपि सर्गादौ सम्भवात्, ईश्वरप्रयत्नाधीनचेष्टावत्तां सर्वेषामेव चेश्वरशरीरत्वम्, अत एव तदविषयता यथाभिव्यक्तिरिति वाच्यम्, परमाणूनां नित्येश्वरशरीरत्वे तद्गतक्रियाया अपि नित्यायाश्चेष्टाया कल्पनापत्तेः, तदविषये च सर्वत्र क्रियामात्रस्य चेष्टात्वपर्यवसाने विलक्षणचेष्टात्वजात्युच्छेदापत्तेः, सर्वशरीरावच्छिन्नविलक्षणमनःसंयोगजनकप्रयत्नवदात्मसंयोगरूपतदविषयस्वीकारे च प्रत्यात्मनियतमनोभिन्नमनःप्रवेशनेन सर्वेषामुन्मादजनकतया ईश्वरस्यापत्तेः, अन्यथावेशपदार्थाघटनात्, उपमामात्रस्य सर्वस्मिन्साधारणत्वात् सर्वात्मगुणसाधारणप्रकारत्वेन पुनरावेशप्रसक्तं नेश्वरस्य युक्तिमत् कालादिवदिति दिग् । किं च गुणस्य साश्रयत्वव्याप्तौ मानाभावादुपादानप्रत्यक्षस्य निराश्रयस्यैव सिद्धौ वेदान्तिमतसाम्राज्ये कथं नैयायिकाभिमतेश्वरसिद्धिः । किञ्चोपादानप्रत्यक्षं लौकिकमेव जनकमिति कथं तादृशप्रत्यक्षाश्रयवदीश्वरः सिद्ध्येत्, मणिकारदोषविक्षेपादिनिमित्तलौकिकविषयतायास्त्वयागे-

भावात्, यदि च प्रणिधानाद्यर्थं मनोव्यापारादौ प्राग्विधीश्वरादनुमित्यादिसाधारणं यद्धर्मावच्छिन्ने पदार्थप्रवृत्तिस्तद्धर्मा-वच्छिन्ने तत्प्रकारकज्ञानं हेतुरिति मतं, तदेश्वरे ज्ञानमात्रसिद्धावपि कथं प्रत्यक्षसिद्धिः, प्रत्यक्षत्वमेव चेन्द्रियजन्यतावच्छेदकं साक्षात्त्व तु जन्यप्रत्यक्षत्व गौरवादिति का प्रत्याशा नित्यप्रत्यक्षाभ्युपगमस्येश्वरस्य। यत्तु दीधितिकृतोक्तं घटत्वावच्छिन्ने कृतित्वेन हेतुत्वेऽपि सम्प्रदायघटाद्युत्पत्तिकाले कुलालादिकृतेरसत्त्वादीश्वरकृतिसिद्धिरिति, तदसत्, घटत्वावच्छिन्ने विजातीय कृतित्वेनैव हेतुत्वात् कृतित्वेन व्यापकधर्मेणान्यथासिद्धेरत्वात्। कथितु कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगसम्बन्धेन खण्डघटोत्पत्तिकालेऽपि सत्त्वादीश्वरकृतिसिद्धिः, न च वैशेषिकनये श्यामघटादिनाशोत्तरं रक्तघटाद्युत्पत्तिकाले प्राक्तनपरमाणु द्वयसंयोगद्व्यणुकादेर्नाशाद्वैवं सम्भवतीति वाच्यम्। पूर्वसंयोगादिध्वंसपूर्वद्व्यणुकादिध्वंसानामुत्तरसंयोगद्व्यणुकाद्यापन्नत्वात्? का लोपाधितयाऽपि जनकत्वावस्थकालेऽपि कुलालादिकृतेः स्वप्रयोज्यविजातीयसंयोगेन सत्त्वात्, अन्यथा घटत्वावच्छिन्न दण्डादि हेतुताया अपि भङ्गापत्तेः, न च दण्डादेः स्वप्रयोज्यविजातीयसंयोगेन हेतुत्वेऽपि कृतेर्लाघवाद्विशेष्यतयैव तथामुचितं, न च कुलालकृतित्वेन तथाऽस्तीति वाच्यम्। विजातीयसंयोगत्वेनापि सम्बन्धत्वे गौरवाभावात्, निमित्ताव्यभिचारकत्वाच्च स्वप्रयोज्यत्वस्य तु सम्बन्धसम्बन्धत्वादित्यादि। यत्तु महाचार्यैरुक्तं तत्तत्कार्याणां देशकालादिनियम ईश्वरेच्छात एवेति तत्सिद्धिः, वदन्ति हि पामरा अपीश्वरेच्छैव नियामिकेति तदपि स्वयदरीदस्वगृहदालतोद्भासमात्र, पामरसंवादस्य नियतिनियामकत्वेऽपि भूम्ना दर्शनात्, सा च तत्त्वान्तरं वा केवलज्ञानं वेत्यन्यदेतत्, तथाभ्युपगम्यतेष सर्वत्र नियामिकेति तु भामातिकः प्रवादः, तस्याः सकलकारणाक्षेपकत्वेन सर्वसाधारणात्। यदपि तेषां पद्य ॥

ममालोच्य क्षुद्रेष्वपि भवननाथस्य भुवने, नियोगाद्भूतानां मितममितिदेशस्थितिलयम् ॥
अये! केयं भ्रान्तिः सततमपि मीमांसनजुषां, व्यवस्थातः कार्ये जगति जगदीशापरिचय ॥१॥ इति ॥
तदुपरि मदीयानि पद्यानि ॥

अनित्ये नित्ये वा निपतितिनियमाद्वस्तुनि जनि–व्यवस्थां धर्माणां स्थितिमपि समालोच्य विशदाम् ॥
अये! केयं भ्रान्तिः सततमपि तर्कव्यसनिनां, वृथा यद्व्यापारो जगति जगदीशस्य गदितः ॥ १ ॥
यथाद्येणानादिः स च परिविशुद्धोऽपि गदितो, मलात्यन्ताभावादनु भवति शुद्धिर्गगनवत् ॥
तमेकं मन्यन्तां सरणगतिमेषामहवशा–न्निराशानां सर्वं सफलमफलं कुमहद्धुषाम् ॥ २ ॥
पदेवैतद्रूपं प्रथममथ सालम्बमपदे, तदेव ध्यानस्थं घटयति निरालम्बनसुखम् ॥
रमागौरीगङ्गायलयशरकुन्ताऽसिकलित, कथं लीलारूपं सृजयतु निराकारपदवीम् ॥ ३ ॥
अतर्क्यां लीलेशीस्यपि कपिकुलाधीतमपस–स्वभावोऽभ्रान्तस्य विदधति परीक्षां हि सुधियः ।
न पद्मानस्याद्य तदिह भगवद्रूपमपि किं, जगल्लीलाहेतुप्रभुविभमदृष्टं विजयते ॥ ४ ॥
ततो यो योगाद्यैर्बहुभिरिह गाढैरिव जलै–र्विशुद्धैः शुद्धात्माऽऽलभत परिजाः सिद्धपदवीम् ॥
निषद्यो ध्ययोऽसौ निरुपधिविशुद्धिर्भगवतो, भुपास्यस्त्वे तन्त्रं न तु विमतकर्त्रैकविभुता ॥ ५ ॥ ”
कामादीति जीव(जीवात्म)स्यावच्छेदेनायं निषेध , तेन नाभवो बाधः, तन्मयद्विशुद्धयो विश्वविश्राममावन्ता,

भेदाभावेऽक्रमनोत्पत्त्योरपि यौगपद्यमस्तु विरोधाभावात् । मानसप्रत्यक्षेऽपि चक्षुरादिज्ञानानन्तरमल्पयोगत्वेन कल्पितविक्षेपः क्रमभुवो चक्षुरादिज्ञानवत् व्यवधानप्रतिभासविभ्रमप्रतिपत्तेरसंभवात् । न च चक्षुरादिज्ञानपञ्चकस्य सहभाविनः क्रमभुवां तदनन्तरजन्मनां मानसप्रत्यक्षाणां व्यवधानेन प्रतिभासभेदप्रतिपत्तिरस्ति । तेषां क्रमभुवां क्रमभावित्वेऽपि न व्यवधानेन प्रतिभासविकल्पानां प्रतिपत्ति-रिति चेत् तत एव चक्षुरादिज्ञानानामपि विच्छेदोपलम्भनं मा भूत्, क्रमभावेऽपि विशेषाभावात् । यौगपद्ये हि स्पर्शादिप्रत्यक्षसमसंविरोधः पुरस्सरत्वात् । तेनान्यदपि क्रमभावमक्षुरादिवेदनानामुपपन्नमेव । तदनन्तरमानसज्ञानानामपि सोपयोगानां क्रमभावो निरुपयोगानां तु यौगपद्यमविरुद्धं, विषयस्यानेकान्तात्मकत्वात् । ततः सोपयोगमविभ्रान्तादि क्रमभावि स्याद्वादनयलक्षितं प्रतिपत्तव्यं, तस्य नयोपलक्षितत्वात् केवलज्ञानवत् स्याद्वादोपलक्षितत्वात् । कुत एतदिति चेत् विकलसकलविषयत्वात् तयोः 'वर्तमाने वा स्याद्वादनयसंस्कृतं प्रतिपत्तव्यं यथाक्रमभावित्वे कथम् ? तत्त्वज्ञानं स्यादक्रम, सकलविषयत्वात् । स्यात् क्रमभावि, विकलविषयत्वात् । स्यादुभयं, वस्तुमतविषयत्वात् । स्यादवक्तव्यं युगपद्वक्तुमशक्तेः ।' इत्यादि, सप्तभङ्ग्याः प्रमाणनयवशादुपपत्तेः । अथवा प्रतिपर्यायं स्याद्वादनयसंस्कृतं प्रतिपत्तव्यं, स्यात्प्रमाणं स्वार्थप्रमितिं प्रति साधकतमत्वात् स्यादप्रमाणं प्रमाणान्तरेण प्रमेयत्वात् स्वतो वा । अथवा स्यात्सत्, स्वरूपादिचतुष्टयात् स्यादसत् पररूपादिचतुष्टयात् इत्यादि योजनीयम् ॥ १०१ ॥

यस्य तत्त्वज्ञानान्तरस्यात्मनश्च, तदेवमित्यादिसकलश्लोकस्यादिविशेषणत्रयेण क्रमेणाभ्यामोत्पत्तिभ्यामसंभवदोषपरिहारः । मा भूद् बुद्धेरनेकान्तादिति बुद्धेः प्रामाण्यं प्रत्यनेकान्तादित्यर्थः । तदेव स्पष्टयति येनाकारेणेति, प्रसिद्धेत्यादि तथा च प्रमाणमपि स्वादिमूलमप्रमाणपर्यायापेक्षयेदनाप्रमाणमप्रमाणस्वरूपामान्यप्रमाणापेक्षीरन्तापेक्षणकेन धारावाहिकज्ञान

पेक्ष्य प्रामाण्यस्योभयत्र च स्वसंवेदनांशे सद्भूपेऽज्ञातत्वमित्यादौ च प्रमात्वाप्रमात्वोभयसामान्याद्नेकान्तव्यवस्था घटेति सिद्धम् । कथञ्चिन्मिथ्याप्रतिभासेऽपीति वासनाविशेषाद्यतिमत्त्वादिसंसर्गांशे मिथ्याप्रतिपत्तावपि, संवादोत्कर्षाच्च प्रामाण्यव्यवस्थितिरन्यथा नेत्यर्थः । लौकिकव्यवहारमपेक्ष्य चेदमुच्यते लोकोत्तरन्तु प्रामाण्यमनेकान्तवासनोपनीतानन्तधर्मात्मकरूपस्यग्राहित्वेन संवादादपि सम्यग्दृष्टेरिति महाभाष्यप्रसिद्धं विवेचितमध्यात्ममारादावस्माभिः ॥ यद्व यथा रूपादिदर्शने मिथो गुण इति अर्थानां निरंशत्वसिद्धरित्यर्थः । सिद्धमेयेति प्रत्यक्षस्य निर्विकल्पकत्वादित्यर्थः ॥ तत्र च रूपादिदर्शने मणिप्रदीपप्र न, परोक्षस्योपपत्तेरिति विकल्पलिङ्गानुमेयत्वादित्यर्थः । अनन्यविषयस्यास्तुच्छसामान्यगोचरत्वात्, मणिप्रदीपप्रमाण भयोरिति मणिप्रभायां प्रदीपप्रभायां चेत्यर्थः । मणिप्रभादर्शनस्य प्रामाण्यप्रसक्तावपि प्रत्यक्षेऽनुमाने चान्तर्भावसम्भवाच्च प्रमाणद्वयविभागव्याघातो भविष्यतीत्याशङ्कायामाह भाष्ये, न हि तत्प्रत्यक्षमित्यादि, स्वविषय इति दीपप्रभायां इत्यर्थः । सर्वांशे संवादस्वर्दशे प्रामाण्यमबाधमिति मत्वाऽऽह वृत्तिकृत्, तत्रेत्यादि, यत्प्रकारेण विसंवादस्तत्प्रकारेण भ्रमत्वे त्वभ्युपगम्यमाने प्रकृतेऽपि तत्तुल्यमित्याह, धावतामित्यादि, कुञ्चिकाविवरे द्वारप्रवेशविवरे, मामून्मणिप्रभायां मणिज्ञानं प्रत्यक्षम्, आनुमानिकं तद्भविष्यतीत्याशङ्कायामाह नापि लैङ्गिकमित्यादि, किं केन कृतं स्यादिति न केनचित् किञ्चिदित्यर्थः । प्रतिपक्षव्यभिचारस्येति सम्भूतापत्तिप्रदेश इत्यर्थः । य इत्थमिति, अत्र प्रयोगश्चाय, ममायं प्रतिभासो मणिसंस्थानगतान् धर्मप्रतिभासत्वात् संप्रतिपन्नप्रतिभासवदिति । स्वयमसिद्धेनेति अन्यत्रापि मणिप्रभाप्रतिभासे मणिसंस्थान विषयत्वस्यासिद्धेः पर्वतो वह्निरित्यस्येव मणिप्रभामाभर्य मणिरित्यस्य लैङ्गिकज्ञानस्यापि भ्रमरूपतायाः सर्वसिद्धत्वाच्च ।

एतेन इन्द्रियकपररूसाधारणस्मृतेरेव प्रत्यक्षमन्यानुमानमपास्तम्, अभेदानुमितेरेव निवार्यत्वात् । प्रत्यक्षत्वप्रसक्तेः प्रत्यक्षप्रमाणत्वप्रसक्तेः, सम्भवत्येवेत्यत्र संवादनैकान्त इति बोध्यः । लिङ्गज्ञानवत् धूमदर्शनानन्तरधूमज्ञानवत्, पारम्पर्येणेति अविसंवादकत्वादुपसंहारभावः ततो धूमनिर्विकल्पं ततो धूमविकल्प उत्पद्यत इत्येवमुत्पत्तिपारम्पर्यं बोध्यम् । अर्थप्रापकत्वं च लिङ्गज्ञानस्य स्वविषयप्रापणद्वारा तत्प्रतिबद्धसाध्यप्राप्तिपरम्परयेति बोध्यम् । तथा भासमानयोरपि अवस्तु सामान्यगोचरयोरपि, तथा मिथ्या, यावदप्राप्त तावद्विपर्ययमित्यन्यत्र विधेयभावे कामचारमभिप्रेत्याह भाष्यकृत्, प्रमाणमेव चेत्यादि, फलज्ञानस्यापि फलीभूतज्ञानस्यापि, प्रमाणत्वोपगमादिति व्यावहारिकप्रामाण्यव्यवस्थितेरित्यर्थः । अभिनीतिनिर्णयात्मकत्वात् निर्विकल्पकानिमित्तनीचादिनिश्चयात्मकत्वात्, अधिगमोऽपि निर्विकल्पकानन्तरसमुद्भूतो व्यवसायोऽपि, प्रायमिककल्पिको मुख्यवृत्त्या प्रमाणभूतः, धूमकेतुलैङ्गिकवदिति प्रत्यक्षनिमित्तेऽग्नौ तदनुमितिवदित्यर्थः । ज्वालादिविशेषादिति ज्वालादिविशेषस्य धूमकेतुसम्बन्धित्वेन ग्रहादेकसम्बन्धिज्ञानेऽपरसम्बन्धिस्मरणस्यौत्सर्गिकत्वादिति भावः । स्मृतेरुपयोगविशेषात् प्रमाणमिति सम्बन्धस्मरणादेर्व्याप्तिप्रत्यभिज्ञानादिफलोपयोगे प्रामाण्यमित्यर्थः । फलीभूतस्मृतेरपि याथार्थ्यं तु विषयाबाधादेव दुर्निवारं, तस्याः प्रमात्वस्यानुभवप्रमात्वपारतन्त्र्येऽपि व्याप्तिज्ञानप्रमात्वपरतन्त्रानुमितिप्रमात्ववदविरोधात्, तदेव 'साधितकमप्यन' न्यायेनायथार्थत्वाव्यवस्थितेरित्यादि व्युत्पादितमन्यत्र । 'तस्येति' तस्य सर्वोपसंहारेण व्याप्तिज्ञानादिरूपोहस्य, प्रत्यक्षानुपलम्भजन्यत्वाद्विशेषान्वयव्यतिरेकग्रहसामान्याव्यभिचारनिर्णयजन्यत्वात्, अविचारकत्वाचेति फलोपयोगे तु लाघवादिविचारस्यापि प्रवेशान्न दोष इति भावः ।

वाक्यतामिप्रायः, समभिव्याहारोऽननुभावकत्वं च, तत्राद्ययोर्ज्ञानं हेतुरन्त्यस्य तु प्रतिबन्धकाभावतया स्वरूपसत उपयोगः, अत्र शाब्दत्वे जायतामितीच्छोत्तेजिका, तथताऽऽनुपूर्वीज्ञाने सदसत्पूर्वमुत्पन्नमुत्पत्तिशाब्दबोधाजनकत्वज्ञानस्य प्रतिबन्धकत्वात् मधून्युत्तरपदविपरीतमुत्पन्नयोर्घटः कर्मत्वं घटमित्याभ्यामन्वयबोधः, इत्थं च प्रयुक्तत्वादिदोषविधुराणामपि न शाब्द बोधवैधुर्यमिति तु नव्याः। राजपदं पुरुषपदार्थान्वितराजबोधं जनयत्वित्याकारकार्यतात्पर्यग्रहहेतुत्वेनानतिप्रसङ्गोऽन्ते पदतात्पर्य प्रहहेतुत्वेनेति तु चिन्त्यम्, न चैवं मतद्वयेऽपि विशेषणान्तरविशिष्टविशेष्येण पुनरन्वयबोधसम्भवात्प्रायमिकबोधस्यैव द्वितीय बोधजनकत्वेनानुविशेषस्याप्यभावात् समासपुनरावृत्तिदोषोच्छेदापत्तिः, तत्रानपेक्षितविशेषणेन शाब्दबोधसम्भवेऽपि तच्छाब्द बोधेन रसोद्बोधविलम्बस्यैव दोषप्रयोजकतया अलङ्कारशास्त्रे व्यवस्थितत्वात्, नामविभक्तिधात्वाख्यातक्रियाकारकपदानां परस्परं विना परस्परानन्वयबोधकत्वात्तेषां मिथः साकाङ्क्षत्वं घटो नील इत्यादौ तु विशेषणविभक्तिरभेदार्थिका, नामार्थप्रकार अन्वयबोधमात्रं प्रति विशेष्यतया प्रत्ययजन्योपस्थितेर्हेतुत्वात्, यथा वह्निना सिञ्चति घटः पचतीत्यादेरपि सेककरणत्वकत्योः कालिकसम्बन्धेन वह्निघटनिष्ठत्वात् योग्यत्वापत्तिवारणाय तत्कालावच्छेदात्तसमभिव्याहृततद्धातुविभक्तेस्तत्तत्सम्बन्धेन तत्- नामार्थवत्तद्विभक्त्यर्थप्रकारकबोधहेतुत्वस्यानुगतस्य वाच्यत्वात् घटो नील इत्यादावभेदेनान्वयबोधो नानुपपन्नः। कथमत्र कस्यचिद्भेदसम्बन्धेन कस्यचिदभेदप्रकारेण बोध इति चेत्, आद्यः सपूर्वमुत्पन्नस्य अन्त्यस्त्वन्यस्येति निर्णीयते, विशेषण विभक्तेरभेदार्थकत्वकल्पने गौरवादिति। मीमांसकास्तु घटो नील इत्यादौ नील घटमानयेत्यादौ च नीलोऽस्ति घटोऽस्ति नील मानय घटमानयेत्यन्वयबोधो, न तु नामार्थानां कारकाणां च परस्परमन्वयः, विशेषणान्वितविभक्त्यर्थानपेक्षानुभवादिति न

चारणमव्यवधानेन तत्र च गतिरिति वाच्यम्। तयोच्चारस्य सतोऽप्यकिञ्चित्करत्वात्, अन्वयबोधानुकूलोपस्थितविषयधि-वत्वात्, स्वविरोधिव्यवधानाभिप्रायपूर्वकोच्चारणाव्यवधानमयोग्योपस्थितेरेव शाब्दबोधोपधायकत्वस्वीकारात्, तथा च व्यवधानाभिप्रायपूर्वकाव्यवहितोपस्थित्यनुकूलव्यापार आसत्तिरिति फलित, वस्तुत एतत्पदानन्तरं तत्पदं प्रतिसन्धास्यिति तात्पर्यमपामपि', इव श्रुतस्यापि मन्मावि, ईश्वरीय वा तत् सुलभं, न चैपमामतिप्रसङ्गस्थलासम्भवो, सप्तम्यन्तभावेन तत्व्यपादित्याद्य, तचिन्त्यम्। एकवाक्यताया अर्थतात्पर्यस्य निश्चये यथोक्तामत्तिनिश्चय विना शाब्दबोधविरम्भाभावात्, न चैकवाक्येसानेनोपाठति, सम्भूयोच्चारणस्य चिन्तामणौ पृथगुपन्यासात्, तस्मात् व्यवधानेन पृथ्या पदजन्यपदार्थोपस्थितिरासत्तिरिति प्रागुक्तमेव युक्तम्॥ तदर्थ परस्परापेक्षाभामित्यस्याकाङ्क्षादिमत्तामित्यर्थात् आकाङ्क्षादिमतां पदानां समूहो वाक्यमिति न्यायनये स्थितं, निरपेक्षपदं स्पनतिप्रयोजनं, यदि च तस्य प्रयोजनत्वे निर्बन्धः, तदा प्रकृतवाक्यस्य तम्पस्य वाक्यान्तरैकवाक्यस्य महावाक्यान्तर्गतत्वेन प्रकृतान्वये प्रकृतवाक्यस्य महावाक्यस्थपदान्तरनिरपेक्षत्वात्॥ इदं तु ध्येयम्॥ मात्रसंस्थसमनाकाङ्क्षत्वं च स्यात्तदेव व्यवस्थापनीयम्। तत्वव्यतिरेकप्रयुक्तान्वयानुमायकत्वरूपाकाङ्क्षापक्ष व्याक-रणसंस्कृतपुरुषीयत्वेन निरूढान्वयबाधविजयप्य समभिव्याहाररूपाकाङ्क्षापक्ष च तत्तदानुपूर्वीज्ञान व्याकरणसंस्कृतपुरुषीय शाब्दबोधजनकत्वज्ञानहेतुत्वोक्त्या पट: कर्मत्वमित्यादे: सम्प्रत्यमं प्रति गाकाङ्क्षत्वपदाऽपि दण्ड: घटाभिस्वतो भिया विषयस्य नामार्थविशेष्यक एव बोधा, भाष्यिकस्य तु धात्वर्थविशेष्यक इति तत्तदन्वयबोध गाकाङ्क्षपदम्याग्यतरं प्रति निराकाङ्क्ष-त्वापारत्वात्, न च तत्सगम्प्रत्ययीयतजाकारजतारजबोधे शाब्दसम्पूरणर्घटतुल्याकाङ्क्षाभावात्मकत्वाविरोध। व्यभिचारेण भिन्न

भिन्नव्युत्पत्तेरेवासिद्धे, तत्तद्व्युत्पत्तिवैशिष्ट्यस्य विपरीतव्युत्पत्तीयबोधसाधारण्येनातिप्रसञ्जकत्वादुभयव्युत्पन्नयोरुभयोरुक्त
वाक्याभिप्रायत उभयबोधापत्तेश्च । न चैकनयाभिमतव्युत्पत्तौ तदितरनयाभिमतशाब्दबोधजनकस्याभावज्ञानस्य प्रतिबन्धक
त्वाद्दोषः, उभयव्युत्पत्तिसमाजे परस्परप्रतिबन्धेन कस्यापि बोधस्यानापत्तेः । कथं चैवं नैयायिकः शिष्येषु वैयाकरणव्यु
त्पत्तिमादधानो देवदत्तः पचति एकदेवदत्ताभिन्नाश्रयकपाकानुकूला भावनेति विवृणुयात्, आहार्याकाङ्क्षाज्ञानेन तथा
बुद्ध्वा परं तथा बोधयितुं नानौचितीति चेत्, सत्यम्, आहार्यत्वस्यापि परस्परमविनिगमेन तथा तथा साकाङ्क्षनिराकाङ्क्षत्वा-
द्युपपत्तेः । एतेनैकनययुक्तस्याऽपरनयाप्रामाण्यग्रहोऽपि व्याख्यातः, अनेनैवाभिप्रायेण " णिययवयणिज्जसच्चा " इत्या
दिना सम्यगसौ नयवाक्यानां कार्त्स्न्येन साकाङ्क्षत्वानाकाङ्क्षत्वभजना समर्थिता । एवं योग्यत्वमयोग्यत्वमासत्त्यनासत्त्वं
न देशकालादिभेदेन तात्पर्यविभजनं च भजनीयं, वस्तुतः समभिव्याहाररूपाकाङ्क्षा वाक्यप्रकल्प्यच्छेदकत्वेनैवोपयुज्यते
न पृथक्, घटावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नप्रकारतानिरूपितामृत्वावच्छिन्नविशेष्यताकघटविशेषकत्वमस्त्वविशेष्य
कशाब्दबोधजनकत्वप्रकारताज्ञानत्वादिना तादृशशाब्दबोधहेतुताकल्पनादावश्यकव्यवहारेण वाक्य एव शक्तिसिद्धेरनन्तर
मायापोद्धापकमेव पदशक्तिग्रहस्य च तत्रैवोपकारात्तत्त्वम् अनेकशक्तिविशेषकल्पनाविशेषपदेनैव शक्तिलक्षणाभेदानुच्छेदात्,
अन्यथेश्वरेच्छारूपशक्तिवादेऽप्यगतेः, केवलपदस्याननुभावकतापक्ष एव हि " पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते "
इत्युक्तं युज्यत इत्युक्तं प्राक्, न चैवं द्रव्यनिक्षेपप्रयुक्तघटपदघटितवाक्याद्घटनिक्षेपविषयशाब्दबोधापत्तिः, स्वप्रयोजकानि
शेषप्रयुक्तवाक्यशक्तिग्रहद्वारैव पदशक्तिग्रहस्य हेतुत्वात्, द्वारद्वारिभावेन चान्यथासिद्धेरयोगात्, पदार्थोपस्थितिद्वारा पद

मत्राभावशाब्दबोधे स्वार्थयोः संसर्गाभावनिश्चयोऽनुगुण एव, अन्यथा विशिष्टनिषेधप्रतीतावपि ततो भ्रमस्यापत्तेः, गाहस्पदा
नादितोऽपि शाब्दबोधश्चेत्, आहार्य एव, नो चेद्, दुष्टवक्त्रभिप्रायसूचकत्वेनैव तस्य बोधजनकत्वम्, सत्यादित्वं वाचां वन
पदसत्यादन्यतरत्वेनैव, द्रव्यभावभाषात्वं च तासां चतुर्विधद्रव्यपरिणतिसाभित्य, श्रुतभावभाषात्वं च तिसृणां फलीभूत-
श्रुतोपयोगापेक्षया भिन्नोपयोगाभावेन तृतीयस्या अत्रानधिकारात्, चारित्रभावभाषात्वं च प्रथमान्तिमयोरेव यस्याचारविहि
तत्वेन चारित्रोत्कर्षकत्वादित्यादिविस्तरो भाषारहस्ये इति कृतं प्रसङ्गेन। प्रकृतं प्रस्तुमः—न पुनराकाङ्क्षाशाब्द इत्यादि,
क्षेपपदनिराकरणं प्रायः सुगमम्। क्रियास्फोटवदिति पूर्वापरीभूतावयवास्वाभिन्नक्रमासु क्रियास्वेकः क्रियास्फोटो यथा
नास्ति तथा क्रमवत्पदसमुदाये वाक्यस्फोटोऽपि, एकत्वप्रतीतेर्भ्रमप्रत्यासत्त्यैवोपपत्तेरिति। यथोक्तपदानुसंकलितरूपस्येति
परस्परापेक्षनिरपेक्षपदानुस्मरणरूपस्येत्यर्थः। श्रुतिर्मानस्तुल्यैवानुसंहतिः स्मरणमित्यनयोः पक्षयोर्भेदः। तावतोदाहरणोप-
नयमात्रेण, अर्थं यस्येति प्रकृतसाध्यं निश्चिनोति, किमितीति शेष निगमनं, किमित्याकाङ्क्षति—साधनमात्रेणार्थसिद्धौ
तत्रेष्टसाधनताज्ञानाभावेनाकाङ्क्षाभावात् यस्य च फलीभूतशाब्दबोधेच्छया निगमनशब्द एवाकाङ्क्षा तस्य तच्छब्दाध्याहारेणैव
शाब्दबोध इति भावः। सत्यभामादिपदवदिति यथा भामापदेन सत्यभामापदं स्मर्यते तथा प्रकरणादिना पदान्तरमिति
भावः। यत्र च प्रकरणादिनाऽखिल एव वाक्यार्थो ज्ञायते
तद्सापेक्षभूयमाणपदसमुदायस्य न निराकाङ्क्षत्वस्याभाव इति भावः। अत एव न चेष्टादेः प्रमाणान्तरत्वम्, अवश्यकल्प्य
चेष्टादिना वा, तत्र तादृशवाक्यकल्पनयैव शाब्दव्यवहारः सङ्गच्छते, अत एव न चेष्टादेः प्रमाणान्तरत्वम्, अवश्यकल्प्य
शब्दमुखनिरीक्षकत्वादिति दिग्। इत्युक्तः (क) भागिति "स्वन्मतामृतभाषानाम्" इत्यादिकारिकाव्याख्यानावसरे

न हि विधिरूपान्तरविकलमित्यादिना, तत्र क्वचित्प्रयुज्यमान इत्यादि, क्वचिच्च जीवादिपदसमीप प्रयुज्यमान स्यात्पदस्याद्विशेषणतया जीवादिपदसमभिव्याहृततया, प्रकृतार्थतत्त्वं सर्वथैकान्तप्रतिपक्षजीवादिपदार्थम्, अवयवेन जीवादिपदद्वारेण, सूचयति लक्षयति, तथा च जीवादिसामान्यविशेषवाचकस्य जीवादिपदस्य नित्यानित्याद्यनेकान्तात्मक-जीवादिविशेषे लक्षणा तात्पर्यग्राहकत्वमेव स्याच्छब्दस्य द्योतकत्वमिति भावः। एवकारादिवदिति यथा पाण्डुर एवेत्यादौ पाण्डुरादिपदस्य पाण्डुरादन्यत्वव्यवच्छेदे लाक्षणिकतायां एवकारस्य च तत्र तात्पर्यग्राहकतायाः सम्प्रदायसिद्धत्वादिति भाव। न कश्चिद्दोष इति सम्भूयोच्चारणेन स्यात्पदजीवादिपदाभ्यां मिलित्वाऽनेकान्तात्मकजीवादितत्त्वबोधनोपपत्तेरिति भावः। तथा च गम्यं प्रति विशेषणमित्यस्य समुदायशक्तिमन्यबोधे जीवादिपदस्य तुल्यकक्षतया सहकारीत्यर्थः। विशेषणमित्यनन्तरं च चकारोऽध्याहृत्य योजनीयः, तेन पक्षद्वयाभिव्यक्तिर्भवति, यद्वाऽनेकान्तद्योतीत्यस्यानेकान्तं प्रत्यसामान्यशक्तिविषयं द्योतयत्यनुभावयतीत्येषोऽर्थः, स चापरेषां घटादिपदस्य सामान्यव्युत्पत्त्यनुरोधेन कार्यत्वान्वितघटादौ शक्तिग्रहेऽपि तत्र कार्यत्वान्वितघटाद्यनुभवे कार्यतावाचकपदसमभिव्याहारापेक्षा, आनुमानिकाया शक्तेस्तदपेक्षत्वात् स्मारिका च जागर्तीति तस्माद्घटत्वादिमात्रस्मरणमेवेति कल्पशक्तिवादः तथाऽस्माकं नित्यानित्याद्यनेकान्तकोटीकरणं विना व्यवहारमात्रस्याघोमाच्छब्दत्वावच्छेदेन नित्यानित्याद्यनेकान्तात्मक एव शक्तिग्रहस्तावद्व्युत्पत्त्यनुरोधेन जीवादिपदस्यापि नित्यानित्याद्यनेकान्तात्मकजीवाद्यर्थ एव शक्तिर्गृह्यत इत्यानुमानिका शक्तिः, तथाऽनुभवजननेऽनेकान्तवाचकपदमपेक्षत एव स्मारिका तु नति केवलजीवादिपदाज्जीवाद्यर्थोपस्थितिमात्रम्, अनेकान्तात्मकजीवाद्यर्थानुभवस्तु स्यात्पदसंयोगादित्येतत्पक्षपरिष्कारः।

न चैवं मीमांसकमतानुप्रवेशः, मननपात्मक भगवत्प्रवचने कश्चिन्मीमांसकमतोपग्रहस्याप्यदुष्टत्वात्, सिद्धान्तप्रामाण्यस्यी

न्यरेमेव [ स्याच्छब्दो लिङाद्यर्थव्यतिरिक्तार्थप्रतिपादकजीवादिपदसमभिव्याहृतस्यास्पदम ]नेकान्तं द्योतयति औपसन्दानिक्या

शक्त्या द्योतयति यः स तथेति द्वितीयोऽर्थः, यथा च स्याच्छब्दोपरजी [ वादिपदप्रतिपाद्या ]नेकान्तात्मकजीवाद्यर्थे विविच्य

शक्तिस्वीकारादौपसन्दानिकी शक्तिरेवात्र द्योतनमिति भावः। उभयत्रापि गम्यं प्रति विशेषणमित्यस्य पदान्तरबोध्य

बोधने सहकारीत्यर्थं, तदाह, सूचकत्वपक्षेऽपीति, अपिर्वाचकत्वपक्षं समुच्चिनोति, तद्बुद्धेरपि तथाभावादिति स्यादस्तीत्या

तदादिवत् स्याच्छब्दस्य स्वरूपेण बुद्धिविषयतावच्छेदकावच्छिन्नेऽपि शक्ति, तद्बोधकतया भेदिरूपादिति स्यादस्तीत्या

दायस्तित्वावच्छेदकत्वद्रव्यक्षेत्रकालभावादीनामपि ततो नासाधूर्येणानुपस्थितिरिति ध्येयम्। धर्मिवाचकपदसमभिव्याहृतं

स्यात्पदमनेकान्तात्मकत्वद्योतकं धर्मवाचकपदसमभिव्याहृतं तु ततस्तद्द्रव्यक्षेत्रकालाद्यवच्छेदकस्फोरकं सकलादेशमहिम्ना

तु प्रकृतधर्मे स्वेतरानन्तधर्मात्मकत्वस्य प्रकारतया प्रकृतधर्मस्य स्वस्वेतरानन्तधर्मात्मकत्वसम्बन्धेन धर्मिण्यन्वयाभ्युपगमात्

न काचिदनुपपत्तिरिति भवेयं स्वसमयव्युत्पत्तिशालिभिः ॥ १०३ ॥

ननु च कथंचिदित्यादिसम्भाव्यपि भवत्येवानेकान्तार्थप्रतिपत्तिः ?, सत्यं, भवति, तस्य स्याद्वचनपर्यायत्वात्। तथा हि,—

**स्याद्वादः सर्वथैकान्त-त्यागात् किंवृत्तचिद्विधि ॥ सप्तभङ्गनयापेक्षो, हेयादेयविशेषक ॥१०४॥**

किमो वृत्त किंवृत्तः। स चासौ चिद्विधिश्चेति कथंचिदित्यादिः किंवृत्तचिद्विधिः स्याद्वादपर्यायः। सोयमनेकान्तमभिप्रेत्य

सप्तभङ्गनयापेक्षः स्वभावपरभावाभ्यां सदसदादिव्यवस्थां प्रतिपादयति। के पुनः सप्तभङ्गाः के वा नयाः ? सप्तभङ्गी प्रोक्ता पूर्वमेव।

द्रव्यार्थिकपर्यायार्थिकप्रविभागवशान्नैगमादयः शब्दार्थनया बहुविकल्पा मूलनयद्वयशुद्ध्यशुद्धिभ्यां, शास्त्रान्तरे प्रोक्ता इति संबन्धः। द्रव्यार्थिकप्रविभागाद्धि नैगमसंग्रहव्यवहाराः। पर्यायार्थिकप्रविभागादृजुसूत्रादयः। तत्र ऋजुसूत्रपर्यन्ताश्चत्वारोऽर्थनयाः, तेषामर्थप्रधानत्वात्। शब्दाद्यास्त्रयः शब्दनयाः शब्दप्रधानत्वात्। तत्र मूलनयस्य द्रव्यार्थिकस्य शुद्ध्या संग्रहः, सकलोपाधिरहिततया शुद्धस्य सन्मात्रस्य विषयीकरणात् एकत्वेन सर्वस्य संग्रहणात्। तस्यैवाशुद्ध्या व्यवहारः, संग्रहगृहीतानामर्थानां विधिपूर्वकमवहरणात्, द्रव्यत्वादिविशेषणतया तस्याशुद्धस्य स्वीकरणात् यत्सत्तद्द्रव्यं गुणो वेत्यादिवत्। एवं नैगमोऽप्यशुद्ध्या प्रवर्तते, सोपाधिवस्तुविषयत्वात्। स हि त्रेधा प्रवर्तते द्रव्ययोः पर्याययोर्द्रव्यपर्याययोर्वा गुणप्रधानभावेन विवक्षायां नैगमत्वात्, नैकगमो नैगम इति निर्वचनात्। तत्र द्रव्यनैगमो द्वेधा—शुद्धद्रव्यनैगमोऽशुद्धद्रव्यनैगमश्चेति। पर्यायनैगमस्त्रेधा—अर्थपर्याययोर्व्यञ्जनपर्याययोरर्थव्यञ्जनपर्याययोश्च नैगम इति। अर्थपर्यायनैगमस्त्रेधा ज्ञानार्थपर्याययोर्ज्ञेयार्थपर्याययोर्ज्ञानज्ञेयार्थपर्याययोश्चेति। व्यञ्जनपर्यायनैगमः षोढा—शब्दव्यञ्जनपर्याययोः समभिरूढव्यञ्जनपर्याययोरेवंभूतव्यञ्जनपर्याययोः शब्दसमभिरूढव्यञ्जनपर्याययोः शब्दैवंभूतव्यञ्जनपर्याययोः समभिरूढैवंभूतव्यञ्जनपर्याययोश्चेति। अर्थव्यञ्जनपर्यायनैगमस्त्रेधा ऋजुसूत्रशब्दयोः ऋजुसूत्रसमभिरूढयोः ऋजुसूत्रैवंभूतयोश्चेति। द्रव्यपर्यायनैगमोऽष्टधा शुद्धद्रव्यर्जुसूत्रयोः शुद्धद्रव्यशब्दयोः शुद्धद्रव्यसमभिरूढयोः शुद्धद्रव्यैवंभूतयोश्च, तथाऽशुद्धद्रव्यर्जुसूत्रयोरशुद्धद्रव्यशब्दयोरशुद्धद्रव्यसमभिरूढयोरशुद्धद्रव्यैवंभूतयोश्चेति। सोऽयमनयाविरोधेनोदाहार्यम्। तथा पर्यायार्थिकस्य मूलनयस्याशुद्ध्या तावदृजुसूत्रः, तस्य कालकारकलिङ्गभेदेनाप्यभेदात्। शुद्ध्या शब्दनयस्य कालादिभेदेन भेदात्। शुद्धतरया समभिरूढनयस्य पर्यायभेदेनापि भेदात्। शुद्धतमया एवंभूतस्य क्रियाभेदेनापि भेदात्॥ इति मूलनयद्वयशुद्ध्यशुद्धिभ्यां बहुविकल्पा नया नयज्ञैः प्रतिपत्तव्याः। पूर्वपूर्वो महाविषया

वाक्स्वभावोन्यवागर्थ—प्रतिषेधनिरङ्कुशः ॥ आह च स्वार्थसामान्यं, तादृग् वाच्यं खपुष्पवत् ॥१११॥

वाक्स्वभावोयं येन स्वार्थसामान्यं प्रतिपादयन्ती तदपरं निराकरोति न पुनस्तत्प्रतिपादयन्ती, स्वार्थसामान्यप्रतिपादमवश्यम्भावि । स्वभावोयं येन स्वार्थसामान्यं प्रतिपादयन्ती तदपरं निराकरोति न पुनस्तत्प्रतिपादयन्ती, कूर्मरोमादिवत् । न खलु सामान्यं विशेषपरि निराकरणयोरन्यतरापायेऽनुपलम्भनविज्ञापनात् । इदंतया नेदंतया वा न प्रतीयेत तदर्थः कूर्मरोमादिवत् । न खलु सामान्यं विशेषपरि हारेण विशेषो वा सामान्यपरिहारेण कचिदुपलभामहे । अनुपलभमानाश्च कथं स्वं परं वा यथाभिनिवेशेन विप्रलभामहे, विध्ये कान्तवदन्यापोहैकान्तस्य प्रागेव व्यासेन निरस्तत्वात् ॥ १११ ॥ भूयोप्यन्यापोहवादिनमाशङ्क्य निराकुर्वते—

सामान्यवाग् विशेषे चे—न्न शब्दार्थो मृषा हि सा ॥ अभिप्रेतविशेषाप्ते, स्यात्कार सत्यलाञ्छन ॥११२॥

अस्तीति सत्सामान्यवाग् केवलमभावविच्छेदात् विशेषमपोहमाहेति चेत्, क पुनरपोहः ? किमन्यव्यावृत्तिरुत यथा विकल्पः ? परतो व्यावृत्तिरभावोन्यापोह इष्यते इति चेत् कथमेवं सत्यभावं प्रतिपादयति ? भावं न प्रतिपादयतीत्यनुक्तसमं न स्यात् ? ततो नान्यापोहः वाक्यस्योन्यापोहोस्तु मिथ्याभिनिवेशादिति चेत्, न चैतस्य प्रतिपादकं मिथ्याविकल्पहेतुत्वादपलीकवचनवत् । ततो नान्यापोहः सम्यार्थः सिद्ध्यति, येन तत्र प्रवर्तमानास्तीत्यादिसामान्यवाग् मृषैव न स्यात् । ततः स्यात्कारः सत्यलाञ्छनो मन्तव्यः स्वाभिप्रेतार्थे विशेषप्राप्तेः । सर्वो हि प्रवर्तमानः कुतश्चित्तनाम् कचित्स्वरूपादिना सत्त्वमभिप्रेतमर्थं प्राप्नोति, न पररूपादिनानभिप्रेतं, प्रवृत्तिवै पर्यात्, स्वरूपेणेव पररूपेणापि सत्त्वे सर्वस्याभिप्रेतत्वप्रसङ्गात्, परात्मनेव स्वात्मनाप्यसत्त्वे सर्वस्याभिप्रेतत्वाभावात् स्वयमभिप्रेत स्याप्यनभिप्रेतत्वप्रसङ्गेन ॥ ११२ ॥ ततः स्याद्वाद एव सत्यलाञ्छनो न वादान्तरमित्युपसंहारयति भगवान् समन्तभद्रस्वामी ।

विधेयमीप्सितार्थाङ्ग, प्रतिषेध्याविरोधि यत् ॥ तथैवादेयहेयत्व—मिति स्याद्वादसंस्थितिः ॥ ११३ ॥

स्यात्सिद्धस्य प्रतिषेधायोगात् स्व एव संज्ञिनः प्रतिषेधो नास्ति इत्यस्याप्यविरोधात्, सम्यगेकान्ते प्रसिद्धस्य रूपस्य सापेक्षस्य निर पेक्षत्वेनारोपितस्य कल्पितस्य प्रतिषेधात्, 'सर्वथा तदर्थक्रियाभावात्' इति हेतुप्रयोगोपपत्तिरूपत्वात्। गगनकुसुमादिवदिति दृष्टान्तत्वं चाप्यसाधनात्वेऽस्य गगनकुसुमादेरन्यथाभावस्य परैरेकान्तवस्तुरूपत्वसर्वथार्थक्रियाभावरहितत्वयोरनिष्टेः । इतीदमपि प्रेक्षः साधनता- क्षमम् । विशेषण पुनर्नास्ति सर्वथान्यः सर्वव्यापारविरोधप्रसङ्गात्सर्वथान्यत्वात् । एतेन विशेषतोऽनेकान्तात्मकः परिणाम्यात्मार्थक्रिया- करित्वात् प्रधानपरिणामोपदर्शितम् । इति विधिना प्रतिषेधेन वा वस्तुतत्त्व नियम्येत तथान्यथा च तस्यापरस्वभावसमर्थनात् । अन्यथा तद्विशिष्टमर्थतत्त्वं विशेष्यमेव न स्याद्विधेः प्रतिषेधरहितस्य प्रतिषेधस्य च विधिरहितस्य विशेषणत्वनिराकरणात् तदुभयरहि- तस्य च विशेष्यत्वविरोधात् तदुपपत्तेः । एतेन विधिप्रतिषेधयोर्गुणप्रधानभावेन सदसदादिवाक्येषु इत्यतिरिक्तं व्यवतिष्ठते । ततो न भेदे योजनात्वं येन सप्तभङ्गीविधिप्रतिषेधतो न स्यात् ॥१०९॥ विधिनैव वस्तुतत्त्वे वाक्यं नियमयति सर्वथेत्येकान्ते दूषणमुपदर्शयन्ति-

## तदतद्वस्तु वागेषा, तदेवेत्यनुशासती ॥ न सत्या स्यान्मृषावाक्यैः, कथं तत्त्वार्थदेशना ॥ ११० ॥

प्रत्यक्षादिप्रमाणविषयभूतं विरुद्धधर्माध्यासप्रसक्तमपि तत्त्वं वस्तु प्रमाणं, तथैकरूपं प्रत्यक्षेणापि तदतद्रूपतयैव प्रतीतेः । यदुक्तं—'विरुद्धमपि संसिद्धं, तदतद्रूपवेदनम् । यदीदं स्वयमर्थेभ्यो, रोचते तत्र के वयम् ॥ १ ॥' इति । तत्र तदेवेत्येकान्तेन प्रतिपादयन्ती मिथ्यैव भारती विध्येकान्ते प्रतिषेधस्यान्यथाभावस्येष्टस्यानभिधानात् तदभिधाने वा विध्येकान्तप्रतिपादनविरोधात् । न च मृषावाक्यैस्तत्त्वार्थदेशना युक्तिमती । इति कथमनपायैरसमम् । इत्येकान्ते वाक्यार्थोऽनुपपत्तिरापद्यते ॥ ११० ॥

प्रतिषेधमुखेनैवार्थे वाक्यं नियमयतीत्येकान्तोऽपि न श्रेयानिति प्रतिपादयन्ति—

च सूरयः प्राहुरन्ति—

इतीयमाप्तमीमांसा, विहिता हितमिच्छताम् ॥ सम्यग्मिथ्योपदेशार्थ-विशेषप्रतिपत्तये ॥ ११४ ॥

॥ इति श्रीसमन्तभद्राचार्यविनिर्मितयमाप्तमीमांसा ॥

इति देवागमाख्ये स्वोक्तपरिच्छेदे शास्त्रे ( स्वेनोक्ताः परिच्छेदा यस्य यस्मिन्वा तत् स्वोक्तपरिच्छेदमिति ग्राह्यं, तत्र ) विहितेयमाप्त मीमांसा सर्वज्ञविशेषपरीक्षा हितमिच्छतां निःश्रेयसकामिनां, मुख्यतो निःश्रेयसस्यैव हितत्वात् तत्कारणत्वेन रत्नत्रयस्य च हितत्व घटनात् तदिच्छतामेव न पुनस्तदनिच्छतामभव्यानां, तदनुपयोगात् । तत्त्वेतरपरीक्षां प्रति भव्यानामेव नियताधिकृतिः, तथा मोक्ष कारणानुष्ठानात् मोक्षप्राप्त्युपपत्तेः । सम्यग्मिथ्योपदेशार्थविशेषप्रतिपत्तये पुनराप्तमीमांसा भगवतामाचार्याणां परहितसंपादनप्रवणहृदयत्वात् दर्शनविशुद्धिप्रवचनवात्सल्यमार्गप्रभावनापरत्वाच्च । ततः परमार्हन्त्यलक्ष्मीपरिसमाप्तेः स्वार्थसंपत्तिसिद्धिः । सम्यग्दर्शनज्ञान चारित्राणि मोक्षमार्ग इति सम्यगुपदेशः तदन्यतमापाये मोक्षस्यानुपपत्तेः समर्थनात् । ' ज्ञानेन चापवर्गः ' इत्यादिर्मिथ्योपदेशः, तस्य मोक्षप्रति कूलत्वसाधनात् । तयोरर्थविशेषः सत्येतरविषयभेदः सम्यग्दर्शनादिमिथ्यादर्शनादिप्रयोजनभेदो वा तज्ज्ञानादिविशेषो वा मोक्ष संसारसिद्धिभेदो वा । तस्य प्रतिपत्तिरुपादेयत्वेन हेयत्वेन च प्रत्यासमध्यवसायः समाचरणं चोच्यते । तस्यै सम्यग्मिथ्योपदेशार्थवि शेषप्रतिपत्तये । शास्त्रारम्भेऽभिष्टुतस्याप्तस्य मोक्षमार्गप्रणेतृतया कर्मभूभृद्भेतृतया विश्वतत्त्वानां ज्ञातृतया च भगवदर्हत्सर्वज्ञस्यैवान्य योगव्यवच्छेदेन व्यवस्थापनपरा परीक्षेयं विहिता । इति स्वाभिमतार्थनिवेदनमाचार्याणामार्थनिर्वाहं प्रतिपत्तव्यम् ॥ ११४ ॥

अत्र शास्त्रपरिसमाप्तौ केचिदिदं मङ्गलवचनमनुमन्यन्ते,—

जयति जगति क्लेशावेशप्रपञ्चहिमांशुमान्, विहतविषमैकान्तध्वान्तप्रमाणनयांशुमान् ॥
यतिपतिरजो यस्याधृष्यान्मताम्बुनिधेर्लवान्, स्वमतमतयस्तीर्थ्या नाना परे समुपासते ॥११५॥

श्रीमदकलङ्कदेवाः पुनरिदं वदन्ति— ( स्वमाप्यपरिसमाप्तिमङ्गलं )

श्रीवर्धमानमकलङ्कमनिन्द्यवन्द्य—पादारविन्दयुगलं प्रणिपत्य मूर्ध्ना ॥
भव्यैकलोकनयनं परिपालयन्तं, स्याद्वादवर्त्म परिणौमि समन्तभद्रम् ॥ १ ॥ इति ॥

॥ इत्याप्तमीमांसालङ्कृतौ दशमः परिच्छेदः ॥

परापरगुरुप्रवाहगुणगणसंस्तवस्य मङ्गलस्य प्रसिद्धेर्वयं तु स्वभक्तिवशादेवं निवेदयामः—

येनाशेषकुनीतिवृत्तिसरितः प्रेक्षावतां शोषिताः, यद्वाचोऽप्यकलङ्कनीतिरुचिरास्तत्त्वार्थसार्थद्युतः ॥
स श्रीस्वामिसमन्तभद्रयतिभृद् भूयाद्विभुर्भानुमान्, विद्यानन्दघनप्रदोऽनघधियां स्याद्वादमार्गाग्रणीः ॥१॥
श्रीमदकलङ्कशशधर—कुलविद्यानन्दसम्भवा भूयात् । गुरुमीमांसालङ्कृति—रष्टसहस्री सतामृद्ध्यै ॥२॥
श्रीरसेनाख्यमोक्षगे, चारुगुणानर्घ्यरत्नसिन्धुगिरिसततम् ॥
सारतरात्मध्यानगे, मारमदाम्भोदपवनगिरिगह्वराषि तु ॥ ३ ॥
कष्टसहस्री सिद्धा, साष्टसहस्रीयमत्र मे पुष्यात् ॥ शश्वदभीष्टसहस्री, कुमारसेनोक्तिवर्धमानार्था ॥ ४ ॥

॥ इति श्रीमदकलङ्कदेवप्रणीत–भाष्योपबृंहिता श्रीविद्यानन्दसूरिसन्दृब्धेयमष्टसहस्रीवृत्तिः ॥

[ साक्षात्केवलज्ञान इत्यादि ॥ १०५ ॥ सधर्मणैव साध्यस्येत्यादि ॥ १०६ ॥ नयोपनयैकान्तानामित्यादि ॥ १०७ ॥ मिथ्यासमूहो मिथ्या चेदित्यादि ॥ १०८ ॥ नियम्यतेऽर्थो वाक्येनेत्यादि ॥ १०९ ॥ तदतद्वस्तुवागेषेत्यादि ॥ ११० ॥ वाक्स्वभावोऽन्यवागर्थेत्यादि ॥ १११ ॥ सामान्यवाग्विशेषे चेदित्यादि ॥ ११२ ॥ विधेयमीप्सितार्थाङ्गमित्यादि ॥ ११३ ॥ सर्वं निगदसिद्धम् ॥ ]

वक्तव्यमेव किल यत्तदशेषमुक्त–मेतावतैव यदि चेतयते न कोऽपि ॥
व्यामोहजालमतिदुस्तरमेव नूनं, निश्चेतनस्य वचसामतिविस्तरेऽपि ॥ १ ॥
विशुद्धिसंक्लेशमपुण्यपापे, प्रतिक्रिया यत्र नियम्यते नो ॥
ज्ञानेऽन्यहेतुश्च जिनप्रसादा–द्विना जिनाज्ञा मम सा प्रमाणम् ॥ २ ॥

॥ इति श्रीमदकब्बरसुरत्राणप्रदत्तजगद्गुरुबिरुदधारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्यमहोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंस पंडितश्रीलाभविजयशिष्याग्रेसरपंडितश्रीजीतविजयगणि सतीर्थ्यालङ्कारपंडितश्रीनयविजयगणिचरणकमलचञ्चरीकेण पंडितश्रीपद्मविजयगणिसहोदरेण महोपाध्यायश्रीयशोविजयगणिना विरचिते अष्टसहस्रीतात्पर्यविवरणे दशमः परिच्छेदः ॥

श्रीमदकब्बरसुरत्राणप्रदत्तजगद्गुरुविरुदधारकभट्टारकश्रीहीरविजयसूरीश्वरशिष्यमुख्य
महोपाध्यायश्रीकल्याणविजयगणिशिष्यावतंस-पण्डितश्रीलाभविजयगणिशिष्याग्रेसर-प
ण्डितश्रीजीतविजयगणिसतीर्थ्यालंकार-पण्डितश्रीनयविजयगणिचरणकमलचञ्चरीकेण
पण्डितश्रीपद्मविजयगणिसहोदरेण गङ्गोपकण्ठकाशीस्थविद्वन्मण्डलीप्रदत्तन्यायविशार
द-पद शतग्रन्थग्रथनार्जितन्यायाचार्योपपदोपशोभितेन भव्यसत्त्वोपकृतिप्रणीतरहस्य
पदोत्तराष्टोत्तरशतसंख्यशास्त्राद्यनेकलक्षप्रमाणसंस्कृतप्राकृतभाषाबद्धगद्यपद्यमय
ग्रन्थकुसुममालामालाकारेण महोपाध्यायश्रीयशोविजयगणिना सन्दृब्धमिदम्–

॥ श्रीअष्टसहस्रीतात्पर्यविवरणं सम्पूर्णम् ॥